योगतन्त्र-ग्रन्थमाला

[ ६ ]

# तन्त्रसंग्रहः

[ तृतीयो भागः ]




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

योगतन्त्र-ग्रन्थमाला

[ ६ ]

# तन्त्रसंग्रहः

[ तृतीयो भागः ]



सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

# YOGATANTRA-GRANTHAMĀLĀ

[Vol. 6]

# TANTRASAṄGRAHA

[ Part III ]

Edited by

**Dr. RĀMAPRASĀDA TRIPĀṬHĪ**

Ex-Head of the Dept. of Yogatantra

Sampurnanand Sanskrit Vishvavidyalaya




Chief Editor of the Granthamālā

DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ, 'VĀGĪŚA ŚASTRĪ'

Director, Research Institute,

Sampurnanand Sanskrit Vishvavidyalaya,

VARANASI

1979

योगतन्त्र-ग्रन्थमाला
[ ६ ]

# तन्त्रसंग्रहः

[ तृतीयो भागः ]

सम्पादकः
डॉ० रामप्रसादत्रिपाठी
योगतन्त्रविभागाध्यक्षचरः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य




ग्रन्थमालाया मुख्यसम्पादकः
डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
अनुसन्धानसंस्थाननिदेशकः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणस्याम्
२०३६ तमे वैक्रमाब्दे १९०१ तमे शकाब्दे १९७९ तमे खैस्ताब्दे

प्रकाशकः—
अनुसन्धानसंस्थान-निदेशकः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य,
वाराणसी ।

प्राप्तिस्थानम्—
**प्रकाशनविभागः**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,
वाराणसी-२२१००२.

**प्रथमं संस्करणम् : ५०० प्रतिरूपाणि**
**मूल्यम् : ६२-२० रूप्यकाणि**

मुद्रकः—
**घनश्याम उपाध्यायः**
व्यवस्थापकः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयमुद्रणालयस्य
वाराणसी.

# आद्यमावेद्यम्

तन्त्रशब्दो यद्यपि बहुष्वर्थेषु प्रयुज्यते, तथापीह १—श्रुतिशाखाविशेषः, २—शिवोक्तशास्त्रं चेत्यर्थद्वयं संगच्छते। अन्यतमो भेदः कल्पस्य तन्त्राख्यः—

**कल्पश्चतुर्विधः प्रोक्त आगमो डामरस्तथा।**
**यामलश्च तथा तन्त्रं तेषां भेदाः पृथक् पृथक्॥ इति।**

यद्यपि तन्त्राख्यं शिवोक्तशास्त्रमिदं मुख्यतश्चतुःषष्टिसंख्यात्मकमुदीर्यते महासिद्धिसारस्वतादिग्रन्थेषु, तथापि तन्त्रोपतन्त्रग्रन्थानामियत्ता नास्ति। अत एव तन्त्राणां श्लोकसंख्योपदेशप्रक्रमे विनिर्दिष्टं यद् वर्षशतैरपि न शक्यते विस्तराद् वक्तुं तदीया संख्या—"न शक्यं विस्तराद् वक्तुमपि वर्षशतैरपि" इति। महाविश्वसारतन्त्रे तन्त्रं सकलशास्त्रेष्वनुत्तमं वेदसंमितं च समाख्यातम्—

**विष्णुर्वरिष्ठो देवानां ह्रदानामुदधिस्तथा।**
**नदीनां च यथा गङ्गा पर्वतानां हिमालयः॥**
**अश्वत्थः सर्ववृक्षाणां राज्ञामिन्द्रो यथा वरः।**
**देवीनां च यथा दुर्गा वर्णानां ब्राह्मणो यथा॥**
**तथा समस्तशास्त्राणां तन्त्रशास्त्रमनुत्तमम्।**
**सर्वकामप्रदं पुण्यं तन्त्रं वै वेदसम्मितम्॥**
**कीर्तनं देवदेवस्य हरस्य मतमेव च।**
**पावनं श्रद्दधानानामिह लोके परत्र च॥ इति।**

पुराणसूत्रवार्त्तिकभाष्यादीनां यथा लक्षणानि निर्धारितानि सन्ति, तथा तन्त्रस्यापि लक्षणं सम्प्रधार्यते। तद्यथा—१—सर्गः, २—प्रतिसर्गः, ३—मन्त्रनिर्णयः, ४—देवतासंस्थानम्, ५—तीर्थवर्णनम्, ६—आश्रमधर्मः, ७—विप्रसंस्थानम्, ८—भूतसंस्थानम्, ९—यन्त्रनिर्णयः, १०—विबुधानामुत्पत्तिः, ११—ज्योतिषां संस्थानम्, १२—पुराणाख्यानम्, १३—कोषकथनम्, १४—व्रतपरिभाषणम्, १५—शौचाशौचयोराख्यानम्, १६—स्त्रीपुरुषलक्षणम्, १७—राजधर्मः, १८—दानधर्मः, १९—युगधर्मः, २०—व्यवहारः, २१—अध्यात्मवर्णनं चेत्यादि। महाविश्वसारतन्त्रानुसारेण तन्त्रलक्षणे खल्वितोऽप्यधिका संख्या भवितुमर्हति। विद्वद्भिः संग्राह्य सा निर्धारणीया। तन्त्रलक्षणमागमलक्षणात् पार्थक्यं भजते। तत्त्वष्टविधं सम्प्रधारितम्।

शिवोक्तशास्त्रस्य तन्त्रस्यास्य गुह्योपदेशत्वादन्येषां शास्त्राणामिवाध्ययनाध्यापनप्रचारो नैतदीयः समजनि संस्कृतविद्यालयेषु। तन्त्रग्रन्थरत्नप्रकाशोऽपि

नगण्यप्रायो वर्तते। विशिष्टस्यास्य श्रुतिशाखाविशेषस्योपेक्षणं विभाव्य तदान्तीन्तनैरुपकुलपतिभिः श्रीसुरतिनारायणमणित्रिपाठिभिर्योगतन्त्रस्य मर्मज्ञा लब्धवर्णावतंसाः स्वनामधन्या महामहोपाध्यायाः श्रीगोपीनाथकविराजमहोदया योगग्रन्थाध्ययनाध्यापनसम्पादनार्थं सम्प्रार्थिताः। तेषामेव प्रेरणया योगतन्त्रग्रन्थमाला समुपक्रान्ता। तत्र षष्ठपुष्पतया तन्त्रसंग्रहनाम्ना तेषां तन्त्रग्रन्थानां नागरीसंस्करणप्रकाशनं समारब्धं येषां वङ्गलिप्या प्रकाशनं कालिकातायां श्रीमता रसिकमोहनचट्टोपाध्यायमहोदयेन १९०४-८ खीस्ताब्देषु कृतमासीत्। किन्त्विह सम्पादनकर्मणि वैशिष्टयाय सरस्वतीभवनस्थानां मातृकाणां समुपयोगः कृतः। तन्त्रसंग्रहस्य प्रथमद्वितीयौ भागौ (१९७० तमे खीस्ताब्दे) श्रीमद्भिः कविराजमहोदयैः स्वयमेव सम्पादितौ। तेषु शिवसायुज्यमाप्तेषु तृतीयभागस्य संपादनकार्ये मनाग् शैथिल्यमुपगतम्।

कतिभ्यश्चिद् वर्षेभ्यः प्राग् मुद्रितोऽयं तन्त्रसंग्रहस्य तृतीयो भागः साम्प्रतं योगतन्त्रविभागाध्यक्षस्य श्रीमतो व्रजवल्लभद्विवेदस्य प्रयासेन प्रकाशमानीयते। इह १—गन्धर्वतन्त्रम् (द्विचत्वारिंशत्पटलात्मकम्), २—मुण्डमालातन्त्रम् (दशपटलात्मकम्), २—(क) द्वितीयमुण्डमालातन्त्रम् (षट्पटलात्मकम्), ३—कामाख्यातन्त्रम् (नवपटलात्मकम्), ४—सनत्कुमारतन्त्रम् (एकादशपटलात्मकम्), ५—भूतशुद्धितन्त्रम् (सप्तदशपटलात्मकम्), ६—कङ्कालमालिनीतन्त्रं (पञ्चपटलात्मकम्) चेति संगृहीतानि षट्संख्याकानि तन्त्राणि शक्तित्रैपुरवामाचारप्रधानकौलवैष्णवसम्प्रदायानभिसम्बध्नन्ति।

आगमतत्त्वविलासे गन्धर्वतन्त्रस्य त्रैलोक्यमोहनत्वं व्याहृतम्। चतुःषष्टिसंख्याकेषु तन्त्रेषु मुण्डमालातन्त्रं कामाख्यातन्त्रं च महासिद्धिसारस्वते समुल्लिख्येते। आगमतत्त्वविलासोक्ततन्त्रनामसु मुण्डमालाख्यं तन्त्रं गण्यते। इत्थं विविधेषु तन्त्रग्रन्थेषु चतुःषष्टितन्त्रनामसूची भिन्नभिन्ना दृश्यते। गर्गबुद्धशुक्रभृगुकपिलजैमिनिवसिष्ठनारदपुलस्त्यबृहस्पतियाज्ञवल्क्योक्तानि बहून्युपतन्त्राण्यपि वितन्यन्ते। योगतन्त्रविभागाध्यक्षस्य श्रीमतो व्रजवल्लभद्विवेदस्य प्रयत्नेन तन्त्रग्रन्थरत्नसम्पत्तिरचिरात् तन्त्रशास्त्रप्रियाणां बुधवराणां जिज्ञासूनां च प्रीणनाय प्रमोदाय च प्राकाश्यमानेष्यत इति दृढं प्रत्येति

सं० संस्कृतविश्वविद्यालये
ऋषिपञ्चम्यां २०२६ वै०
( २७-८-१९७९ खी० चन्द्रे )

**भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**
निदेशकः
अनुसन्धानसंस्थानस्य

# प्रास्ताविकम्

दुरवगाहः खलु तन्त्रमहार्णवः। श्रद्धेयचरण-म० म० प० गोपीनाथकविराज-महोदयसन्दृब्धेन 'तान्त्रिक साहित्य' इति ग्रन्थेन तन्त्रवाङ्मयस्य विशालता मनाग् दृग्गोचरीभवति। अथापि कलिकाता-कश्मीर (श्रीनगर)-मैसूर-मद्रास-पाण्डिचेरी-बड़ोदा-प्रयाग-काशीप्रभृतिषु भारतस्य विभिन्नेषु विशिष्टेषु नगरेषु निवसन्तः कृतभूरिपरिश्रमा मनीषिणो ग्रन्थमालारूपेण स्वातन्त्र्येण च विशिष्टान् ग्रन्थान् प्रकाश्य तमिमं तन्त्रपाथोधिमवगाहमाना दरीदृश्यन्त एव। तादृश एव प्रयत्न आसीत् तत्रभवतां प्रातःस्मरणीयानां गुरुवर्याणां पण्डितवरेण्यानां तन्त्रशास्त्रविशारदानां श्रीमतां प० गोपीनाथकविराजमहाभागानाम्, यो हि योगतन्त्रग्रन्थमालारूपेण सम्पूर्णानन्दसंस्कृतविश्वविद्यालये प्राचलत्।

कलिकातास्थितेन विदुषा श्रीमता रसिकमोहनचट्टोपाध्यायमहोदयेन स्वीये तन्त्रसंग्राहके ग्रन्थे प्रायश्चत्वारिंशदधिकास्तन्त्रग्रन्था वङ्गलिप्यां प्रकाशिताः साम्प्रतं नोपलभ्यन्ते। ग्रन्थानामेतेषां देवनागरीसंस्करणं सुलभीक्रियेतेति धिया 'तन्त्रसंग्रह' इति नाम्ना तेषां प्रकाशनं प्रारब्धम्। अस्य द्वितीये भागे निर्वाण-तोडल-कामधेनु-फेत्कारिणी-ज्ञानसंकलिनीतन्त्राणि प्रकाशितान्यत्रत्यानि। साम्प्रतं च तृतीये भागे गन्धर्व–मुण्डमाला–कामाख्या–सनत्कुमार–भूतशुद्धि–कङ्कालमालिनी-तन्त्राणि प्रकाश्यन्ते। शिष्टान्यपि तन्त्राणि यथायथं प्रकाश्येरन्। सरस्वतीभवन-पुस्तकालये संगृहीतानां मातृकाणां साहाय्येनैव ग्रन्थानामेतेषां संस्करणानि सम्पाद्यन्ते।

तत्र गन्धर्वतन्त्रं काश्मीरग्रन्थमालायामपि मुद्रितम्। वर्तते च सरस्वती-भवने २६४५७ संख्याका मातृका। एवमेव मुण्डमालातन्त्रस्य २३८४४, २४४५९, २४६०७, २६२३९ संख्याकाः, कामाख्यातन्त्रस्य २४६१५, २४६२९, २६३३६, २६४३४ संख्याकाः, सनत्कुमारतन्त्रस्य २५२५६, २७३२५ संख्याके इत्येवं सर्वासामेतासां मातृकाणां साहाय्येन परिष्कृत्य ग्रन्थान् तन्त्रसंग्रहस्य तृतीयो भागः साम्प्रतं विदुषां तन्त्रशास्त्ररसिकानां पुरतः समुपस्थाप्यते। अत्र कङ्कालमालिनीतन्त्रस्य न कापि मातृका वर्तते सरस्वतीभवनपुस्तकालये। भूतशुद्धितन्त्रस्य च भिन्नमेव स्वरूपमत्रत्यायां मातृकायाम्। एतच्च तन्त्रसंग्रहचतुर्थभागे परिशिष्टरूपेण प्रकाशयिष्यते।

तन्त्रसंग्रहतृतीयभागे प्रकाशितेषु तन्त्रग्रन्थेषु षट्सु प्रथमं गन्धर्वतन्त्रं त्रैपुरसम्प्रदायस्य शाक्तस्य, द्विविधमपि मुण्डमालातन्त्रं कामाख्यातन्त्रं कङ्कालमालिनीतन्त्रं च वामाचारप्रधानस्य कौलसम्प्रदायस्य, भूतशुद्धितन्त्रमान्तरवरिवस्याप्रतिपादकम् , सनत्कुमारतन्त्रं च वैष्णवसम्प्रदायस्य वर्तते। जिज्ञासोपशमाय संक्षेपेणात्र तेषां स्वरूपपरिचयः समुपस्थाप्यते।

## गन्धर्वतन्त्रम्

ईश्वरपार्वतीसंवादात्मकमेतत् तन्त्रम्। यामलात् सारमुद्धृत्य भगवान् शिवो भोगमोक्षैकसाधनं द्वादशसाहस्रं तन्त्रं वामदेवाख्यवक्त्रेण प्रोवाच। पूर्वमेतत् तन्त्रं देवकीसुताय हंसरूपिणे ब्रह्मणे, नन्दिकेश्वराय, पुष्पदन्ताय च प्रोक्तम्। अत एव च गन्धर्वतन्त्रमिति नाम्ना प्रसिद्धिं जगाम। नन्दिकेश्वरात् तदेतद् दत्तात्रेयेणाधिगतम्, तेन च विश्वामित्रायोपदिष्टम्। द्वाचत्वारिंशत्पटलात्मकेऽस्मिन् तन्त्रे भगवान् शिवः सात्त्विकराजसतामसानि तन्त्राणि पुराणानि च निर्वर्ण्य मोहनार्थं संप्रोक्तानीमानि सर्वाणि शास्त्राणि तन्त्राणि च सदोषाणीति प्रोवाच। पार्वतीप्रार्थनया केवलं शक्तितन्त्रं तेन सन्देहरहितं कृतम्।

सर्वप्रथमं महात्रिपुरसुन्दर्या मन्त्रोद्धारप्रसङ्गे वाग्भव-कामराज-शक्तिबीजात्मिका कामराजाख्यविद्या लोपामुद्राविद्या च प्रकाशिता। तदनु शाम्भवशक्तिक्रममुपदिश्य स्वप्नावती-मधुमतीप्रभृतयो विद्याः प्रतिपादिताः, राजराजेश्वरीकवचं च वर्णितम्। "यन्नोक्तं डामरे तन्त्रे यन्नोक्तं रुद्रयामले। सर्वतन्त्रेषु यन्नोक्तं गन्धर्वे प्रकटीकृतम् ॥" (४।८७) इति हि तन्त्रस्यास्य समुद्घोषः।

त्रिविधं देवताशरीरमत्र वर्णितम्—भौतिकम् , मनोमयम्, ज्ञानमयं चेति। तत्र मुद्रया भौतिकम्, यन्त्रेण मनोमयम्, मन्त्रेण च ज्ञानमयं शरीरं निष्पन्नं भवति (५।३८-४०), अतो हेतोरत्र मुद्राणां मन्त्राणां श्रीयन्त्रस्य च वैशद्येन वर्णनं विद्यते। ज्ञानेन कर्मणा च आन्तरबाह्यदेहशुद्धिर्भवति। एतदर्थमेव ज्ञानयोग-कर्मयोगावत्र वर्णितौ, तदनु योगपदं निर्वर्ण्याष्टाङ्गो योगो मन्त्रयोगश्च निरूपितः,

**देहाभिमाने गलिते विदिते परमात्मनि।**

**यत्र-यत्र मनो याति तत्र तत्र समाधयः ॥** ( ६।८६ )

इति च प्रोक्तम्। तदनु त्रिविधां सन्ध्यां च निर्वर्ण्यात्र शूद्रादीनामपि दीक्षायामधिकारिता वर्णिता, त्रिविधं तर्पणं च प्रोक्तम्। अन्तर्योगबहिर्योग( आन्तरबाह्यवरिवस्या )प्रसङ्गेन भूतशुद्धि-न्यासविधि-प्राणायाम-ध्यानयोग-विशेषार्घ्यादयो विषया वर्णिताः, विविधा उपचाराश्च प्रदर्शिताः। अत्रैव जपयज्ञोऽपि विस्तरेण

वर्णितः। नित्यं नैमित्तिकं काम्य त्रिविधं कर्म निरूप्य "होमादिकं च विफल कुमारीपूजनं विना" (२३।१) इति कृत्वा कुमारीपूजनं प्रदर्शितम्। तदनु कामाख्यादीनि पुण्यक्षेत्राणि निर्वर्ण्य गुरुशिष्यलक्षणपुरस्सरो दीक्षाविधिः पुरश्चर्याविधिश्च निदर्शितः, मन्त्रचैतन्यनिरूपणप्रसङ्गेन निगर्भार्थ-रहस्यार्थादयो वर्णिताः, कामकलायाः स्वरूपं च प्रतिपादितम्। होमस्य विधानमुक्त्वा चक्रराजप्रतिष्ठा-कुलाचारप्रभृतीन् प्रकीर्णकान् विषयान् निर्वर्ण्य च शक्तिस्वरूपं सर्वविधसन्देह-भञ्जकं प्रदर्शितम्। अत्रैव को नाम कुलज्ञानी भावज्ञानी चेति निरूप्य, प्रकाशविमर्शाधीनं शिवशक्तिज्ञानं निर्वर्ण्य विविधान् प्रश्नांश्च समाधाय, निष्कलं ब्रह्म वर्णितम्।

## प्रथममुण्डमालातन्त्रम्

वामाचारप्रतिपादकं शिवपार्वतीसंवादरूपेण प्रवृत्तं दशपटलात्मकमिदं तन्त्रम्। कालीतन्त्र-कुब्जिका-कालीविलास-डामर-यामल-कालीसर्वस्व-योनि-तन्त्र-संमोहन-विक्रम-कुलार्णव - मातृकाभेद - समयाचार-वीर-तोडल-भैरव-ज्ञान-निर्वाणतन्त्राणि श्रुतानि मया पूर्वम्। अधुना तादृशं तन्त्रं वद, येन जीवः शिवत्वं लभत इति पार्वत्या उक्ते शिवो मुण्डमालाख्यं तन्त्रराजं प्रोवाच। मुण्डमालामहातन्त्रे एका दुर्गैव ज्ञानसाधनत्वेन वर्णिता। दुर्गा चैषा पशौ नाधि-ष्ठितेति वीरतन्त्रे प्रोक्तम्। शिवो वक्ति पार्वतीं यत् त्वया भैरवतन्त्र-योनि-तन्त्र-कुलार्णव-कुलाचार - गुप्तसाधन-गुरुतन्त्र-निर्वाण-समयाचार-वीरतन्त्र-डामर-डमर-डीन-कालीविलास - ब्रह्मयामल-विष्णुयामल-शिवयामल-मित्रया-मल-शक्तियामलतन्त्राणि श्रुतानि, तथापि तव सन्देहनिवृत्तिर्न संजातेति तदर्थं दिव्यभावप्रदायकं तन्त्रमेतदुपदिश्यते।

अत्र प्रथममवधूत-संवित्-सुराप्रभृतीनां लक्षणानि प्रदर्श्य ततो योनिमुद्रा-प्रकरणम्, दुर्गायाश्चरितम्, दुर्गायाः शतनामानि, मोहन-कुलज्ञान-योगिनीहृदय-संमोहन-वीरतन्त्र-श्रीतन्त्र-कुलार्णव-कालीतन्त्र-कालीविलास-कालीकल्पलतिका-प्रोक्ता गुप्ता गुप्ततराश्च पूजाविधयः प्रदर्शिताः। तदनु शवसाधनम्, श्मशानसाधनम्, दुर्गायाः कवचं स्तोत्रं च प्रोक्तम्। अन्तर्यागप्रसङ्गेनात्र नाडीपरिज्ञानम्, पिण्ड-पद-रूपादीनां स्वरूपं च वर्णितम्। उग्रताराक्रमं निर्वर्ण्य मन्त्रसिद्धिविद्यासिद्धिश्च प्रदर्शिता। यामले,डामरे, कुलोड्डीशे, कुलार्णवे च विस्तरेण प्रोक्तं मन्त्रार्थं मन्त्रचैतन्यं च, शक्तियामले, सिद्धेश्वरतन्त्रे, कुलाचले च प्रोक्ता विद्यासिद्धिश्चात्र संक्षेपेण प्रोक्ताः। तदनु कालिकायास्तारायाश्च माहात्म्यं निर्वर्ण्य मन्त्रोद्धारं च प्रदर्श्य राजमोहनाख्यं कवचं पठितम्। कालीतन्त्रे, भैरवे, यामले, भैरवीतन्त्रे च भुवनायाश्चरितं न वर्णितमिति कृत्वा तदप्यत्र वर्णितम्। अन्ते च "शक्तिमार्गं

विना जन्तोर्न भक्तिर्न च सद्गतिः" ( १०।७ ) इति हेतोर्ज्ञानकाण्डं गुह्यस्तोत्र-कवचादिकं च प्रदर्शितम् ।

## द्वितीयमुण्डमालातन्त्रम्

शिवपार्वतीसंवादरूपेण प्रवृत्ते षट्पटलात्मकेऽस्मिन् तन्त्रे प्रथमं दशमहाविद्याः षडाम्नायनमस्कृता वर्णिताः । वर्णमाला अक्षरमालाऽपि कथ्यते । तस्या अत्र विस्तरेण वर्णनं विद्यते । वस्तुतो मन्त्रस्य बाह्यपूजायां जपकाले स्फाटिक-मौक्तिक-रुद्राक्षादीनां माला विधाय जपः क्रियते, एवमेव आन्तरपूजायां वर्णमालामेवाक्षमालारूपेणाङ्गीकुर्वन्ति साधकाः । तत्र क्षकारस्य मेरुरूपेण कल्पना क्रियते । जपविधिनिर्देशपुरस्सरं तदेतत्सर्वमत्र वर्णितम् । तदनु पीठानामासनानां च स्वरूपं निर्वर्ण्य, बलिदानविधिं पुरश्चर्याविधिं च प्रदर्श्य, भैरवीकल्पोक्तं दीक्षायाः स्वरूपमत्र निर्दशितम्, वीरदिव्याचारयोः स्वरूपं च परोक्षवृत्त्या स्पष्टीकृतम् । अत्रैव भुवनेश्वरीप्रभृतीनां मन्त्र–पूजा–यन्त्रादिस्वरूपं तत्फल च प्रतिपादितम् ।

## कामाख्यातन्त्रम्

नवपटलात्मकमेतत् तन्त्रं शिवदेवीसंवादरूपेण प्रस्तुतम् । सर्वप्रथममत्र योनिरूपा महाविद्या कामाख्या वर्णिता, तस्या मन्त्रोद्धारश्च कृतः । कुलाचारः, वीराचारः, कौलाधिकारलक्षणम्, कुलज्ञानमहत्त्वमित्यादिप्रसङ्गेन तत्त्वपञ्चकम्, कौलचक्रम्, योनिसाधनं चात्र वर्णितम् । तदनु पुरश्चर्याविधिं गुरुतत्त्वं च प्रदर्श्य दिव्यभावपशुभावयोरन्तरं च निरूप्य कौलानां पूर्णाभिषेकविधिर्वर्णितः । अत्रैव—

**षड्दर्शनमहाकूपे पतिताः पशवः प्रिये ।**
**परमार्थं न जानन्ति दर्वी पाकरसं यथा ॥** ( ५।५ )

इत्युक्त्वा, निर्वाणस्य स्वरूपं च प्रतिपाद्य, वस्तुतस्तु या देवी कालिका माता सर्वविद्यास्वरूपिणी सैव कामाख्येति सुष्ठु प्रतिपादितम् ।

## सनत्कुमारतन्त्रम्

एकादशपटलात्मकमेतत् तन्त्रम् । अत्र पुलस्त्यः सनत्कुमारं श्रीकृष्णस्य माहात्म्यं पृच्छति, सनत्कुमारश्च श्रीकृष्णो विष्णुरित्यभिधीयत इत्युक्त्वा तस्य पूजाविधानं विस्तरेण वक्ति । श्रीकृष्णोपासनाप्रतिपादकविष्णुपञ्चायतनसम्प्रदायस्य विशिष्टोऽयं ग्रन्थो दक्षिणाचारनिरूपणपरः । अत्र भूतशुद्धि-प्राणायाम-मातृकान्यास-पीठन्यासप्रभृतयो विषया अपि वर्णिताः । नवमे पटले त्रैलोक्यमङ्गलं नाम कवचं

पठितम् । तदनु जपमालायाः स्वरूपं प्रदर्श्य पुरश्चर्याविधानं मन्दिरदानविधि-र्दीक्षाविधिश्च निरूपितः । अन्ते च संक्षेपेण सलक्षणो योगो निरूपितः ।

## भूतशुद्धितन्त्रम्

सप्तदशपटलात्मकमेतत् तन्त्रमान्तरवरिवस्याप्रतिपादकमीश्वरदेवीसंवाद-रूपेण प्रवर्तते । अत्र भूतशुद्धिः, देहशुद्धिः (न्यासः), प्राणायामश्चेत्येतत् त्रयं तत्त्व-त्रयनाम्ना वर्णितम् । अत्र अन्तःस्नानस्य सन्ध्यायाश्च तात्त्विकार्थः प्रदर्शितः, अजपा-ध्यानविधिश्च वर्णितः । भूतशुद्धिप्रक्रियाऽत्र पौनःपुन्येन स्थूणानिखननन्यायेन दाढर्येन प्रतिपादिता । कुण्डलीस्वरूपं च वर्णितम् ।

अत्रापि "मन्त्रार्थं मन्त्रचैतन्यं योनिं चापि न वेति यः" (१४।१) इत्युक्त्वा विवृतान्येतानि । मातृकान्यासोऽप्यत्र वर्णितः । अन्ते च संक्षेपेण गद्यमयं भूतशुद्धि-विवरणं लिखितम् ।

जीवः स्वात्मानं कर्तारं मन्यते । अत एव मनोनिविष्टः स भवति । षट्चक्रसाधनबलाज्जीवो यदा शुद्धसत्त्वात्मको जायते, तदा सदसत्कर्मविवर्जितो भवति । सत्त्वस्थो जीवः सुषुम्नान्तर्गतां चन्द्रकोटिसुशीतलां बिसतन्तुतनीयसीं प्रभा-स्वरां कुण्डलीशक्तिमनुभवति । तत्रानन्तवर्णात्मकपद्मं पश्यति । पश्चाशन्मातृका-स्वरूपमनुभवति । अन्ते चान्तरमातृकाजपक्रमेण भूतशुद्धिप्रक्रियया च शिवभाव-माविशति ।

## कङ्कालमालिनीतन्त्रम्

भैरवभैरवीसंवादरूपेण प्रवृत्ते पञ्चपटलात्मकेऽस्मिन् तन्त्रे सर्वप्रथमं भैरवी वर्णानां कारणं पृच्छति । भैरवश्च प्रसङ्गेन गुरुलक्षणमुक्त्वा कौलमतानुसारेण आदिक्षान्तमातृकाणां शब्दब्रह्मस्वरूपत्वमुन्मीलयति । मन्त्रार्थ–मन्त्रचैतन्य–योनि-मुद्रात्मकस्य तत्त्वत्रयस्य वर्णनमत्रापि विद्यते । अत्रैव योनिकवचं वर्णितम् । गुरु-पूजनं च निर्वर्ण्य गुरुगीता गीता, महाकालीमनुः समुद्धृतः, त्रिविधा पूजा, पञ्चविधा शुद्धिश्च प्रदर्शिता । तदनु भूतशुद्धिं निर्वर्ण्य मूलविद्या ध्यानादिपुरस्सरा, पूजा-प्रकरणे च आरम्भ–तरुण–प्रौढाख्या उल्लासा वर्णिताः । पुरश्चरणपटलेऽत्र पञ्चमे रुद्राक्षस्य भस्मनश्च माहात्म्यम्, नरास्थ्यादिसमुद्भूता मालाः, रुद्राक्षधारणस्थानानि, मृत्युञ्जयगायत्र्यादयो मन्त्राः, लतागृहम्, सप्तविधा उपायाः, आद्यन्तगोपनम्, वर्णपरिज्ञानं ध्यानं चेत्यादयो विषया वर्णिताः । अन्ते च कालिकाविद्याया माहात्म्यं प्रदर्शितम् ।

## सप्रश्रयनिवेदनम्

तदेतस्य षड्ग्रन्थात्मकस्य तन्त्रसंग्रहतृतीयभागस्य मुद्रणाय सज्जा पाण्डुलिपिः ५-११-७१ दिनाङ्के मुद्रणार्थं प्रेषिता, यदा हि पङ्क्तीनामासां लेखको योगतन्त्र-विभागाध्यक्षधुरां वहन्नासीत् । तदनु विभागस्यास्याध्यक्षपदे १९७३ ई० वर्षे पण्डितप्रवराः साहित्यमीमांसातन्त्रशास्त्रनिष्णाताः साहित्यविभागाध्यक्षाः श्रीमन्तः पट्टाभिरामशास्त्रिमहोदयाः, १९७५ ई० वर्षारम्भतश्च व्याकरणागमादिशास्त्र-निष्णाता वाचस्पतयः प्राचीनव्याकरणदर्शनागमविभागाध्यक्षाः श्रीमन्तो रामप्रसाद-त्रिपाठिमहोदया नियुक्ताः । विदुषोरेतयोः पर्यवेक्षणे ग्रन्थस्यास्य मुद्रणकार्यं विभाग-स्याध्ययनाध्यापनानुसन्धानकार्यं च सुचारु प्राचलदिति तौ धन्यवादशतैः सभाज्येते । संस्करणस्यास्य सज्जीकरणं तदानीन्तनो योगतन्त्रप्राध्यापकः श्रीरघु-नाथमिश्र आगमाचार्यः, वरिष्ठानुसन्धाता श्रीश्रीपतिमिश्रः, कनिष्ठानुसन्धाता श्रीजगन्नाथशास्त्री तैलङ्गः-इत्येते; ईक्ष्य( प्रू )शोधने श्लोकार्धसूची-विषयसूची-निर्माणे च वरिष्ठानुसन्धाता डा० हीरालालमिश्रः, डा० एन० एच० चन्द्रशेखर-स्वामी, कनिष्ठानुसन्धाता श्रीराजनाथत्रिपाठी, विश्वविद्यालयमुद्रणालयस्थो वरिष्ठईक्ष्यशोधकः श्रीहरिवंशत्रिपाठी-इत्येते विद्वांसो विभागीया व्यापृता आसन् । डा० चन्द्रशेखरस्वामिना प्रास्ताविकसामग्रीसंकलनेऽपि साहाय्य-माचरितमिति सर्व एते शुभाशंसाभिः संयोज्यन्ते, भगवान् ज्ञानदाता शिवः सर्वेष्वेतेषु योगतन्त्रविभागसंवर्धनसामर्थ्यमादध्यादिति शम् ॥

कविराजजयन्ती
आश्विनकृष्णद्वितीया सं० २०३६
८-९-१९७९ ई०
वाराणसी ।

विदुषां वशंवदः
**व्रजवल्लभद्विवेदः**
सांख्ययोगतन्त्रागमविभागाध्यक्षः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य ।

# विषयानुक्रमणिका



## गन्धर्वतन्त्रस्य

## प्रथममुण्डमालातन्त्रस्य

## द्वितीयमुण्डमालातन्त्रस्य



## कामाख्यातन्त्रस्य

## सनत्कुमारतन्त्रस्य

## भूतशुद्धितन्त्रस्य

## कङ्कालमालिनीतन्त्रस्य

# गन्धर्वतन्त्रम्

## प्रथमः पटलः

ॐ नमः परदेवतायै

यं वदन्त्यमलात्मानं पुरुषं प्रकृतेः परम् ।
चिद्रूपं परमानन्दं वन्दे तं विघ्ननायकम् ॥ १ ॥

भर्त्तारं गुणवृद्धिशून्यमचलं गत्वाऽभिसारक्रमाद्
दीव्यन्ती कुलवर्त्मनैव गुणवत्यानन्दमातन्वती ।
शेते सुप्तभुजङ्गपोतकुटिला या मेरुमूलं गता
सूते यस्तु शतानि तानि मुरजिन्मुख्यानि पायादसौ ॥ २ ॥

विश्वामित्र इति ख्यातो नृपः परमधार्मिकः ।
सिद्धिं दृष्ट्वा वशिष्ठस्य तपस्तेपे सुदुश्चरम् ॥ ३ ॥

अप्राप्य तपसः सिद्धिमुदीचं दिशमाविशत् ।
गङ्गाद्वारसमासीनं मुनिं योगपरायणम् ॥ ४ ॥

दत्तात्रेयं महाभागमभिवाद्य कृताञ्जलिः ।
उवाचेदं वचस्तस्मै विनयानतकन्धरः ॥ ५ ॥

विश्वामित्र उवाच

नाऽद्राक्षं सम्यगिष्ट्वाऽपि क्रतुभिर्बहुदक्षिणैः ।
सत्पात्रे सर्वदानानि कृत्वापि मुनिसत्तम ! ॥ ६ ॥

महाविद्यां प्रजप्याऽथ पुरस्क्रियापुरःसराम् ।
भवाब्धेस्तरणोपायं तपस्तप्त्वा सुदुश्चरम् ॥ ७ ॥

सर्वागमैकतत्त्वज्ञ ब्रह्मनिष्ठ तपोधन ! ।
किं करिष्याम्यहं देव ! कुत्र यास्यामि तद् वद ॥ ८ ॥

दत्तात्रेय उवाच

मा विषीद नृपश्रेष्ठ ! सर्वथा त्वं स्थिरो भव ।
यच्छ्रुत्वाऽधिगतं पूर्वमस्माभिर्नन्दिकेश्वरात् ॥ ९ ॥

तदशेषं प्रवक्ष्यामि गुह्याद् गुह्यतमं परम् ।
सारमुद्धृत्य भगवान् जामलादपि सर्वतः ॥ १० ॥

तन्त्रं द्वादशसाहस्रं भोगमोक्षैकसाधनम् ।
पार्वत्यै कथयामास तन्त्रं गन्धर्वसंज्ञकम् ॥ ११ ॥

गीयते सर्वतन्त्राणामखिलाद्यो यतस्त्विह ।
तेनायं नृपशार्दूल ! तन्त्रो गन्धर्व उच्यते ॥ १२ ॥

नन्दिकेश्वर उवाच

कैलासशिखरारूढं देवदेवं जगद्गुरुम् ।
पञ्चवक्त्रं महाकायं जटाजूटविभूषितम् ॥ १३ ॥

चारुचन्द्रकलायुक्तं मूर्ध्नि व्यालौख[घ]भूषितम् ।
बाहुभिर्दशभिर्युक्तं व्याघ्रचर्मधरं शुभम् ॥ १४ ॥

कालकूटधरं कण्ठे नागहारोपशोभितम् ।
विभूतिभूषणं देवं प्रतिवक्त्रं त्रिभिस्त्रिभिः ॥ १५ ॥

नेत्रैस्तु पञ्चदशभिर्युक्तं स्फटिकसन्निभम् ।
शक्ति-त्रिशूल-खट्वाङ्ग-वरदाभयकानपि ॥ १६ ॥

अक्षसूत्रं बीजपूरं भुजगं डमरुं धनुः ।
दक्षिणैर्वामभिर्हस्तैर्धृतं कोटीरभूषणम् ॥ १७ ॥

वृषभोपरिसंस्थं तु गजकृत्तिपरिच्छदम् ।
सर्वात्मनाऽऽविष्टचित्तं गिरिजामुखपङ्कजे ॥ १८ ॥

प्रणम्य परया भक्त्या कृताञ्जलिपुटा सती ।
उवाच पार्वती देवी ईश्वरं परमेश्वरम् ॥ १९ ॥

पार्वती उवाच

देवदेव जगन्नाथ ! भक्तानामार्त्तिनाशन ।
प्रसन्नो यदि मां देव ब्रह्म किं वा तदुच्यते ॥ २० ॥

योगं किं वा शरीरश्च ब्रूहि मे परमेश्वर ।
स्मितपूर्वो महादेवः पूर्णानन्दमयो विभुः ॥
वामदेवाख्यमन्त्रे[वक्त्रे]ण प्रत्युवाच प्रियां प्रभुः ॥ २१ ॥

ईश्वर उवाच

यल्लाभान्नाऽपरो लाभो यत्सुखान्नाऽपरं सुखम् ।
यज्ज्ञानान्नाऽपरं ज्ञानं तद् ब्रह्मेत्यवधारय ॥ २२ ॥

यद् दृश्यान्नाऽपरं दृश्यं यद् दृष्ट्वा न पुनर्भवः ।
तिर्यगूर्ध्वमधःपूर्णं सच्चिदानन्दमव्ययम् ।
अनन्तं नित्यमेकं यत् तद् ब्रह्मेत्यवधारय ॥ २३ ॥

पार्वती उवाच

कर्मपाशसमाबद्धो भोगी भोगपरायणः ।
कथं मुक्तो भवेद् देव भोगेनैव महेश्वर ।
तत् सर्वं कथयेशान यद्यहं तव वल्लभा ॥ २४ ॥

ईश्वर उवाच

शृणु देवि ! प्रवक्ष्यामि यद् गुह्यं परमाद्भुतम् ।
न वक्तव्यं त्वया किञ्चिज्जनेषु कथितं मया ॥ २५ ॥

अपृथक्त्वशरीरत्वाद् वक्ष्यामि तव सुव्रते ।
यदुक्तं ते मया तन्त्रं त्रिविधं त्रिगुणात्मकम् ॥ २६ ॥

तामसं कुत्र सम्प्रोक्तं राजसश्चापि कुत्रचित् ।
सात्त्विकं तत्र कुत्रापि धीमांस्तस्मात् तदुद्धरेत् ॥ २७ ॥

तामसं नरकायैव स्वर्गाय राजसं प्रिये ।
सात्त्विकं मोक्षदं प्राहुस्तुरीयं निष्फलं शिवे ॥ २८ ॥

शास्त्राणि चैव गिरिजे तामसानि निबोध मे ।
तामसानि पुराणानि तन्त्राणि तानि च प्रिये ॥ २९ ॥
स्वर्गमोक्षविहीनानि तानि यत्नाद् विवर्जयेत् ।
इममर्थं पुरा देवि ! पृष्टवान् देवकीसुतः ॥ ३० ॥
मां प्रसाद्य तपस्तप्त्वा भोगेन मुक्तिसाधनम् ।
तस्मै वापि मया प्रोक्तं सन्देहोच्छेदकारकम् ॥ ३१ ॥
ततस्तेनापि सम्प्रोक्तं ब्रह्मणे हंसरूपिणे ।
नन्दिकेश्वर एतद्वै मयोक्तं पुनरेव हि ॥ ३२ ॥
सोऽपि चाभूत् स्वयं कर्त्ता मम तुल्यो महामतिः ।
पुष्पदन्ते ततः प्रोक्तं तन्त्रमेतद् वरानने ॥ ३३ ॥
गन्धर्वेभ्यो ददौ तेन रहस्यं परमाद्भुतम् ।
ब्रह्मणा च तथा प्राप्तं तस्मात् ते मुनयः प्रिये ॥ ३४ ॥
पुरन्दरेणाऽङ्गिरसाद् भार्गवाद् दैत्यराट् प्रभुः ।
पुलस्तादपि पौलस्त्याः क्रमादेवं महीतले ॥ ३५ ॥
नमुच्याद्या महादैत्याः पुरा स्वायम्भुवान्तरे ।
महाबलपरीवारा महावीर्या महौजसः ॥ ३६ ॥
सर्वधर्मरताः शुद्धाः सर्वपापविवर्जिताः ।
त्रयीधर्मरताः सर्वे भग्ना इन्द्रपुरोगमाः ॥ ३७ ॥
तदाकर्ण्य महेशानि ! ब्रह्मा लोकपितामहः ।
मदन्तिकं समासाद्य स्तुतिभिर्मां प्रसाद्य च ॥
उवाचेदं वचश्चापि श्लक्ष्णं मधुरया गिरा ॥ ३८ ॥

ब्रह्मा उवाच

सर्वज्ञ सर्वलोकेश सर्वदुःखनिषूदन ।
भोगमोक्षप्रदे तन्त्रे त्वया प्रकाशिते प्रभो ॥ ३९ ॥

तदवाप्य महादेव! नरराक्षसदानवाः।
सिद्धिप्रदा भवेयुस्ते प्रभुनाम कथं चरेत् ॥ ४० ॥

सर्वे ब्रह्मात्मनो देव! यदि यास्यन्ति विद्यया।
कैव सृष्टिः किमत्रापि कार्यं स्याद् वद शङ्कर ॥ ४१ ॥

इति विज्ञाप्य मां ब्रह्मा ययौ ब्रह्मसदं प्रति।
ततोऽहं परमेशानि! गत्वा मन्दरपर्वतम् ॥ ४२ ॥

तान् विप्रानथ संस्मृत्य मन्त्रयित्वा च तैः सह।
नन्दिकेश्वरमाहूय द्वारि संस्थाप्य सत्वरम् ॥ ४३ ॥

रक्षितव्यस्त्वया भद्र विघ्नश्चेह समागतः।
इत्यादिश्य प्रविष्टोऽहं निर्जनं परमं महत् ॥ ४४ ॥

मोहनार्थं परं तेषां दैत्यादीनां विशेषतः।
शास्त्राणि विविधान्यत्र सम्प्रोक्तानि द्विजैः सह ॥ ४५ ॥

येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि।
यच्चिन्तनान्महादेवि! गौतमो मुनिपुङ्गवः ॥ ४६ ॥

अक्षपाद इति ख्यातः प्रमत्तो मां विगर्हयन्।
अनुभूय तदास्वादं मामेव शरणं ययौ ॥ ४७ ॥

तत्कृपालुरहं देवि! स्वयमादिष्टवानिदम्।
वैष्णवं तन्त्रमाचक्ष्व विष्णुं यस्तु सदा मुने ॥ ४८ ॥

प्रसन्नको यदा विष्णुस्ततः सिद्धिमवाप्स्यसि।
यदुक्तं ते मया तन्त्रं कृष्णस्य परमात्मनः ॥ ४९ ॥

अधीत्य नारदात् सर्वं सिद्धिमाप मुनिस्तदा।
प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम् ॥ ५० ॥

मच्छक्त्याऽऽवेशितैर्विप्रैः सम्प्रोक्तानि ततः परम्।
कणादेन च सम्प्रोक्तं शास्त्रं वैशेषिकं महत् ॥ ५१ ॥

गौतमेन तथा न्यायं सांख्यं तु कपिलेन तु ।
धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम् ॥ ५२ ॥
दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा ।
बौद्धशास्त्रमसत् प्रोक्तं नग्ननीलपटादिकम् ॥ ५३ ॥
अपास्य श्रुतिवाक्यानां दर्शयन् लोकगर्हितम् ।
कर्मस्वरूपतादात्म्यमत्र वै प्रतिपाद्यते ॥ ५४ ॥
सर्वकर्मपरिभ्रष्टाद् वै कर्म स्वं[1] तदुच्यते ।
गौतमप्रोक्तशास्त्रार्थनिरताः सर्व एव हि ॥ ५५ ॥
शार्गालयोनिमापन्नाः सन्दिग्धाः सर्वकर्मसु ।
सर्वस्य जगतोऽप्यत्र मोहनार्थं पुरा शिवे ॥ ५६ ॥
वेदार्थवन्महाशास्त्रं मायावादमवैदिकम् ।
मयैव कथितं देवि ! जगतां नाशकारणात् ॥ ५७ ॥
द्विजन्मना जैमिनिना पूर्वं वेदमपार्थतः ।
निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् ॥ ५८ ॥
तत्रैवाहं महामन्त्रान् सन्दूष्य दोषविस्तरैः ।
कृतवान् तन्त्रविस्तारं ससन्देहपदान्वितम् ॥ ५९ ॥
अथ देवाश्च देव्यश्च दूषिते मन्त्रविग्रहे ।
अभवन् दूषिताः सर्वे हीनवीर्यपराक्रमाः ॥ ६० ॥
निर्बलास्त्वङ्गहीनाश्च अथ सर्वे दिवौकसः ।
विष्णुलोकं समासाद्य व्यसनं तन्न्यवेदयन् ॥ ६१ ॥
विदित्वा व्यसनं विष्णुस्तत् तत् तेषां दिवौकसाम् ।
वैनतेयं समारुह्य नन्दिकेश्वरसन्निधौ ॥ ६२ ॥
आगतो वारितस्तेन मद्दर्शनसमुत्सुकः ।
तत्र स्थित्वा महेशानि ! भगवान् जगदीश्वरः ॥ ६३ ॥

१. सं-क० ।

वर्द्धयितुं शरीरं च वैनतेयं समादिशत् ।
प्रवृद्धस्य खगेन्द्रस्य स्थित्वा तस्योत्तमाङ्गके ॥
स दृष्ट्वा समुपाविष्टमिदमाह स्मिताननः ॥ ६४ ॥

श्रीभगवान् उवाच

अकालं प्रलयं कस्मात् क्रियते भवताऽधुना ।
न युज्यते महादेव कर्तुमेवं न साम्प्रतम् ॥ ६५ ॥

ईश्वर उवाच

दूषिता ब्रह्मणो मन्त्राः सौराश्चाऽग्निसमुद्भवाः ।
तथा वै दूषिता योन्याः श्रियश्चाऽपीह केचन ॥ ६६ ॥
सरस्वत्या महामन्त्रा वैष्णवा अपि केचन ।
वैनायका महामन्त्राः प्रायेण दूषिता मया ॥
शक्तितन्त्रेषु ये केचित् ससन्देहपदान्विताः ॥ ६७ ॥

श्रीभगवान् उवाच

जगद्वन्द्य कलाधीश सर्वभूतोपकारक ।
निवर्तस्व महादेव मद्वाक्यशासनादिभिः ॥ ६८ ॥

ईश्वर उवाच

विरतोऽहं तदा तस्य विष्णोरमिततेजसः ।
वचनात् परमेशस्य शङ्खचक्रगदाभृतः ॥ ६९ ॥
तान्यधीत्यैव ते सर्वे मोहिता विष्णुमायया ।
भविष्यन्ति च सन्दिग्धा वागीशत्वादनास्थया ॥ ७० ॥
विवदिष्यन्ति संमूढा हेतुवादपरायणाः ।
हेतुसाध्येति वाक्याच्च भविष्यन्ति पराङ्मुखाः ॥ ७१ ॥

इति गन्धर्वतन्त्रे[1] प्रथमः पटलः ॥ १ ॥



१. तन्त्रगन्धर्वे–ग०, पटलान्ते एष एव पाठः सर्वत्र ।

## द्वितीय पटलः

पार्वती उवाच

शक्तितन्त्रं महादेव सन्देहरहितं कुरु ।
तथा कथय देवेश भोगेन मुक्तिसाधनम् ॥ १ ॥

ईश्वर उवाच

निःसन्देहं महातन्त्रं श्रूयतां खलु साम्प्रतम् ।
गोपितव्यं पशोरग्रे पूर्णचन्द्रनिभानने ॥ २ ॥

परात्मजीवयोरैक्यं मयात्र प्रतिपाद्यते ।
ब्रह्मणोऽपि परं रूपं निर्गुणं वक्ष्यते मया ॥ ३ ॥

श्रूयतां विमले भद्रे आत्मानमात्मना पुनः ।
प्रणमामि महादेवीं तुरीयां ब्रह्मरूपिणीम् ॥ ४ ॥

यस्याः स्मरणमात्रेण भवाब्धौ न निमज्जते ।
अस्याश्चाराधनं कृत्वा नान्यदाराधनञ्चरेत् ॥ ५ ॥

अन्यस्य स्मरणाद् दुःखं योगिनीशापमालभेत् ।
अपमृत्युर्भवेत् तस्य मृते च नरकं व्रजेत् ॥ ६ ॥

एनामुपास्य देवेशि किं न सिध्यति भूतले ।
सकृदेनामुपास्यैव न मातुः स्तनपो भवेत् ॥ ७ ॥

तस्माद् देवि ! शुभे भद्रे तुरीयां समुपाश्रयेत् ।
आदौ कामेश्वरी ज्ञेया द्वितीया भगमालिनी ॥ ८ ॥

वज्रेश्वरी तृतीया च तुर्या त्रिपुरसुन्दरी ।
त्रयाणामपि देवानां प्रचोदिता त्रिपादिका ॥ ९ ॥

त्रिपुरेति समाख्याता कामदा सा महेश्वरी ।
त्रीन् यस्मात् पुरतो दद्याद् दुर्गा सा परमेश्वरी ॥ १० ॥
त्रिपुरेति समाख्याता सौन्दर्यातिशयात् तथा ।
मयापि चिन्त्यते सा तु तत्प्रसादादहं प्रभुः ॥ ११ ॥
जगतामीश्वरत्वं च लब्धं तदनुकम्पया ।
ब्रह्मत्वं ब्रह्मणा प्राप्तं विष्णुत्वं विष्णुना तथा ॥ १२ ॥
सुरासुरमुनीन्द्राणां महत्त्वं तत्प्रसादतः ।
तेनेयं महती विद्या दुर्लभा भुवनत्रये ॥ १३ ॥

देवी उवाच

भगवन् ! सर्वमन्त्राश्च भवता मे प्रकाशिताः ।
महात्रिपुरसुन्दर्या मन्त्रा ये पूर्वसूचिताः ॥
तान् स्थाने वाधुना नाथ सन्देहरहितान् कुरु ॥ १४ ॥

ईश्वर उवाच

सर्वकार्येषु सर्वत्र तान्त्रिके वैदिके तथा ।
अविश्वासो महान् दोषो यत्नतस्तं विवर्जयेत् ॥ १५ ॥
संसिद्धेः कारणं देवि ! विश्वासः समुदाहृतः ।
विदित्वा रक्षणं यत् तु सगुणं वीर्यवर्द्धनम् ॥ १६ ॥
रत्नेषु कीलकं यद्वद् ग्रन्थिर्मलयसम्भवे ।
आस्तिकोऽथ शुचिर्दान्तो द्वैतहीनो जितेन्द्रियः ॥ १७ ॥
ब्रह्मिष्ठो ब्रह्मवादी च ब्रह्मी ब्रह्मपरायणः ।
सर्वहिंसाविनिर्मुक्तः सर्वप्राणिहिते रतः ॥ १८ ॥
सोऽस्मिन् शास्त्रेऽधिकारी स्यात् तदन्यो भ्रमसाधकः ।
नास्तिकाय कुशीलाय दाम्भिकाय कदाचन ॥ १९ ॥
वक्तव्यं न पशोरग्रे कुटिले चुम्बके तथा ।
शृणु देवि ! महद् गुह्यं मन्त्रोद्धारं वरानने ॥ २० ॥

आदौ पञ्चदशी विद्या कथ्यते वीरवन्दिते ।
कामदेवस्ततो योनिस्तूर्यस्वरपुरन्दरौ ॥ २१ ॥
भुवनेशी ततः पश्चात् [1]पञ्चरङ्गविभूषितः ।
अयं स वाग्भवो देवि ! वागीशत्वप्रदायकः ॥ २२ ॥
एतज्जप्त्वा महाबीजं किं न सिध्यति भूतले ।
बालकस्य तु जिह्वायां त्रिदिनाऽभ्यन्तरे न्यसेत् ॥ २३ ॥
मधुना श्वेतदूर्वाभिः सुवर्णस्य शलाकया ।
इदं वाग्भवकूटं तु लिखेद् वै जननान्तरे ॥ २४ ॥
स एव पण्डितो भूयान्न तु मूर्खो भवेद् ध्रुवम् ।
एतद् वाग्भवकूटं तु वागीशस्यापि मूर्धनि ॥ २५ ॥
हस्तं दत्त्वा पठेत् सिद्धमष्टोत्तरशतं प्रिये ।
सोऽपि श्लोकं महेशानि ! करोत्येव न संशयः ॥ २६ ॥
सत्तर्कपदवाक्यार्थशब्दालङ्कारसारवित् ।
जिह्वायां न्यसनाद् देवि ! मूकोऽपि सुकविर्भवेत् ॥ २७ ॥
बहुनात्र किमुक्तेन जल्पितेनापि सुन्दरि ।
वागीशं स्पर्द्धते वाक्यैः सर्वज्ञो भुवि जायते ॥ २८ ॥
मूको भवति वागीशो वाचस्पतिरिवाऽपरः ।
शिवचन्द्रौ समुद्धृत्य कामव्योमपुरन्दरान् ॥ २९ ॥
उद्धरेत् परमेशानि ! लज्जावीजं ततः प्रिये ।
कामराजमिदं भद्रे यद्वर्णं सर्वशोभितम् ॥ ३० ॥
चन्द्रः कामस्तथेन्द्रश्च महामाया ततः परम् ।
शक्तिबीजं वरारोहे वेदाक्षरसमन्वितम् ॥ ३१ ॥
त्रिकूटेयं महाविद्या महात्रिपुरसुन्दरी ।
सर्वतीर्थमयी देवी सर्वदेवस्वरूपिणी ॥ ३२ ॥

---

१. रञ्ज-क० ।

सर्वशास्त्रमयी शुद्धा सर्वदोषविवर्जिता ।
चतुर्वेदमयी साचात् सर्वसौभाग्यदायिनी ॥ ३३ ॥

कामराजाख्यविद्येयं भोगमोक्षफलप्रदा ।
अनया सदृशी विद्या त्रिषु लोकेषु दुर्लभा ॥ ३४ ॥

[1]रमाबीजं ततो योनिः कामः शुक्रं तथेश्वरी ।
पूर्ववत् कामराजं च शक्तिकूटं तथैव च ॥ ३५ ॥

सवीर्या सिद्धिदा विद्या त्रैलोक्यवशकारिणी ।
तव स्नेहान्महेशानि ! मयेयं तु प्रकाशिता ॥ ३६ ॥

एतस्या एव विद्यायाः शक्तिं तूर्यं च पार्वति ।
हित्वा मुखे शिवेन्दुभ्यां लोपामुद्रा प्रकाशिता ॥ ३७ ॥

एतच्छाम्भवमुद्दिष्टं शृणु शाक्तमतः परम् ।
शक्तिर्महेशः कामश्च इन्द्रबीजमतः परम् ॥ ३८ ॥

महामाया ततः पश्चात् पूर्ववदपरं ततः ।
विद्यात्रयमिदं भद्रे दुर्लभं भुवनत्रये ॥ ३९ ॥

देवी उवाच

षोडशार्णां महाविद्यां त्रैलोक्यवशदायिनीम् ।
अधुना कथयेशान ! यद्यहं तव वल्लभा ॥ ४० ॥

ईश्वर उवाच

शृणु देवि ! महाविद्यां षोडशाक्षररूपिणीम् ।
एतस्या एव विद्याया यदाद्ये भुवनेश्वरी ॥ ४१ ॥

तदेयं परमेशानि ! षोडशाक्षररूपिणी ।
मायास्थाने रमाबीजं दत्त्वाऽन्या षोडशी भवेत् ॥ ४२ ॥

वरदा सिद्धिदा विद्यात् कुबेरास्पददायिनी ।
चिन्तामणिरियं विद्या त्रैलोक्ये चापि दुर्लभा ॥ ४३ ॥

---

१. मार–क० ।

वेदादिमण्डिता चान्या विद्या मोक्षप्रदायिनी ।
तथैव हि महाबीजं रमाबीजं तथैव च ॥ ४४ ॥
पञ्चदशाक्षरीं विद्यां तथैव च समुद्धरेत् ।
सेयं सप्तदशी विद्या साक्षाज्जाग्रत्स्वरूपिणी ॥ ४५ ॥

देवी उवाच

ततः कथय देवेश राजराजेश्वरीं पराम् ।
षोडशार्णां महाविद्यां त्रैलोक्यवशदायिनीम् ॥
जननीं सर्वमन्त्राणां परब्रह्मस्वरूपिणीम् ॥ ४६ ॥

ईश्वर उवाच

राजराजेश्वरीं विद्यां तथास्याः कवचं प्रिये ।
यो जानाति महीपृष्ठे स देवो न तु मानुषः ॥ ४७ ॥
राजराजेश्वरी विद्या कथ्यते शृणु पार्वति ।
रमाबीजं समुद्धृत्य मायाबीजं नियोजयेत् ॥ ४८ ॥
कामबीजं समालिख्य वाग्बीजं तदनन्तरम् ।
चतुर्दशस्वरोपेतं चन्द्रं बिन्दुयुगान्वितम् ॥ ४९ ॥
प्रणवं भुवनेशानीं रमां चैव महेश्वरि ।
पञ्चदशाक्षरीं पश्चादुद्धरेत् परमेश्वरि ॥ ५० ॥
व्युत्क्रमात् परमेशानि ! पूर्वोक्तं बीजपञ्चकम् ।
आलिख्य सम्पुटीकुर्याद् विद्येयं द्व्यष्टकूटका ॥ ५१ ॥
तुरीयेयं महाविद्या केवलात्मस्वरूपिणी ।
षोडशार्णा महाविद्या श्रीविद्या कथिता परा ॥ ५२ ॥
वक्त्रकोटिसहस्रैस्तु जिह्वाकोटिशतैरपि ।
वर्णितुं नैव शक्येयं श्रीविद्या षोडशाक्षरी ॥ ५३ ॥
षोडशार्णा महाविद्या सर्वतन्त्रेषु गोपिता ।
तव स्नेहान्महेशानि ! गन्धर्वे वै प्रकाशिता ॥ ५४ ॥

॥ इति गन्धर्वतन्त्रे द्वितीयः पटलः ॥ २ ॥



## तृतीय पटलः

देवी उवाच

देवदेव जगन्नाथ भक्तानामार्त्तिनाशन ।
पञ्चपञ्चाक्षरीं विद्यां पञ्चमीं सर्वकामदाम् ॥
अधुना कथयेशान समग्रां पापनाशिनीम् ॥ १ ॥

ईश्वर उवाच

दुर्लभा पञ्चमो विद्या पञ्चकूटात्मिका शुभा ।
भुक्तिमुक्तिप्रदा शुद्धा सुखदा दुःखनाशिनी ॥ २ ॥

शृणु देवि ! प्रवक्ष्यामि यथा सा चिन्त्यते परा ।
गुरुभक्तेन शुद्धेन साधकेन सुबुद्धिना ॥ ३ ॥
देवि ! पञ्चात्मकं सर्वं जगदेतच्चराचरम् ।
पृथिव्यापस्तथा तेजो वायुराकाशमेव च ॥ ४ ॥
पृथिवी ब्राह्मणी शक्तिर्जलं नारायणी तथा ।
तेजो रुद्रस्य रुद्राणी वायुरीशस्य चेश्वरी ॥ ५ ॥
माहेश्वरी तथाऽऽकाशं शक्तिर्महेश्वरस्य च ।
पञ्चदेवात्मकं पञ्च पञ्चमी पञ्च शक्तयः ॥ ६ ॥
या शक्तिः सर्वभूतानां जगच्चैतन्यरूपिणी ।
सा एव पञ्चमी विद्या जगदाधाररूपिणी ॥ ७ ॥
सा एव हि जगत् सर्वं सा एव परमा कला ।
नान्यत् परतरं देवि विद्यते तद्बहिष्कृते ॥ ८ ॥

पञ्चविंशतितत्त्वेन कूटके पञ्चदेवताः ।
आदौ कामेश्वरी ज्ञेया ततो वज्रेश्वरी शुभा ॥ ९ ॥

तृतीया भगमाला च तूर्या त्रिपुरसुन्दरी ।
श्रीमत्त्रिपुरसुन्दर्याश्चिन्तनीया परा कला ॥ १० ॥

सा एव पञ्चमी शक्तिः परंब्रह्मस्वरूपिणी ।
परमानन्दरूपं यज्जगतां कारणं महत् ॥ ११ ॥

तस्या देव्यास्तु तद्रूपमुदयास्तविवर्जितम् ।
स्थूलत्वे स्थूलरूपा सा सूक्ष्मत्वे सूक्ष्मरूपिणी ॥ १२ ॥

स्थूलसूक्ष्मप्रभेदेन जगत्कारणरूपिणी ।
योऽसौ विश्वेश्वरो देवो विश्वं व्याप्य स्थितश्च यः ॥ १३ ॥

सैव विश्वेश्वरी देवी व्यापकत्वेन संस्थिता ।
नित्या सा सुखरूपा च महासुखशुभप्रदा ॥ १४ ॥

तत्स्वरूपानन्दमया परमानन्दरूपिणी ।
किं पुनः शक्तिरूपेण परंब्रह्मस्वरूपिणी ॥ १५ ॥

तस्याः पुनः पुनः सृष्टिर्जायते लीयते सदा ।
तस्माच्छक्तिप्रधाना च शक्त्या व्याप्तमिदं जगत् ॥ १६ ॥

सर्वदानन्दहृदयश्चाद्वैतानन्दपारगः ।
समयाचारसम्पन्नो भोगी भोगपरायणः ॥ १७ ॥

सदा ज्ञानविशुद्धात्मा गुरुभक्तो जितेन्द्रियः ।
गन्धर्वरूपवान् भूत्वा पञ्चमीं समुपासयेत् ॥ १८ ॥

पृथिव्यां मानवः श्रेष्ठो यदि जानाति पञ्चमीम् ।
शापभ्रष्टेन गन्धर्वो न नरो दैवयोगतः ॥ १९ ॥

यो जानाति महाविद्यां पञ्चकूटात्मिकां पराम् ।
स भवेत् खचरो देवि ! षण्मासान्नात्र संशयः ॥ २० ॥

सदा ज्ञानविशुद्धात्मा मोक्षभागी भवेन्नरः ।
भोगेन लभते मुक्तिं यदि जानाति पञ्चमीम् ॥ २१ ॥

पञ्चपञ्चाक्षरीं विद्यां योऽसौ जानाति साधकः।
स पूज्यः सर्वलोकेषु स देवो न तु मानुषः॥ २२॥

त्रिकूटमेककूटेषु कूटमेकं त्रिपञ्चकम्।
पञ्चपञ्चाक्षरी विद्या त्रिकूटा पञ्चकूटकैः॥ २३॥

पञ्चविंशतितत्त्वेन वर्णरूपेण संस्थिता।
एकवर्णे त्रिकूटे च त्रिकूटे पञ्चदेवताः॥ २४॥

एकवर्णे पञ्चदशदेवताः परिकीर्तिताः।
पञ्चविंशतितत्त्वेन त्रिकूटे पञ्चसंख्यया॥ २५॥

पञ्चसप्ततिपूर्वाणि तेन तासां शतत्रयम्।
पञ्चकूटान्विता विद्या परा सौभाग्यसुन्दरी॥ २६॥

वर्णरूपेण सा देवी जगदाधाररूपिणी।
अक्षरात् सर्वमुत्पन्नं जगदेतच्चराचरम्॥ २७॥

नित्यमेकाक्षरं ब्रह्म अक्षरं परमं पदम्।
जप्यमेकाक्षरं ब्रह्म आदिकूटान्तमध्यगम्॥ २८॥

जप्त्वा तत्साधयेत् सर्वं बहुजप्तेन किं फलम्।
तदेव परमं गुह्यं महासौभाग्यदायकम्॥ २९॥

तदेव पञ्चकूटं तु पञ्चतत्त्वेन पञ्चमी।
कामं विष्णुयुतं महामाया शक्रश्च पार्वति॥ ३०॥

पश्चाद् देवि! महामायाबीजं चान्ते नियोजयेत्।
शिवबीजं समुद्धृत्य शक्तिबीजं तदन्तरम्॥ ३१॥

तदधः कामबीजं तु भूव्योमानिलसंयुतम्।
चतुर्थस्वरसंयुक्तम् अर्द्धेन्दुबिन्दुभूषितम्॥ ३२॥

प्रथमं कामराजस्य कूटं त्रैलोक्यपूजितम्।
मध्यकूटं प्रवक्ष्यामि कामराजस्य मध्यगम्॥ ३३॥

अतिगुह्यतरं देवि! स्नेहाद् वक्ष्यामि केवलम्।
वियद्विष्णुयुतं देवि मादनं तदनन्तरम्॥ ३४॥

तदधो हंसबीजं तु इन्द्रबीजं समुद्धरेत्।
विष्णोः पदं वह्नियुतं मायाबीजं समुद्धरेत्॥ ३५॥

मध्यकूटमिदं प्रोक्तं महासौभाग्यदायकम्।
तुरीयं तु प्रवक्ष्यामि शृणु देवि! सुदुर्लभम्॥ ३६॥

कामबीजं महेशानि! शिवबीजं ततः परम्।
तदधो वायुबीजं तु इन्द्रबीजं नियोजयेत्॥ ३७॥

वियद्वह्निसमायुक्तं चतुर्थस्वरभूषितम्।
अर्द्धेन्दुबिन्दुसंयुक्तं चतुर्थं कूटमुत्तमम्॥ ३८॥

शक्तिकूटं प्रवक्ष्यामि शृणु देवि! सुदुर्लभम्।
यच्छ्रुत्वा साधकाः सर्वे लभन्ते मुक्तिमुत्तमाम्॥ ३९॥

प्राणबीजं समुद्धृत्य कामबीजं समुद्धरेत्।
इन्द्रबीजं तथा देवि! क्रमेण विनियोजयेत्॥ ४०॥

सान्तं वह्निसमायुक्तं चतुर्थस्वरसंयुतम्।
नादबिन्दुकलायुक्तं शक्तिकूटं समुद्धरेत्॥ ४१॥

फलं चास्या विशेषेण साधनं च वरानने।
कथितव्यं महादेवि! संक्षेपात् कथ्यतेऽधुना॥ ४२॥

एषा विद्या महाविद्या गुह्याद् गुह्यतमा प्रिये।
भोगदा मोक्षदा चैव सर्वकामार्थसिद्धिदा॥ ४३॥

वाग्भवं प्रथमं कूटं शक्तिकूटं तु पञ्चमम्।
मध्यकूटत्रयं देवि! कामबीजं मनोहरम्॥ ४४॥

कामबीजं प्रवक्ष्यामि कूटभेदेन तच्छृणु।
ज्ञात्वा तत् साधयेद् देवि! असाध्यमपि भूतले॥४५॥

सौभाग्यं प्रथमं कूटं महासौभाग्यदायकम् ।
त्रिकूटमेककूटेन कामबीजं महत्परम् ॥ ४६ ॥

एवं कूटत्रयेणैव नित्या सौभाग्यसुन्दरी ।
एकत्र पञ्चकूटेन नित्यं कूटत्रयान्विता ॥ ४७ ॥

दुर्लभा सर्वलोकेषु महासौभाग्यसुन्दरी ।
एतस्या एव विद्याया मध्यकूटस्य मध्यमम् ॥ ४८ ॥

जप्त्वाऽऽनन्दमयो भूत्वा सर्वकाममुपालभेत् ।
इयं स्वप्नावती नाम्ना विद्या त्रैलोक्यविश्रुता ॥ ४९ ॥

आकर्षणकरी विद्या जगदाह्लादकारिणी ।
साधनं च प्रवक्ष्यामि यस्मादाकर्षणं भवेत् ॥ ५० ॥

स्वर्गे मर्त्ये च पाताले नारीणां पुरुषस्य च ।
नार्यो वश्या विशेषेण वशं याति जगत्त्रयम् ॥ ५१ ॥

भोगदा मोक्षदा चैषा विद्या गन्धर्वसेविता ।
महाभोगवती विद्या महदैश्वर्यदायिनी ॥ ५२ ॥

तथा मधुमती सिद्धिर्जायतेऽस्याः प्रसादतः ।
बृहत्त्वं च लघुत्वं च दर्शनादर्शनं तथा ॥ ५३ ॥

प्रवेशं परकायस्य कामरूपो भवेद् ध्रुवम् ।
पुंसां रूपं स्त्रियो रूपं यच्चान्यद् रूपमुत्तमम् ॥ ५४ ॥

सर्वं तत्परमं रूपं तस्या एव न संशयः ।
कान्तिः पुष्टिस्तथा तुष्टिः श्रद्धा लज्जा दया घृणा ॥ ५५ ॥

धृतिः शान्तिस्तथा ऋद्धिः सिद्धिर्बुद्धिर्मतिः क्षमा ।
महामाया महाबुद्धिर्महाविद्या महोदया ॥ ५६ ॥

महामहत्करी विद्या ब्रह्मविद्यैव केवला ।
महाभूतदिने नक्तं श्मशाने यदि साधकः ॥ ५७ ॥

सहस्रैकप्रमाणेन किं न सिध्यति भूतले ।
योजयेत् पञ्चमीं विद्यां परां त्रैलोक्यमातृकाम् ॥ ५८ ॥

स नरो देवदेवेशो महादेव इवाऽपरः ।
भोगात्मा लभते मुक्तिं नानाभोगेन केवलम् ॥ ५९ ॥

भुनक्ति बहुलान् भोगान् रसान् नानाविधानपि ।
यद् रूपमक्षरं लोके भुनक्ति बहुलं सुखम् ॥ ६० ॥

शून्यागारे विहारे च चिन्तयेन्नो जपेत् पराम् ।
आकर्षणं भवेत् तस्य सर्वकामं ततो लभेत् ॥ ६१ ॥

प्रथमानन्दहृदयो द्वितीयमुपभोगवान् ।
तृतीयमुपभोगेन चतुर्थमपि कामयेत् ॥ ६२ ॥

पञ्चमं प्रथमं पुण्यं मन्त्रसिद्धिकरं परम् ।
पञ्चमं तु विशेषेण भोगयेत् कामयेत् सदा ॥ ६३ ॥

पञ्चमाभ्यासनाद् वीरः पूजाया लभते फलम् ।
कुण्डगोलोद्भवैर्द्रव्यैः स्वयम्भुकुसुमेन च ॥ ६४ ॥

रोचनाकुङ्कुमाभ्यां च जपमालां प्रलेपयेत् ।
कर्पूरागुरुकस्तूरीरोचनाकुङ्कुमेन च ॥ ६५ ॥

जपमालामुपस्कृत्य प्रतिष्ठां विधिवच्चरेत् ।
तद्द्रव्यैरक्षतान् शुद्धान् संश्राव्य च पुनः पुनः ॥ ६६ ॥

वारिणा शोधितं कृत्वा सिन्दूरे विक्षिपेत् ततः ।
पटे चित्रमयं शुद्धे नक्तं यः पूजयेन्नरः ॥ ६७ ॥

जप्त्वा विद्यां च मालायां सर्वकाममुपालभेत् ।
आनीय कन्यकां दिव्यां प्रमदां यौवनोन्नताम् ॥ ६८ ॥

उक्षितां मूलमन्त्रेण सुशीलां चारुहासिनीम् ।
सर्वदानन्दहृदयां घृणालज्जाविवर्जिताम् ॥ ६९ ॥

गुरुभक्तां सुवेशां च देवतापूजने रताम् ।
तस्य गात्रे न्यसेन्मन्त्री पञ्चकामान् शरानपि ॥ ७० ॥

पञ्चकूटं न्यसेन्मन्त्री पञ्चाशन्मातृकां न्यसेत् ।
दिव्यमालां समादाय साधको विजितेन्द्रियः ॥ ७१ ॥

सहस्रैकप्रमाणेन जपेत् स्वप्नावतीं ततः ।
अनेनैव विधानेन भवेदाकर्षणं महत् ॥ ७२ ॥

तस्यास्तु मदनागारे पूजयेत् परमेश्वरीम् ।
सर्वसंक्षोभणीं मुद्रां बद्ध्वा योनिं प्रचालयेत् ॥ ७३ ॥

कामेश्वरीस्वरूपां तां चिन्तयेत् साधकोत्तमः ।
कामेश्वरस्वरूपं च आत्मानं चापि भावयन् ॥ ७४ ॥

स्वयमक्षोभितो भूत्वा साधकः पञ्चमं चरन् ।
तस्याः पुष्पं स्वयं यावद् रक्षणीयं प्रयत्नतः ॥ ७५ ॥

ताम्बूलगन्धपुष्पैश्च प्रत्यहं पूजयेच्च ताम् ।
नानारसान्नपानेन तृप्तिमाचर्य यत्नतः ॥ ७६ ॥

वस्त्रालङ्कारभूषाद्यैस्तस्याः सन्तोषमानयेत् ।
यथाकाले तथा पुष्पं स्वयं तद्गोप्यरूपतः ॥ ७७ ॥

गृहीत्वा तु प्रयत्नेन स्वयम्भुकुसुमं हि तत् ।
स्वयम्भुकुसुमं दिव्यं त्रैलोक्येष्वपि दुर्लभम् ॥ ७८ ॥

प्राप्नोति साधकश्रेष्ठो दुर्लभं साधयेद् भुवि ।
स्वयम्भुपुष्पयोगेन साक्षतेन सदाऽर्चयेत ॥ ७९ ॥

विद्यां स्वप्नावतीं जप्त्वा क्षिप्रमाकर्षणं भवेत् ।
देवताश्च ग्रहा नागा दानवा राक्षसाश्च ये ॥ ८० ॥

राजानश्च स्त्रियः सर्वा नित्यं वश्या भवन्ति हि ।
स्वयम्भुकुसुमैः पूजां प्रत्यहं यः समाचरेत् ॥ ८१ ॥

जप्त्वा वै दिव्यमालायां सर्वकाममुपालभेत् ।

पार्वती उवाच

पुराऽप्येकादशी विद्या भवता कथिता मयि ॥ ८२ ॥
नाराधिता मया यस्मात् तस्मान्मृत्युवशं गता ।
सारात् सारतरां विद्यां श्रोतुमिच्छामि साम्प्रतम् ॥ ८३ ॥

ईश्वर उवाच

एकादशाक्षरी विद्या भैरव्याः कथिता पुरा ।
इदानीं तव प्रीत्यर्थं कथयामि तथा पराम् ॥ ८४ ॥
मादनं गोत्रमिच्छान्तो रेफमायार्द्धचन्द्रवान् ।
नादबिन्दुसमायुक्तो वाग्भवः परमेश्वरि ॥ ८५ ॥
ब्रह्मा च गगनं शक्रो नकुलीशोऽनलः शशी ।
माया बिन्दुः सनादेन कामबीजं समुद्धरेत् ॥ ८६ ॥
शक्तिर्मादनशक्रश्च हरो वह्नीन्दुमायया ।
कलानादसमाक्रान्तः कथितः कामदो मनुः ॥ ८७ ॥
यस्मै कस्मै न दातव्यो बान्धवाय च पार्वति ।
मनुर्विमृष्य दातव्यो ज्येष्ठपुत्राय धीमते ॥ ८८ ॥

॥ इति गन्धर्वतन्त्रे तृतीयः पटलः ॥ ३ ॥

# चतुर्थः पटलः

पार्वती उवाच

देवदेव महादेव लोकानां हितकारक ।
यत् सूचितं पुरा नाथ किमर्थं न प्रकाशितम् ॥ १ ॥
राजराजेश्वरीदेव्यास्त्रिपुरायाः शुभावहम् ।
कवचं यदि मे प्रीतः कथयस्व वृषध्वज ॥ २ ॥

ईश्वर उवाच

लक्षवारसहस्राणि वारितासि पुनः पुनः ।
स्त्रीस्वभावान्महादेवि ! पुनस्त्वं परिपृच्छसि ॥ ३ ॥
अत्यन्तं दुर्लभं गुह्यं कवचं सर्वकामदम् ।
तथापि कथयाम्यद्य तव प्रीत्या वरानने ॥ ४ ॥
त्रैलोक्यमोहनं नाम त्रिषु लोकेषु दुर्लभम् ।
सर्वसौभाग्यजननं भोगमोक्षफलप्रदम् ॥ ५ ॥
यत् कृत्वा दानवान् विष्णुर्निजघान सुदारुणान् ।
लोकान् वितनुते ब्रह्मा संहर्त्ताऽहं यतः प्रिये ॥ ६ ॥
धनाधिपः कुबेरोऽपि यतः सर्वे दिगीश्वराः ।
नैतत् परतरं गुह्यं प्रतिजानीहि पार्वति ॥ ७ ॥
वेदशास्त्रपुराणेषु सारमेतद् वरानने ।
पुत्रदारादिसहितं [1]शिरो देयं कथञ्चन ॥ ८ ॥
न देयं कवचं गुह्यं प्राणैः कण्ठगतैरपि ।
शृणु सर्वाङ्गसुभगे दिव्यं कवचमुत्तमम् ॥ ९ ॥

---

१. शिव–क० ख० ।

राजराजेश्वरीदेव्याः कवचस्य ऋषिः शिवः ।
छन्दो विराड् देवता च महात्रिपुरसुन्दरी ॥ १० ॥

हंसः शक्तिः पराबीजं रमाबीजं च कीलकम् ।
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः ॥ ११ ॥

त्रिपुरा त्रिविधा पातु मम सर्वार्थसिद्धये ।
ऐं क्लीं सौः वदने बाला पातु सर्वार्थसिद्धिदा ॥ १२ ॥

[1]हैस्रं हसकलरीं [2]हैस्रां
कण्ठं पातु महादेवी श्रीमत्त्रिपुरभैरवी ।
हृदयेऽव्यान्महेशानी महात्रिपुरसुन्दरी ॥ १३ ॥

राजराजेश्वरी विद्या षोडशी या महोदया ।
ब्रह्मरन्ध्रे सदा पातु कमला परमेश्वरी ॥ १४ ॥

गिरिराजसुता देवी पातु नित्यं च शीर्षके ।
कामबीजं ललाटेऽव्याद् वाग्बीजं कण्ठदेशके ॥ १५ ॥

सौः पातु तथा पार्श्वे प्रणवो बाहुमूलके ।
शम्भुप्रिया सदा पातु बाहुदक्षिणसव्ययोः ॥ १६ ॥

विष्णुप्रिया सदा पातु मणिबन्धद्वये तथा ।
पार्वतीशः करे पातु नेत्रे नक्षत्रवल्लभः[3] ॥ १७ ॥

श्रोत्रे रतिप्रियः पातु घ्राणे शक्रः सदाऽवतु ।
पृष्ठदेशे सदा पातु पार्वती परमेश्वरी ॥ १८ ॥

[4]ह्सौः श्वासे च निःश्वासे पातां परमसिद्धिदौ ।
कामः कामे सदा पातु पिनाकी लिङ्गगोचरे ॥ १९ ॥

---

१. हेस्लं–ग० ।
२. है स्लां–ग० ।
३. वल्लभ–ख० ।
४. हेसौ–क० ख० ।

पृथ्वी सर्वांशके पातु हृल्लेखा हृदयेऽवतु ।
स्तनौ [1]भृगुप्रिया पातु कुक्षौ च स [2]पुरान्तकः ॥ २० ॥
नेत्रे वज्रधरः पातु माया वै जठरेऽवतु ।
पदद्वन्द्वे च सौः पातु ऐं जिह्वानिलयेऽवतु ॥ २१ ॥
क्लीङ्कारः सर्वदा पातु [3]दन्तौष्ठयोर्वरानने ।
शीर्षादिपादपर्यन्तं सर्वाङ्गं भुवनेश्वरी ॥ २२ ॥
रक्षाहीनं च यत् स्थानं वर्जितं कवचेन तु ।
तत् सर्वं परमेशानि ! पातु नित्यं हरिप्रिया ॥ २३ ॥
आधारे वाग्भवः पातु कामराजो हृदि प्रिये ।
शक्तिकूटं तथा पातु भ्रुवोर्मध्ये च पार्वति ॥ २४ ॥
शीर्षे कूटत्रयं पातु ललाटे सर्वमन्त्रकः ।
अष्टाविंशतिवर्णेयं मुखवृत्ते सदाऽवतु ॥ २५ ॥
षोडशीयं महाविद्या ब्रह्मविद्यैव केवला ।
भोगमोक्षप्रदा देवी केवलात्मस्वरूपिणी ॥ २६ ॥
कामेश्वरी ललाटेऽव्यान्मुखेषु भगमालिनी ।
दक्षनेत्रे सदा पातु [4]नित्यक्लिन्ना महोदया ॥ २७ ॥
भेरुण्डा वामनेत्रेऽव्यात् कर्णे वै वह्निवासिनी ।
महाविद्येश्वरी पातु वामकर्णप्रदेशके ॥ २८ ॥
[6]दक्षनासापुटे पातु शिवदूती महेश्वरी ।
वामनासापुटे पातु त्वरिता सर्वसिद्धिदा ॥ २९ ॥

---

१. विष्णु–क० ख० ।
२. पुरान्तकम्–ख० ।
३. दन्तोष्ठयो–ग० ।
४. नित्यं दीप्ता–क० ख० ।
५. कर्णे–ग० ।
६. 'दक्षनासा' इत्यारभ्य 'गण्डप्रदेशके' इत्यन्तं नास्ति–ग० ।

दक्षगण्डे सदा पातु नित्यं मां कुलसुन्दरी ।
त्रैलोक्यविमला पातु वामगण्डप्रदेशके ॥ ३० ॥

ओष्ठे नीलपताकाऽव्यादधरे विजयाऽवतु ।
ऊर्ध्वदन्ते सदा पातु देवी मां सर्वमङ्गला ॥ ३१ ॥

अधोदन्तप्रदेशेऽव्यान्नित्यं ज्वालांशुमालिनी ।
विचित्रा सर्वदा पातु नित्यं मूर्द्धनि पार्वति ॥ ३२ ॥

आसां प्रधानभूता या महात्रिपुरसुन्दरी ।
षोडशी सा सदा पातु मुखे वै परमेश्वरी ॥ ३३ ॥

पृष्ठदेशे सदा पान्तु गुरवस्त्रिविधाश्च ते ।
पादयोः सर्वदा पातु त्रिपुरा परमेश्वरी ॥ ३४ ॥

अनुदेशे सदा पातु देवी मां त्रिपुरेश्वरी ।
ऊरुद्वये सदा पातु देवी त्रिपुरसुन्दरी ॥ ३५ ॥

त्रिपुरवासिनी देवी कटिदेशे सदाऽवतु ।
त्रिपुराश्रीश्च मां नित्यं गुह्यदेशे सदाऽवतु ॥ ३६ ॥

मूलाधारे सदा पातु देवी त्रिपुरमालिनी ।
नाभौ त्रिपुरसिद्धाऽव्यात् त्रिपुरा च[1] सदा हृदि ॥ ३७ ॥

ब्रह्मरन्ध्रे सदा पातु महात्रिपुरसुन्दरी ।
आसां तु मन्त्रबीजानि प्रोक्तस्थानेषु विन्यसेत् ॥ ३८ ॥

पाषण्डगणमध्ये तु बुद्धो मां परिरक्षतु ।
ब्रह्माऽव्याद् ब्रह्मसंहा[घा]ते शिवो मां योगसिद्धये ॥ ३९ ॥

ज्ञाने मां भास्करः पातु मोक्षे नारायणः प्रभुः ।
या शक्तिः सर्वभूतानां विद्याऽविद्येति गीयते ॥ ४० ॥

---

१. प्र–ग० ।

सा शक्तिः सर्वदा पातु स्त्रीपुत्रधनसम्पदि ।
अणिमा पश्चिमे पातु लघिमा चोत्तरेऽवतु ॥ ४१ ॥
पूर्वतः पातु महिमा ईशित्वा दक्षिणेऽवतु ।
वशित्वा वायुनिलये ईशे प्राकाम्यसिद्धिदा ॥ ४२ ॥
भुक्तिसिद्धिस्तथाग्नेये पात्विच्छासिद्धी राक्षसे ।
अधः पातु प्राप्तिसिद्धिर्मोक्षसिद्धिस्तथोर्ध्वके ॥ ४३ ॥
ब्रह्माणी सन्ध्ययोः पातु माहेश्वरी दिवाऽवतु ।
मध्याह्ने पातु कौमारी रात्रौ च शत्रुवल्लभा ॥ ४४ ॥
ब्राह्मे मुहूर्त्तके पातु वैष्णवी सर्वसिद्धिदा ।
निशीथे पातु वाराही चामुण्डा शत्रुविग्रहे ॥ ४५ ॥
महोत्साहे महालक्ष्मीः पातु नित्यं महेश्वरी ।
शीर्षे संक्षोभणी पातु तारिणी हृदयेऽवतु ॥ ४६ ॥
[1]आकर्षणी शिखायां तु कवचे पातु वश्यदा ।
उन्मादिनी तथा नेत्रे सर्वगात्रे महाङ्कुशा ॥ ४७ ॥
त्रिखण्डा भुजयोः पातु बीजे बीजस्वरूपिणी ।
खेचरी पादयोः पातु योनिमुद्रा च सर्वतः ॥ ४८ ॥
स[का]माकर्षणरूपाऽव्यात् सदाऽऽकर्षणकर्मणि ।
बुद्ध्याकर्षणरूपाऽव्यात् परबुद्धिविकर्षणे ॥ ४९ ॥
अहङ्कारे सदा पातु अहङ्कारविकर्षणी ।
शब्दाकर्षणरूपाऽव्याच्छब्दाकर्षणकर्मणि ॥ ५० ॥
स्पर्शाकर्षणरूपा मां पातु स्पर्शनकर्मणि ।
रूपाकर्षणरूपाऽव्यात् पररूपविकर्षणे ॥ ५१ ॥

---

१. आर्कर्षिणी–ग० ।

[1]रसाकर्षणरूपाऽव्याद् रसे वै परमेश्वरी ।
गन्धाकर्षणरूपा मां पातु गन्धे च सर्वदा ॥ ५२ ॥
चित्ताकर्षणरूपा मां पायादाकृष्टिकर्मणि ।
धैर्याकर्षणरूपा तु पातु धैर्यविधौ सदा ॥ ५३ ॥
स्मृत्याऽऽकर्षणरूपाऽव्याज्ज्ञानाकर्षणकर्मणि ।
नामाकर्षणरूपाऽव्यान्नामव्याहरणे सदा ॥ ५४ ॥
बीजाकर्षणरूपा मां सर्वबीजप्ररोपणे ।
परजीवाकर्षणे पातु आत्माकर्षणरूपिणी ॥ ५५ ॥
अमृताकर्षणी पातु अमृतीकरणी सदा ।
[2]शरीराकर्षणी पातु सदा शरीररक्षणे ॥ ५६ ॥
अनङ्गकुसुमा पातु पुरतः सर्वकर्मणि ।
अनङ्गमेखला पातु पृष्ठतः परमेश्वरी ॥ ५७ ॥
अनङ्गमदना पातु वामतो मे महेश्वरी ।
दक्षिणे सर्वदा पातु अनङ्गमदनातुरा ॥ ५८ ॥
नित्यं चाऽनङ्गरेखाऽव्याद्दूर्ध्वं मम सदा प्रिये ।
अनङ्गवेगिनी पातु अधो मे परमेश्वरी ॥ ५९ ॥
तथाऽनङ्गाङ्कुशा नित्यं पातु मां दिक्षु सर्वदा ।
अनङ्गमालिनी पातु विदिक्षु मम सर्वदा ॥ ६० ॥
सर्वसंक्षोभणी चोद्र्ध्वे पातु मां जगदीश्वरी ।
सर्वविद्राविणी चाधो दिक्षु सर्वविकर्षिणी[3] ॥ ६१ ॥
सर्वाह्लादकरी शक्तिर्विदिक्षु परिरक्षतु ।
सर्वसम्मोहिनी पातु समन्तात् परमेश्वरी ॥ ६२ ॥

---

१. रसाकर्षद–ख० ।
२. शरीराकर्षणे–क० ख० ।
३. विकर्षणी–ग० ।

अन्तर्बहिश्च मां पातु सर्वस्तम्भनकर्मणि ।
तथैव पातु मां नित्यमाकाशे सर्वजृम्भणी ॥ ६३ ॥

[1]पातालै चैव मां पातु सर्ववश्यकरी तथा ।
देवलोके सदा पातु सर्वरञ्जनकारिणी ॥ ६४ ॥

सर्वोन्मादनशक्तिर्मां भूतले परिरक्षतु ।
सर्वार्थसाधनी शक्तिः पायाद् भूतगणालये ॥ ६५ ॥

सिद्धानामालये पातु सर्वसम्पत्तिपूरणी ।
राक्षसानां च यक्षाणां सर्वमन्त्रमयी गृहे ॥ ६६ ॥

असुराणां निवासे तु सर्वद्वन्द्वक्षयङ्करी ।
सर्वसिद्धिप्रदा देवी पातु राजगृहे सदा ॥ ६७ ॥

सर्वसम्पत्प्रदा पातु स्वगृहे सर्वसम्पदि ।
सर्वप्रियङ्करी पातु सर्वलोकेषु सर्वदा ॥ ६८ ॥

सर्वमङ्गलकार्येऽव्यात् सर्वमङ्गलकारिणी ।
सर्वकामप्रदा देवि ! सर्वकार्येषु सर्वदा ॥ ६९ ॥

ऐश्वर्ये सर्वदा पातु सर्वैश्वर्यप्रदायिनी ।
सर्वमृत्युप्रशमनी पायान्नित्यं यमालये ॥ ७० ॥

सर्वारम्भे सदा पातु सर्वविघ्नविनाशिनी ।
देहसौन्दर्यकाले तु पातु सर्वाङ्गसुन्दरी ॥ ७१ ॥

सर्वसौभाग्यकाले तु सर्वसौभाग्यदायिनी ।
सर्वज्ञा च गृहे पातु सर्वशक्तिमयी रणे ॥ ७२ ॥

सर्वैश्वर्यप्रदा मार्गे सर्वज्ञानमयी जले ।
[2]सर्वव्याधिषु सर्वत्र सर्वव्याधिविनाशिनी ॥ ७३ ॥

---

१. पाताल–ख० ।
२. सर्वाधिषु–क० ख० ।

पर्वते पातु प्रबला सर्वाधारस्वरूपिणी ।
सर्वपापहरा पातु सर्वकर्मसु सर्वदा ॥ ७४ ॥

सर्वानन्दकरी देवी नानासुकृतगोचरे[1] ।
सर्ववैरिभये[2] पातु सर्वरक्षास्वरूपिणी ॥ ७५ ॥

सर्वसङ्कल्पकार्येषु सर्वेप्सितफलप्रदा ।
वशिनी [3]वश्यकार्येषु कामेशी स्तम्भनेऽवतु ॥ ७६ ॥

[4]मोहने मोहिनी पातु विमलोच्चाटनेऽवतु ।
अरुणा पातु मां वादे जयिनी जल्पकर्मणि ॥ ७७ ॥

सर्वेश्वरी [5]काम्यकार्ये कौलिनी भेदकर्मणि ।
जृम्भणे सर्वदा पान्तु[6] शराः पञ्च महेश्वरि ॥ ७८ ॥

धनुर्मोहविधौ पातु पाशस्तु [7]वश्यकर्मणि ।
महातेजोमयः पातु स्तम्भने मां तथाऽङ्कुशः ॥ ७९ ॥

सर्वज्ञा हृदये पातु [8]नित्यकृत्या च शीर्षके ।
अनादिबोधिका पातु नित्यं शिखाप्रदेशके ॥ ८० ॥

कवचे मां स्वतन्त्राऽव्यान्नेत्रे नित्यमलुप्तिका ।
अचिन्त्यशक्तिरस्त्रेषु पायात् परमसिद्धिदा ॥ ८१ ॥

कामेश्वरी रतौ पातु युद्धे वज्रेश्वरी तथा ।
नित्यं पातु महेशानि श्रीकामे भगमालिनी ॥ ८२ ॥

---

१. नानाघकृतगोचरे–क० ख० ।
२. वैरी–क० ।
३. कार्येष्वव्यात्–क० ख० ।
४. मेहने–क० ख० ।
५. काम–ग० ।
६. पातु–क० ग० ।
७. वश–ग० ।
८. नित्यं–ग० ।

रसे रूपे च गन्धे च शब्दे स्पर्शे च पातु माम् ।
सर्वानन्दमयी देवी महात्रिपुरसुन्दरी ॥ ८३ ॥
ईशाने बटुकः पातु आग्नेय्यां योगिनीगणः ।
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि पान्तु नः ॥ ८४ ॥
क्षेत्रेशो नैर्ऋते पातु गणेशो वायुमन्दिरे ।
मातङ्गवनिता पातु शेषिका कुलसुन्दरी ॥ ८५ ॥
शक्तिर्मां सर्वदा पातु मूलाधारनिवासिनी ।
इतीदं कवचं देवि ! त्रिषु लोकेषु दुर्लभम् ॥ ८६ ॥
यन्नोक्तं डामरे तन्त्रे यन्नोक्तं रुद्रयामले ।
सर्वतन्त्रेषु यन्नोक्तं गन्धर्वे प्रकटीकृतम् ॥ ८७ ॥
तव प्रीत्या महादेवि ! गोपनीयं प्रयत्नतः ।
तव नाम्नि स्मृते देवि ! सर्वयज्ञफलं लभेत् ॥ ८८ ॥
सर्वत्रैव जयप्राप्तिर्वाञ्छा सर्वत्र सिध्यति ।
नाम्नः शतगुणं स्तोत्रं व्याख्यानं चापि तच्छ्रुतम् ॥ ८९ ॥
तस्माच्छतगुणं ध्यानं ध्यानाच्छतगुणो मनुः[1] ।
मन्त्राच्छतगुणं देवि ! कवचं ते मयोदितम् ॥ ९० ॥
यस्मै कस्मै न दातव्यं सुगोप्यमतिदुर्लभम् ।
न देयं परशिष्याय कृपणाय सुरेश्वरि ॥ ९१ ॥
शिष्याय भक्तिहीनाय चुम्बकाय तथैव च ।
गुरुभक्तिविहीनाय परहिंसारताय च ॥ ९२ ॥
निन्दकाय कुशीलाय दाम्भिकाय महेश्वरि ।
अभक्तेभ्योऽपि पुत्रेभ्यो दत्त्वा मृत्युमवाप्नुयात् ॥ ९३ ॥

१. मनुम्–ख० ।

यो ददाति निषिद्धेभ्यः कवचं मन्मुखाच्च्युतम् ।
तस्य नश्यन्ति देवेशि ! विद्याऽऽयुःकीर्तिसश्चयाः[१] ॥ ९४ ॥

तं हिंसन्ति च योगिन्यो मदीयशासनात् प्रिये ।
परे नरकमाप्नोति जन्मकोटिशतानि च ॥ ९५ ॥

सर्वलक्षणयुक्ताय मन्त्रयन्त्ररताय च ।
शिष्याय शान्तचित्ताय गुरुभक्तिरताय च ॥ ९६ ॥

उदके लवणं लीनं यथा भवति पार्वति ।
मनो भवति वै लीनं पादयोः श्रीगुरोः प्रिये ॥ ९७ ॥

तदा देयं महद् गुह्यं कृपया चातिदुर्लभम् ।
गुरोः पादप्रसादेन श्रीविद्या यदि लभ्यते ॥ ९८ ॥

तथैव कवचं देवि ! त्रिषु लोकेषु दुर्लभम् ।
स च देवो हरः साक्षात् तत्पत्नी[२] परमेश्वरी ॥ ९९ ॥

प्रमादादपि देवेशि ! श्रीगुरोर्नाम नाददेत् ।
यस्य भक्तिर्गुरौ नित्यं वर्तते देववत्[३] प्रिये ॥१००॥

तस्य मन्त्रस्य यन्त्रस्य सिद्धिर्भवति नान्यथा ।
कवचस्य तथा सिद्धिर्गुटिकायाश्च सुन्दरि ॥१०१॥

इदं कवचमज्ञात्वा यो जपेत् सुन्दरीं पराम् ।
नवलक्षं[४] प्रजप्त्वापि तस्य विद्या न सिध्यति ॥१०२॥

शुचिः समाहितो भूत्वा भक्तिश्रद्धासमन्वितः ।
सर्वभूतालये सुप्ते निशायामर्द्धरात्रके ॥१०३॥

---

१. कीर्तिसञ्चयः—ख० ।

२. पत्नीम्—ग० ।

३. तत्—क० ख० ।

४. लक्षः—ख० ।

हेतुयुक्तो महेशानि ! निर्जने पशुवर्जिते ।
रक्तासनोपविष्टस्तु रक्ताभरणभूषितः ॥१०४॥

ताम्बूलपूरितमुखो धूपामोदसुगन्धितः ।
संस्थाप्य वामभागे तु शक्तिं स्वामिपरायणाम् ॥१०५॥

रक्तवस्त्रपरीधानां शिवमन्त्रधरां शुभाम् ।
या शक्तिः सा महादेवी हररूपस्तु साधकः ॥१०६॥

अन्योन्यचिन्तनाद् देवि ! देवत्वमुपजायते ।
शक्तियुक्तो यजेद् देवीं श्रीचक्रे लक्षणान्विते ॥१०७॥

पुष्पाञ्जलित्रयं देव्यै मूलमन्त्रेण दापयेत् ।
भोगैश्च मधुपर्काद्यैस्ताम्बूलाद्यैः सुवासितैः ॥१०८॥

पूजयित्वा महादेवीं पूजाकोटिफलं लभेत् ।
पूर्वोक्तन्यासमेवास्मिन् समये च प्रविन्यसेत् ॥१०९॥

आत्मानं परमं ध्यायेद् दिव्यस्त्रीभिरलङ्कृतम् ।
[1]दिव्यं मूर्ध्नि महच्छत्रं सहस्रदलनिर्मितम् ॥११०॥

सुधावर्षिमुखाम्भोजं सस्मितं दिव्यवर्चसम्[2] ।
परमानन्दसन्दोहमुदितं परमाव्ययम् ॥१११॥

दिव्यालङ्कारवस्त्राढ्यं दिव्यमाल्यानुलेपितम् ।
दिव्यासनसमासीनं दिव्यभोगविभोगिनम् ॥११२॥

सर्वगं सर्वभूतेशं सृष्टिस्थित्यन्तकारिणम् ।
निर्लेपं निर्मलं शान्तं सर्वव्यापिनमीश्वरम् । ११३॥

ततो देवीं हृदम्भोजे ध्यायेत् तद्गतमानसः ।
जपाकुसुमसङ्काशां बालार्ककिरणारुणाम् ॥११४॥

---

१. दिव्य–ग० ।
२. वच्चसम्–ख० ।

रक्तपद्मसमासीनां रक्ताभरणभूषिताम् ।
रक्तवस्त्रपरीधानां पूर्णचन्द्रनिभाननाम् ॥११५॥

सैवाहमित्यभेदेन द्वैतहीनं विचिन्तयेत् ।
अद्वैतानन्दभावेन साधकः परमात्मनः ॥११६॥

छायया शोणया व्याप्तं जगदेतच्चराचरम् ।
भावनावशसम्पन्नो भावयेद् भावतः परम् ॥११७॥

एवं चिन्तापरस्याऽऽशु सिद्धयोऽष्टौ भवन्ति हि ।
संप्राप्य विपुलान् भोगान् राज्यास्पदञ्च भूतले ॥११८॥

ऐन्द्रं पदमवाप्याथ [1]विहरेन्नन्दने वने ।
उर्वशीप्रमुखाभिश्च स्वेच्छया दिव्यभोगवान् ॥११९॥

तदाप्नोति परं स्थानं दुरापं त्रिदशैरपि ।
ततस्तु कवचं दिव्यं पठेदेकमनाः प्रिये ॥१२०॥

तस्य सर्वार्थसिद्धिः स्यान्नात्र कार्या विचारणा ।
इदं रहस्यं परमं परं स्वस्त्ययनं महत् ॥१२१॥

सर्वेषामेव हिंस्राणां डाकिनीनां महेश्वरि ।
निशाचरगणानाञ्च वारणं नाशनं तथा ॥१२२॥

आयुर्बलप्रदं नित्यं तुष्टिपुष्टिशुभावहम् ।
नारीणां मृतवत्सानां गुणवत्सुतदायकम् ॥१२३॥

सूत्या सूतिगृहस्यापि बालग्रहनिवारणम् ।
विषदस्युग्रहाणाञ्च सदा शान्तिविवर्द्धनम् ॥१२४॥

विषशस्त्राऽग्निरुद्राणां वारणं जयदं युधि ।
जले स्थले तथाऽऽकाशे सर्वोत्पातेषु सर्वदा ॥१२५॥

---

१. विहरन्–ख० ।

त्रैलोक्यवासिनामेव सर्वमङ्गलदायकम् ।
सकृद् यस्तु पठेद् देवि ! कवचं देवदुर्लभम् ॥१२६॥

हयमेधफलं तस्य भवत्येव न संशयः ।
नित्यं यस्तु पठेद् देवि शृणुयाद् वा समाहितः ॥१२७॥

स सर्वान् लभते कामान् परे देवीपुरं व्रजेत् ।
संग्रामे च जयेच्छत्रून् मातङ्गानिव केशरी ॥१२८॥

दहेत् तृणं यथा वह्निस्तथा शत्रून् जयेत् सदा ।
नास्त्राणि तस्य शस्त्राणि शरीरे प्रभवन्ति च ॥१२९॥

तद्गात्रं प्राप्य शस्त्राणि [1]ब्रह्मास्त्रादीनि यानि च ।
माल्यानि कुसुमानीव सुखदानि भवन्ति हि ॥१३०॥

पराः पराङ्मुखा यान्ति विना युद्धेन पार्वति ।
व्याधिस्तस्य कदाचित् तु दुःखं नास्ति कदाचन ॥१३१॥

गतिस्तस्यैव सर्वत्र वायोस्तुल्या सदा भवेत् ।
दीर्घायुः कामभोगीशो[2] धनधान्यसमृद्धिमान् ॥१३२॥

जितव्याधी रूपवान् स्याद् गुणवानभिजायते ।
चातुर्वर्ग्यं करे तस्य भवत्येव न संशयः ॥१३३॥

अन्यस्य वल्लभः सो वै पुत्रदारकुलान्वितः ।
इहलोके सुखं भुक्त्वा परे मुक्तो भविष्यति ॥१३४॥

न तस्य दुर्गतिर्देवि ! कदाचिदपि जायते ।
दुर्ग्रहाः सुग्रहा यान्ति वशं गच्छन्ति मानवाः ॥१३५॥

न तस्य विघ्नो भवति न शोको भुवि जायते ।
वेतालाश्च पिशाचाश्च राक्षसाश्च भयानकाः ॥१३६॥

---

१. ब्रह्मास्त्राणि च–क० ख० ।
२. भोगी स–ख० ।

ते सर्वे विलयं यान्ति कवचस्यास्य कीर्तनात् ।
तस्यैव शत्रवो देवि ! चिन्तामात्रप्रयोगतः ॥१३७॥

विनश्यन्ति न सन्देहो योगिन्यो भक्षयन्ति तान् ।
शान्तिकादीनि कर्माणि मारणोच्चाटनानि च ॥१३८॥

वचोमात्रेण देवेशि ! तस्य सिध्यन्ति भूतले ।
न पापैर्लिप्यते देवि ! महोग्रैस्तु सुदारुणैः ॥१३९॥

न कालस्य वशं गच्छेन्न जरा न च दुःखिता ।
तत्र देशे न दुर्भिक्षं न च मारी प्रवर्तते ॥१४०॥

न रोगास्तत्र जायन्ते नोत्पाताः प्रभवन्ति च ।
विविधाश्चैव योगिन्यस्तस्य साधकसन्निधौ ॥१४१॥

शान्तिं चैव प्रयच्छन्ति रक्षन्ति पुत्रवत् सदा ।
सर्वदा च सुखप्राप्तिः सर्वतीर्थफलं लभेत् ॥१४२॥

नानेन सदृशः कश्चित् साधको भुवि जायते ।
सुरासुरमनुष्याणां तत्त्वरूपः सुखावहः ॥१४३॥

येन विज्ञातमात्रेण स्मृतेनैव च सुन्दरि ।
अक्षयान् लभते कामान् मुक्तिस्थानं च गच्छति ॥१४४॥

सर्वलक्षणहीनोऽपि स्मरणात् [1]कलुषापहः ।
अहो कवचमाहात्म्यं पठमानस्य नित्यशः ॥१४५॥

विनापि योगचर्येण योगिनां समतां व्रजेत् ।
भूर्जत्वचि समालिख्य चक्रं तत्त्वविनिर्मितम् ॥१४६॥
मध्ये त्रिकोणं संलिख्य साध्यसाधकयोर्लिपिम् ।
तदूर्ध्वे मूलमन्त्रञ्च मातृकार्णेन वेष्टयेत् ॥१४७॥
अगुरुद्रवमिश्रेण चन्दनेन सुगन्धिना ।
एतद् यन्त्रं महादेवि ! सुरासुरसुदुर्लभम् ॥१४८॥

---

१. कलुषावहः—ग० ।

रोचनाकुङ्कुमेनैव तद्बाह्ये कवचं लिखेत् ।
श्वेतसूत्रेण संवेष्ट्य लाक्षया परिवेष्टयेत् ॥१४९॥

पञ्चामृतैः पञ्चगव्यैः स्नापयित्वा शुभेऽहनि ।
सम्पूज्य देवीरूपां तां गुटिकां सर्वकामदाम् ॥१५०॥

प्राणप्रतिष्ठामन्त्रेण प्राणांस्तत्र निवेशयेत् ।
चारुणा [1]शाक्तकुम्भेन भूषितां योनिमुद्रया ॥१५१॥

अन्तर्योनिं ततो ध्यात्वा तत्र संस्थापयेद् बुधः ।
एषा तु गुटिका देवि ! कण्ठलग्ना धनप्रदा ॥१५२॥

शीर्षे वश्यकरी देवि ! कट्यां स्तम्भनकारिणी ।
बद्धा वामभुजे चैव वैरिपक्षविनाशिनी ॥१५३॥

जठरे रोगशमनी पुत्रदा हृदि संस्थिता ।
विद्याकरी ललाटस्था शिखायां तु यशःप्रदा ॥१५४॥

दक्षिणे बाहुमूले वै यदि तिष्ठति सर्वदा ।
तदा सर्वार्थसिद्धिः स्याद् यद्यन्मनसि वर्तते ॥१५५॥

सत्यं सत्यं पुनः सत्यं सत्यं सत्यं पुनः पुनः ।
न शक्नोमि प्रभावं हि कथितुं कवचस्य वै ॥१५६॥

एतत्तु कवचेनैव पठनं साधनं प्रिये ।
कथितं मे तव स्नेहाद् गोपनीयं सदा भुवि ॥१५७॥

॥ इति श्रीगन्धर्वतन्त्रे महात्रिपुरसुन्दरीत्रैलोक्यमोहनाख्यः
चतुर्थः पटलः ॥ ४ ॥



---

१. शातकुम्भेन-ख० ग० ।

## पञ्चमः पटलः

पार्वती उवाच

विना यन्त्रेण चेत् पूजा देवता न प्रसीदति।
तस्मात् कथय देवेश! यन्त्रमस्या मनोहरम्॥
यस्य दर्शनमात्रेण दारिद्र्यं नश्यति ध्रुवम्॥ १॥

ईश्वर उवाच

सैवमालोच्य स्वर्गादौ सच्चिदानन्दरूपिणी।
समस्ततत्त्वसंयोगात् स्मृत्यधिष्ठानरूपिणी॥ २॥

व्यक्तीकरोति नित्या वः प्रकृतिः परमः पुमान्।
सा तत्त्वसंज्ञा चिन्मात्रा ज्योतिषः सन्निधेस्तथा[1]॥ ३॥

विचिकीर्षु[र्घनी]भूता क्वचिदभ्येति बिन्दुना[ताम्]।
[2]अभिव्यक्ता परा शक्तिरविनाभावलक्षणा॥ ४॥

अखण्डपरचिच्छक्तिर्व्याप्ता चिद्रूपिणी विभुः।
समस्ततत्त्वभावेन विवर्तेत समन्विता॥ ५॥

प्रयाति बिन्दुभावञ्च क्रियाप्राधान्यलक्षणम्।
बैन्दवं मातृचक्रस्य त्रिरूपत्वं पुनर्भवेत्॥ ६॥

बिन्दुः शिवात्मकस्तत्र बीजं शक्त्यात्मकं स्मृतम्।
तयोर्योगे भवेन्नादस्तेभ्यो यच्चिन्तयाम्यहम्॥ ७॥

तस्मात् तानि च चक्राणि तत्प्रकारः प्रकथ्यते।
ततः प्राङ्मुख आसीनश्चक्रोद्धारं समारभेत्॥ ८॥

---

१. सन्निधिस्तदा–ग०।

२. अतिव्यक्ता–क० ख०।

हेमरूपादिताम्राणां पट्टे चातिमनोहरे ।
चतुरस्रे समे शुद्धे मध्योच्छूनविभूषिते ॥ ९ ॥

युग्माङ्गमिलितं देवि ! पट्टस्यैव समीरितम् ।
अथवा परमेशानि ! भूमौ चक्रं समालिखेत् ॥ १० ॥

हस्तमात्रमिते शुद्धे गोमयेनोपलेपिते ।
सिन्दूररजसा तत्र कुङ्कुमेनाऽथवा प्रिये ॥ ११ ॥

[1]आलिख्य चक्रराजञ्च लेखन्या हैमया तथा ।
अथवा कुशमूलेन दर्भपाणिः समाहितः ॥ १२ ॥

नेत्ररम्यं यथा चक्रं तथा कुर्याद् विचक्षणः ।
प्रतीच्यग्रं लिखेदेकं त्रिकोणं तदुपर्यथ ॥ १३ ॥

पूर्वत्रिकोणमध्याग्रं त्रिकोणान्तरमालिखेत् ।
अथ सन्धिद्वयं भित्त्वा प्रागग्रं विलिखेत् परम् ॥ १४ ॥

त्रिकोणमध्यगं चक्रमष्टकोणं तथा भवेत् ।
ततो दशारचक्रस्य निर्माणं शृणु पार्वति ! ॥ १५ ॥

दक्षिणोत्तरगा रेखास्तिस्रो यास्तत्र तास्वपि ।
मध्यरेखां परित्यज्य रेखे द्वे परिवर्द्धयेत् ॥ १६ ॥

तेन षट्कोणकं कृत्वा सन्धिभेदे चतुष्टयम् ।
कृत्वा रेखाद्वयं कुर्याद् दशकोणं यथा भवेत् ॥ १७ ॥

तथाऽन्यदशकोणस्य निर्माणं परिकीर्त्यते ।
दक्षिणोत्तरगाः स्वैरं रेखाः पञ्च भवन्ति याः ॥ १८ ॥

[2]तासां रेखाद्वयं मध्ये हित्वा पूर्वापरं ततः ।
बाह्यरेखाद्वयं देवि ! पूर्ववत् परिवर्द्धयेत् ॥ १९ ॥

---

१. आलिखेच्चक्र–ग० ।
२. आसां–ग० ।

तेन षट्कोणकं कृत्वा सन्धिभेदचतुष्टयम् ।
कृत्वा रेखाद्वयं कुर्याद् दशकोणं यथा भवेत् ॥ २० ॥
चतुर्दशारचक्रस्य निर्माणं कथ्यतेऽधुना ।
दक्षिणोत्तरगाः स्वैरं रेखाः सप्त भवन्ति याः ॥ २१ ॥
तासां रेखाद्वयं हित्वा बाह्ये पूर्वापरं ततः ।
[1]दीर्घं रेखाद्वयं मन्त्री पूर्ववत् परिवर्द्धयेत् ॥ २२ ॥
तेन षट्कोणकं[2] कृत्वा सन्धिभेदचतुष्टयम् ।
दशारीकृत्य तेनैव सन्धिभेदचतुष्टयात् ॥ २३ ॥
रेखाद्वयं बहिः कुर्याद् रेखाः स्युर्नवमेन वै ।
कल्पयेदथ तस्याग्रैरन्यकोणचतुष्टयम् ॥ २४ ॥
एवं चतुर्दशारं स्याद् विलोचनमनोहरम् ।
एवं निष्पादिते चक्रे यद् भवति च तच्छृणु ॥ २५ ॥
मध्ये त्रिकोणमेव स्यात्तन्मध्ये बिन्दुरिष्यते ।
चतुर्णामपि चक्राणां बहिरग्रास्त्रिकोणकाः ॥ २६ ॥
त्रिचत्वारिंशद्गुणिता योनयोऽष्टौ च शोभनाः ।
मत्स्या द्वादशसम्पन्नाश्चतुष्कोणोपशोभिताः ॥ २७ ॥
ग्रन्थयोऽष्टादशापि स्युः षट्पथा ग्रन्थयोऽपरे ।
चतुर्विंशतिसंख्याताः शोभनास्ते चतुष्पथाः ॥ २८ ॥
अष्टकोणकगर्भं तु चतुष्कोणत्रयं तथा ।
दक्षिणोत्तरपूर्वासु दिक्षु सम्भवति क्रमात् ॥ २९ ॥
दक्षिणोत्तरगास्तत्र नव रेखा भवन्ति हि ।
नव रेखास्तथैवान्या वह्निवायुदिगायताः ॥ ३० ॥

---

१. दीर्घ–ग० ।
२. कोणकः–ख० ।

नव रेखास्तथैवान्या नैर्ऋतेशदिगायताः ।
तत्र ये पञ्च देवेशि ! साधकाभिमुखाग्रकाः ॥ ३१ ॥
त्रिकोणास्ते शक्तयः स्युः पञ्चनेत्रशुभोदयाः ।
पूर्वाग्रा ये तु चत्वारो वह्नयस्ते प्रकीर्त्तिताः ॥ ३२ ॥
एवं चक्रं विनिर्माय बाह्ये वृत्तं विलिख्य च ।
तेनाऽष्टदलपद्मस्य निर्माणं तद्बहिस्तथा ॥ ३३ ॥
वृत्तेन षोडशदलं लिखेत् पद्मं मनोहरम् ।
वृत्तत्रयं तु तद्बाह्ये तद्बाह्ये चतुरस्रकम् ॥ ३४ ॥
त्रिरेखं भूपुरं विद्धि चतुर्द्वारोपशोभितम् ।
एवं भवन्ति चक्राणि बिन्दुनैव नव क्रमात् ॥ ३५ ॥
वृत्तत्रयं महेशानि ! न पूजायां निगद्यते ।
एवमेतस्य चक्रस्य प्रभावो वर्णितुं मया ॥ ३६ ॥
न शक्यते महेशानि ! कल्पकोटिशतैरपि ।
एवमेतन्महाचक्रं महाश्रीत्रिपुरामयम् ॥ ३७ ॥
यन्त्रं शरीरमित्याहुर्मन्त्रं ज्ञानमखण्डितम् ।
शरीरं त्रिविधं प्राहुर्भौतिकं च मनोमयम् ॥ ३८ ॥
परं ज्ञानमयं नित्यं यदनाशि निरन्तरम् ।
मुद्रां भौतिकमित्याहुर्यन्त्रं विद्धि मनोहरम् ॥ ३९ ॥
मन्त्रं काममयं विद्धि एवं त्रिधा वपुर्भवेत् ।
मुद्राशरीरं मे ब्रूहि अङ्गभूतं तथापरम् ॥ ४० ॥
योनिभूता महामुद्रा शरीरमिति कीर्तितम् ।
तस्या रससमुत्पन्नाः कामैश्वर्यादिकास्तथा ॥ ४१ ॥
बिन्दुचक्रं वरारोहे सर्वानन्दमयं प्रिये ।
संविद्वेद्यं महाचक्रं ज्ञेयं ब्रह्मस्वरूपकम् ॥ ४२ ॥

---

१. वद-ख० ।

ततः [1]परं शिवाङ्कस्थां महात्रिपुरसुन्दरीम् ।
समावाह्य यजेद् देवीं परयाऽथ सपर्यया ॥ ४३ ॥
अग्नीशासुरवायव्यमध्ये दिक्षु च पार्वति ।
षडङ्गयुवतीः पश्चात् पूजयित्वा विधानतः ॥ ४४ ॥
[2]तन्मयास्तिथिनित्याश्च यजेत् सौभाग्यकामुकः ।
महात्र्यस्रं स्मरेत् तत्र पञ्चदशकलात्मकम् ॥ ४५ ॥
वामावर्त्तक्रमेणैव कलाः पञ्चदश क्रमात् ।
अकाराद्यामुकारान्तां दक्षिणस्यां विचिन्तयेत् ॥ ४६ ॥
ततश्च पूर्वरेखायां दीर्घकर्णादिपञ्चकम् ।
त्रिरेखं भूपुरं विद्धि चतुर्द्वारोपशोभितम् ॥ ४७ ॥
विचिन्त्योत्तररेखायां शक्त्यसी परिचिन्तयेत् ।
कामेश्वर्यादिका नित्यास्तथैव परिपूजयेत् ॥ ४८ ॥
प्रतिपत्तिथिमारभ्य [3]पौर्णमास्यन्तमद्रिजे ।
एकैकां पूजयेन्नित्यां तत्तत्तिथिक्रमेण तु ॥ ४९ ॥
आदावेकैकवृद्ध्या तु यजेत् साधकसत्तमः ।
कृष्णपक्षे महेशानि ! [4]पूजयेत् तिथिमण्डलम् ॥ ५० ॥
विचित्राद्या वरारोहे ! यावत् कामेश्वरी भवेत् ।
पूजनीया विलोमेन [5]चान्या तथैव पार्वति ॥ ५१ ॥
उभयोः पक्षयोरन्ते यथोक्तध्यानयोगतः ।
स्वर्गस्थां षोडशीं नित्यां महात्रिपुरसुन्दरीम् ॥ ५२ ॥

---

१. परां–ग० ।
२. तन्मयीष्टार्थनित्याश्च–ख० ।
३. पौर्णमास्यान्तु मद्रिजे–ख० ग० ।
४. पूजयेत्तु त्रिमण्डलम्–क० ख० ।
५. वान्या–क० ख० ।

तत्तद्विद्यास्तथा ध्यानं मन्त्राणि पूजनानि तु ।
होमान्यन्यानि सर्वाणि कामानि च वरानने ॥ ५३ ॥
पटलैः पक्षसंख्यैस्तु पश्चाद् वक्ष्याम्यहं शिवे ।
अत्राङ्गावृत्तिभूतानां शृणु पूजां वरानने ॥ ५४ ॥

ईश्वरउ वाच

तत्र तत्र महेशानि ! समावाह्य विधानतः ।
पूजयेत् साधको भक्त्या [1]यद् वेत्ति क्रमवर्त्मना ॥ ५५ ॥
मूलाद्येनैव तत्राद्यां हंसेन पुटितेन तु ।
द्वितीयेन द्वितीयाश्च तृतीयेन तृतीयिकाम् ॥ ५६ ॥
चतुर्थेन चतुर्थीश्च पञ्चमेनैव पञ्चमीम् ।
षष्ठेन तु तथा षष्ठीं सप्तमेन तु सप्तमीम् ॥ ५७ ॥
अष्टमेनाऽष्टमीञ्चैव नवमीं नवमेन तु ।
दशमीं दशमेनैव एकादशीं तथैव हि ॥ ५८ ॥
एकादशाक्षरेणैव द्वादशीं द्वादशेन तु ।
त्रयोदशीश्च तत्रैव त्रयोदशाक्षरेण तु ॥ ५९ ॥
चतुर्दशाक्षरेणैव यजेत्तत्र चतुर्दशीम् ।
पञ्चदशाक्षरेणैव यजेत् पञ्चदशीं ततः ॥ ६० ॥
समस्तेन तथा देवि ! षोडशीं प्रतिपूजयेत् ।
आदावन्ते च मध्ये च सपर्या खलु पार्वति ॥ ६१ ॥
महादेव्याः समाख्याता नित्यैव विहितागमे ।
तामेव पूजयेद् वापि महात्रिपुरसुन्दरीम् ॥
यतस्तस्याः समुत्पन्नं नित्यामण्डलमीदृशम् ॥ ६२ ॥
अथान्यत् संप्रवक्ष्यामि काम्यं कामार्थसिद्धये ।
[1]यथोक्तां कुलजां शस्तां चारुलक्षणलक्षिताम् ॥ ६३ ॥

---

१. यदोक्तक्रमवत्मंका–क० ख० ।

स्वेच्छाऋतुमतीं पूर्णां [1]यौवनाच्छादितशैशवाम् ।
तत्राद्यदिवसे देवीं पूजयित्वा यथाविधि ॥ ६४ ॥

यजेत् कामेश्वरीमाद्यां द्वितीयां द्वितीये तथा ।
तृतीयेऽथ तृतीयाञ्च चतुर्थे च चतुर्थिकाम् ॥ ६५ ॥

पञ्चमे पञ्चमीञ्चैव षष्ठीं षष्ठे तथाऽहनि ।
सप्तमे सप्तमीञ्चैव अष्टमीमष्टमेऽहनि ॥ ६६ ॥

नवमे नवमीं देवीं दशमे दशमीं ततः ।
एकादशीं तथा रुद्रे द्वादशीं द्वादशेऽहनि ॥ ६७ ॥

त्रयोदशदिने देवीं त्रयोदशीं क्रमेण तु ।
चतुर्दशीं तथा शक्रे पञ्चदशीं ततो यजेत् ॥ ६८ ॥

षोडशीं षोडशे पूर्णे यजेद् [2]वृद्धिक्रमेण तु ।
अन्यांश्चैव यजेत् पश्चादपरं यत् प्रकीर्त्तितम् ॥ ६९ ॥

षोडशर्तुर्निशाः स्त्रीणां तासु क्रमात् क्रमाद् यजेत् ।
यथाविधि क्रमेणैव न दिनं व्यतिलङ्घयेत् ॥ ७० ॥

नैव विसर्जयेत् तां तु यावत् सा स्यात् फलार्थिनी ।
फलार्थिनीं विदित्वैव विसृज्यान्यां समाश्रयेत् ॥ ७१ ॥

निशाः षोडशसंयुक्ताः षोडश शक्तयस्तथा ।
एकस्मिन् दिवसे देवि ! लभ्यते भाग्ययोगतः ॥ ७२ ॥

पूजयेत् ताः प्रयत्नेन यथावत् पूर्वसूचिताः ।
रात्रौ वृद्ध्या दिने हान्या रसे मध्ये स्थितो बली ॥ ७३ ॥

ऋतुमेकं क्रमेणैव स भवेत् सुरपादपः ।
विमला जयिनी मध्ये गुरवः कथितास्तु ते ॥ ७४ ॥

---

१. यौवनाच्छिदितशैशवाम्—ग० ।
२. बुद्धि—क० ख० ।

त्रैलोक्यमोहने चक्रे बुद्धं च परिपूजयेत्।
ब्रह्मविष्णुशिवाख्यास्तास्तिस्रो रेखाश्च तन्निभाः ॥ ७५ ॥

तत्रादौ ब्रह्मरेखायामणिमाद्याः स्थिताः प्रिये।
वराभयकरा रक्ताः समीहितफलप्रदाः ॥ ७६ ॥

कौमारी पीतवर्णा च शक्तितोमरधारिणी।
वरदाभयहस्ता च ध्यातव्या परमेश्वरी ॥ ७७ ॥

अङ्कुशं तोमरं विद्युत्कुलिशौ बिभ्रती करैः।
इन्द्राणी गौरवर्णा च ध्येया सर्वसमृद्धिदा ॥ ७८ ॥

वैष्णवी श्यामवर्णा च शङ्खचक्रवराभयान्।
हस्तपद्मैश्च बिभ्राणा दिव्यभूषणभूषिता ॥ ७९ ॥

वाराही श्यामवर्णा च [1]पोत्री रक्तसमन्विता।
हलश्च मुसलं खड्गं खेटकं दधती करैः ॥ ८० ॥

चामुण्डा कृष्णवर्णा च शूलं डमरुकं तथा।
खड्गं वेतालकं चैव दधाना दक्षिणैर्भुजैः ॥ ८१ ॥

खेटकं चषकं चैव नागं घण्टां च वामकैः।
ब्रह्माणीप्रमुखाः सर्वा विष्णुरेखासमाश्रिताः ॥ ८२ ॥

ब्रह्माणी रक्तवर्णा च चतुर्भिः शोभिता मुखैः।
वरदाभयहस्ता च कुण्डकाक्षलसत्करा ॥ ८३ ॥

माहेश्वरी श्वेतवर्णा त्रिनेत्रा शूलधारिणी।
[2]कपालमेणं परशुं दधाना पाणिभिः प्रिये ॥ ८४ ॥

भेदमस्याः परं गुह्यं संक्षेपात् कथिता[ध्यते]ऽधुना।
महालक्ष्मीस्तु पीताभा पद्मं दर्पणमेव च ॥ ८५ ॥

---

१. पौत्रीवक्त्र–क० ख०।
२. कृपाण–क० ख०।

[1]मातुलुङ्गफलं चैव दधाना परमेश्वरी ।
शिवरेखां समाश्रित्य संक्षोभण्यादिकाः स्थिताः ॥ ८६ ॥
रक्ता संक्षोभणीमुख्याः स्वस्वमुद्राकरान्विताः ।
एताः प्रकटयोगिन्यो ध्येयाः सर्वसमृद्धये ॥ ८७ ॥
अणिमापुरतो देवि त्रिपुराचक्रनायिका ।
शुद्धस्फटिकसङ्काशा मुक्तारत्नविभूषिता ॥ ८८ ॥
पुस्तकं चाक्षमालां च कमलद्वयमुत्तमम् ।
बिभ्रती सिद्धयो ध्येया महापातकनाशिनी ॥ ८९ ॥
त्रिवृत्तं चन्द्रसूर्याग्निस्वरूपं विद्धि पार्वति ।
सर्वाशापूरके चक्रे रविवेददलान्विते ॥ ९० ॥
ब्रह्माणं चिन्तयेत् तत्र स्रवत्पीयूषवर्षिते ।
कामाकर्षणिकाद्यास्तु षोडशस्वरसंवृताः[2] ॥ ९१ ॥
सृणिपाशधराः सर्वा रूपेणापीह तत्समाः ।
एतास्तु गुप्तयोगिन्यो ध्येयाः सर्वसमृद्धिदाः ॥ ९२ ॥
कामाकर्षणिकाग्रे तु त्रिपुरेशी व्यवस्थिता ।
त्रिपुरासदृशी ध्येया त्रिपुरेशी वरानने ॥ ९३ ॥
अष्टपत्रं वरारोहे जपाकुसुमसन्निभम् ।
सर्वसंक्षोभणं नाम सर्वकामफलप्रदम् ॥ ९४ ॥
चिन्तयित्वा शिवं तत्र वर्गाष्टकसमन्विताः ।
अनङ्गकुसुमाद्यास्तु स्मृता गुप्ततराश्च ताः ॥ ९५ ॥
सुन्दरीसदृशाः सर्वाः सर्वकामफलप्रदाः ।
अनङ्गकुसुमाग्रे तु ध्येया त्रिपुरसुन्दरी ॥ ९६ ॥

---

१. मातुलिङ्ग—ग० ।
२. संयुता—क० ख० ।

सर्वालङ्कारसम्पन्ना पुस्तकं चाऽक्षमालिकाम् ।
वराभयौ च दधती बन्धूककुसुमप्रभा ॥ ९७ ॥

सर्वसौभाग्यदे चक्रे दाडिमीकुसुमप्रभे ।
चतुर्दशारके देवि ! भास्करं परिचिन्तयेत् ॥ ९८ ॥
सर्वसंक्षोभणीमुख्याः सम्प्रदायाः स्मृता इमाः ।
सर्वसंक्षोभणी शक्तिः पुरस्त्रिपुरवासिनी ॥ ९९ ॥

सुन्दर्याः सदृशी ध्येया सर्वकामफलप्रदा ।
सर्वार्थसाधके चक्रे सर्वरक्षाकरे तथा ॥१००॥

बाह्यारदशकोणे च जपाकुसुमसन्निभे ।
नारायणं प्रपूज्याऽथ [1]बाह्यदशारके ततः ॥१०१॥
सर्वसिद्धिप्रदा मुख्याः कुलकौलाः स्मृता इमाः ।
सर्वसिद्धिप्रदाग्रे तु त्रिपुरश्रीर्व्यवस्थिता ॥१०२॥
उद्यद्भानुसहस्राभा दिव्यालङ्कारभूषिता ।
पुस्तकं जपमालाञ्च दधती वरदाभये ॥१०३॥
अन्तर्दशारचक्रे च पूज्याः सर्वसमृद्धिदाः ।
तथा निगर्भयोगिन्यः सर्वज्ञाप्रमुखाः प्रिये ॥१०४॥
सर्वज्ञा पुरतो देवी स्थिता त्रिपुरमालिनी ।
इन्द्रगोपप्रभा देवी पाशाङ्कुशकपालिनी ॥१०५॥

महाभीतिहरा सम्यक् साधकानां क्षणादिकम् ।
सर्वरोगहरे चक्रे बालार्ककिरणारुणे ॥१०६॥

वशिनीप्रमुखास्तत्र रहस्ययोगिनीर्यजेत् ।
वशिनीप्रमुखा रक्ता वराभयकरान्विताः ॥१०७॥

---

१. बाह्यारदेशके–क० ख० ।

पुस्तकं जपमालां च दधानाः परमेश्वरि ।
वशिनी पुरतो देवी सर्वसिद्धिप्रदायिनी ॥१०८॥

तथा त्रिपुरसिद्धां च ध्यायेद् विषविनाशिनीम् ।
[1]त्रिकोणस्य विभागस्य दक्षिणे वामके प्रिये ॥१०९॥

चतुष्पथसमायुक्ते बाणचापौ प्रपूजयेत् ।
त्रिकोणस्योर्ध्वभागस्य वामदक्षिणयोस्तथा ॥११०॥

षडध्वरूपयोर्देवि ! पाशाङ्कुशौ व्यवस्थितौ ।
सर्वसिद्धिप्रदे चक्रे त्रिकोणे परमेश्वरि ॥१११॥

उद्यत्सूर्यसहस्राभे बन्धूककुसुमप्रभे ।
अतिरहस्ययोगिन्यः संस्थिता वीरवन्दिते ॥११२॥

अग्रकोणेऽग्निचक्रे च कामरूपे वरानने ।
कामेश्वरी त्रिनेत्रा च तरुणारुणविग्रहा ॥११३॥

चषकं वरदानं च [2]पाशमङ्कुशमेव च ।
दधती परमेशानि ! ध्येया रुद्रात्मशक्तिका ॥११४॥

वामकोणे त्रिकोणस्य सूर्यचक्रे महेश्वरि ।
जालन्धरे महापीठे वज्रेश्वरी समीरिता ॥११५॥

त्रिनेत्रा पूर्णचन्द्रास्या बन्धूककुसुमप्रभा ।
पाशाङ्कुशौ शरांश्चापं चषकं मातुलुङ्गकम् ॥११६॥

दधती चारुरूपा सा ध्येया विष्णवात्मशक्तिका ।
दक्षकोणे त्रिकोणस्य [3]सोमचक्रे वरानने ॥११७॥

---

१. त्रिकोणाग्रविभागस्य–क० ख० ।
२. पाशश्चाङ्कुश–क० ख० ।
३. लोम–क० ख० ।

पूर्णगिर्यालये देवि ! कथिता भगमालिनी ।
त्रिनेत्रा [1]तरुणेन्दुस्था सिन्दूरारुणविग्रहा ॥११८॥
पुस्तकं जपमालां च पाशाङ्कुशकमेव च ।
दधती परमेशानि ! ध्येया ब्रह्मात्मशक्तिका ॥११९॥
कामेश्वरीपुरोभागे त्रिपुराम्ब व्यवस्थिता ।
मालिनीसदृशी ध्येया सर्वकामफलप्रदा ॥१२०॥
अथवा रश्मयः सर्वा देवीरूपेण चिन्तयेत् ।
नवावरणशक्तीनां ध्यानं देव्याः समं यतः ॥१२१॥
निःसरन्ति यथा नित्यं सूर्यबिम्बान्मरीचयः ।
देव्यस्तथा समुत्पन्ना महादेव्याः शरीरतः ॥१२२॥

ईश्वर उवाच

[2]ओड्याणपीठके देवि ब्रह्मचक्रे वरानने ।
[3]परापररहस्याख्या देवि ! ब्रह्मस्वरूपिणी ॥१२३॥
चक्रेशीमपि तामेव पूजयेत् साधकोत्तमः ।
स्थितिक्रमेण पूजेयं यन्त्रोद्धारक्रमेण तु ॥
सृष्टिक्रमं महद् गुह्यं पूजनं परमेश्वरि ॥१२४॥

पार्वती उवाच

चक्रमण्डलमाख्यातं न पूजा तत्र मण्डले ।
इदानीं कथयेशान ! पूजाक्रममनुत्तमम् ॥१२५॥

ईश्वर उवाच

शृणु देवि ! प्रवक्ष्यामि पूजाक्रममनुत्तमम् ।
यस्य प्रबोधमात्रेण जीवन्मुक्तः प्रमोदते ॥१२६॥

१. तरुणेन्दुमस्ता–क० ख० ।
२. ओड्यानपीठते–क० ख० ।
३. पुरापर–ख० ।

देव्या नित्योदिता पूजा त्रिभिर्भेदैर्व्यवस्थिता ।
परा चाप्यपरा देवि! तृतीया च परापरा ॥१२७॥
चक्रमध्ये समावाह्य [1]पूज्यते द्रव्यविस्तरैः ।
प्रथमा सा समाख्याता [2]मता पुरन्दरादिभिः ॥१२८॥
[3]मृद्वासने समासीनः खगसंयमने रतः ।
समकायशिरोग्रीवो नासालोकनतत्परः ॥१२९॥
विकल्परूपसंजल्पविमुखो भावतत्परः ।
महापद्मवनान्तःस्थां परमानन्दरूपिणीम् ॥१३०॥
आप्यायितजगद्रूपां परमामृतवर्षिणोम् ।
तत्तज्ज्ञानमये चक्रे परमात्मस्वरूपिणीम् ॥१३१॥
अर्धमात्रां योनिरूपां बिन्दुत्रिवलयात्मिकाम् ।
परमानन्दपुष्पेण पूजयेदात्मरूपिणीम् ॥१३२॥
इन्द्रियप्रीणनैर्द्रव्यैर्विहितं स्वात्मपूजनम् ।
उत्तमेयं द्वितीया सा मया निष्पाद्यते सदा ॥१३३॥
परापरा समाख्याता उभयं यत्र विद्यते ।
देवकीसूनुना चेयं निष्पाद्यते सदा प्रिये ॥१३४॥

॥ इति गन्धर्वतन्त्रे पञ्चमः पटलः ॥ ५ ॥



१. पूजते–क० ख० ।
२. माता–ग० ।
३. मृदासने–क० ख० ।

## षष्ठः पटलः

पार्वती उवाच

देव्याः पूजा समाख्याता तृतीयाया महेश्वर।
तां कथय सुरश्रेष्ठ विस्तरेणाधुना प्रभो! ॥ १ ॥

ज्ञानेन कर्मणा चेह देहशुद्धिर्द्विधा भवेत्।
ज्ञानशुद्धिस्त्वया प्रोक्ता कर्मशुद्धिर्न दर्शिता ॥ २ ॥

विण्मूत्रपिच्छिलो देहः कथं देवमयो भवेत्।
तन्मे वद महादेव प्रसादसुमुख प्रभो ॥ ३ ॥

ईश्वर उवाच

ज्ञानेन कर्मणा वापि सिद्धिर्भवति नान्यथा।
ज्ञानयोगश्च वक्तव्यः कर्मयोगं शृणु प्रिये ॥ ४ ॥

ब्राह्मे मुहूर्त्ते उत्थाय साधकः स्थिरमानसः।
पद्मासनसमासीनः प्राणायामपुरःसरम्[1] ॥ ५ ॥

ब्रह्मरन्ध्रे स्थिते पद्मे सहस्रदलशोभिते।
विमले पूर्णचन्द्रस्य मण्डले चिन्तयेद् गुरुम् ॥ ६ ॥

शुद्धस्फटिकसङ्काशं श्वेताभरणभूषितम्।
तादृक्प्रसूनमाल्यादिविभूषिततनुं[2] तथा ॥ ७ ॥

पद्मासनसमासीनं सर्वयोगनिषेवितम्[3]।
वराभयकरं शान्तं त्रिनेत्रं[4] करुणामयम् ॥ ८ ॥

---

१. पुरःसरः–ख०।

२. विभूषितं–ख०।

३. निशेवितम्–ख०।

४. द्विनेत्रम्–ख०।

वामोरुगतया शक्त्या रक्तया वामपाणिना ।
धारयन्त्योत्पलं दक्षहस्तेनालिङ्गितं विभुम् ॥ ९ ॥
[1]परमानन्दसन्दोहसान्द्रमानसमीश्वरम् ।
आनन्दसान्द्ररक्ताक्षं स्मरेत् स्मितमुखाम्बुजम् ॥ १० ॥
बालाद्यं भुवनेशानी रमा चैवाथ खेचरी ।
शिवचन्द्रौ मातृकान्तं कालशक्रा[2]म्बुवह्नयः ॥ ११ ॥
वायुश्च वामकर्णेन योजिता बिन्दुमा[3]लिनः ।
चक्रं कृत्वाऽऽदिमं तेषु कर्णे वामाक्षि योजयेत् ॥ १२ ॥
शिवचन्द्रौ त्रिशूलाढ्यौ बिन्दुना परिमण्डितौ ।
चन्द्रशिवौ त्रिशूलाढ्यौ स्वर्गवन्तौ महेश्वरि ! ॥ १३ ॥
तस्मात् स्वगुरुनामान्ते आनन्दनाथ चालिखेत् ।
तथा शक्तिपदान्ते वै अम्बापदमतो लिखेत् ॥ १४ ॥
पादुकां पूजयामीति विधिना परिपूजयेत् ।

लं पृथिव्यात्मना ब्रह्मणा गन्धं कल्पयामि । गन्धतन्मात्रात्मने[4] घ्राणाय गन्धं गृहाण स्वाहा ।

अथाऽङ्गुष्ठकनिष्ठाभ्यां योजयेद् गन्धमुत्तमम् ॥ १५ ॥

हं आकाशात्मना सदाशिवेन पुष्पं कल्पयामि शब्दतन्मात्रात्मने श्रोत्रेन्द्रियाय पुष्पं गृहाण स्वाहा ।

अङ्गुष्ठतर्जनीयोगे पुष्पदानं तथैव हि ।

यं वाय्वात्मना ईश्वरेण धूपं कल्पयामि स्पर्शतन्मात्रात्मने त्वगिन्द्रियाय स्पर्शं गृहाण स्वाहा ।

अङ्गुष्ठमध्यमायोगं धूपदानं तथैव हि ॥ १६ ॥

---

१. सरमानन्द–ख० ।
२. शक्राद्य–ख० ।
३. नादिनः–ख० ।
४. तन्त्रे-ख० ।

वं वह्नयात्मना रुद्रेण दीपं कल्पयामि रूपतन्मात्रात्मने चक्षुरिन्द्रियाय रूपं गृहाण स्वाहा ।

अङ्गुष्ठाभ्यां महेशानि दीपं दद्यात् समाहितः ।

वं अमृतात्मना विष्णुना नैवेद्यं कल्पयामि । रसतन्मात्रात्मने जिह्वेन्द्रियाय रसं गृहाण स्वाहा ।

अङ्गुष्ठानामिकायोगं नैवेद्यं तत्प्रतिष्ठितम् ॥ १७ ॥

एवं कुलगुरुं देवि पूजयित्वा विधानतः ।
योनिमुद्रां प्रदर्श्याथ प्रणमेत् सिद्धिहेतवे ॥ १८ ॥

नमस्ते भगवन्नाथ शिवाय गुरुरूपिणे ।
विद्यावतारसंसिध्यै स्वीकृतानेकविग्रह ॥ १९ ॥

नराय नररूपाय परमात्मैकरूपिणे ।
सर्वाज्ञानतमोभेदभानवे चिद्घनाय ते ॥ २० ॥

स्वतन्त्राय दयातृप्तविग्रहाय शिवात्मने ।
परतन्त्राय भक्तानां भव्यानां भव्यरूपिणे ॥ २१ ॥

विवेकिनां विवेकाय विमर्शाय विमर्शिनाम्[1] ।
प्रकाशिनां प्रकाशाय ज्ञानिनां ज्ञानरूपिणे ॥ २२ ॥

पुरस्तात् पार्श्वयोः पृष्ठे नमस्कुर्यामुपर्यधः[2] ।
सदा मच्चित्तरूपेण विधेहि भवदासनम् ॥ २३ ॥

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ २४ ॥

नमोऽस्तु गुरवे तुभ्यं ब्रह्मविष्णुशिवात्मने ।
अविद्याग्रस्त-संसारसागरोत्तारहेतवे ॥ २५ ॥

---

१. अविमर्शिनाम्–क० ख० ।
२. नमस्कुर्यात्--ग० ।

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुरेव परं ज्ञानं [1]गुरुरेव परं तपः ॥ २६ ॥

अतः सर्वत्र देवेशि ! गुरुपूजा गरीयसी ।
अन्यदेवसपर्या वा चान्यदेवस्य कीर्तनम् ॥ २७ ॥

गुरुदेवं विना देवि तदग्रे क्रियते यदि ।
तदा नरकमाप्नोति सत्यमेतद् वदाम्यहम् ॥ २८ ॥

पूजिते गुरुपादे वै सर्वदेवः सुखी भवेत् ।
सर्वेषां मन्त्रतन्त्राणां पिताऽसौ यः सदाशिवः ॥ २९ ॥

यस्य भक्तिर्गुरौ नित्यं वर्तते देववत् प्रिये ।
तस्य सर्वार्थसिद्धिः स्यान्नाऽन्यथा खलु पार्वति ॥ ३० ॥

गुरुपादरजो मूर्ध्नि ध्यात्वा कर्म समारभेत् ।
ब्रह्मरन्ध्रे सहस्रारे कर्पूरधवलो गुरुः ॥ ३१ ॥

वराभयकरो नित्यो ब्रह्मरूपी सदानघः ।
जागर्त्ति परमेशानि ! निजस्थानप्रकाशकः ॥ ३२ ॥

कुलनाथं परित्यज्य ये शाक्ताः परसेविनः ।
तेषां दीक्षा च यागश्च ह्यभिचाराय कल्प्यते ॥ ३३ ॥

तस्मात् सर्वप्रयत्नेन कुलीनं गुरुमाश्रयेत् ।
कुलीनः सर्वविद्यानामधिकारीति गीयते ॥ ३४ ॥

दीक्षाप्रभुः स एवात्र सर्वतन्त्रेषु नापरः ।
गुरुमण्डलपूजां तु कुर्यात् सप्तसु पर्वसु ॥ ३५ ॥

---

१. गुरुमेव—क० ख० ।

देवी उवाच

विना योगं न सिध्येत कुण्डली च क्रमः प्रभो ।
मूलपद्मे कुण्डलिनी यावन्निद्रायिता प्रभो ॥ ३६ ॥
तावत् किञ्चिन्न सिध्येत मन्त्रयन्त्रार्चनादिकम् ।
जागर्त्ति यदि सा देवी बहुभिः पुण्यसञ्चयैः ॥ ३७ ॥
तदा प्रसादमायान्ति मन्त्रयन्त्रार्चनादयः ।
शिववद् विहरेल्लोके अष्टैश्वर्यसमन्वितः ॥ ३८ ॥
योगयोगाद्[1] भवेन्मुक्तिर्मन्त्रसिद्धिरखण्डिता ।
सिद्धे मनौ परावाप्तिरिति शास्त्रार्थनिर्णयः ॥ ३९ ॥
युक्तात्मा येन विहरेत् स्वर्गे मर्त्ये रसातले ।
जीवन्मुक्तश्च देहान्ते परं निर्वाणमाप्नुयात् ॥
तत् कात्स्न्येंन परं योगं कथयस्व मयीश्वर ॥ ४० ॥

ईश्वर उवाच

कथयामि तव स्नेहाद् योगयोग्याऽसि पार्वति ।
संसारोत्तारणं मुक्तिर्योगशब्देन कथ्यते ॥ ४१ ॥
योगो हि ललिता देवी निश्चितं विद्धि पार्वति ।
न योगो [2]नभसः पृष्ठे न भूमौ न रसातले ॥ ४२ ॥
ऐक्यं जीवात्मनश्चाहुर्योगं योगविशारदाः ।
कामक्रोधलोभमोहमदमात्सर्यसंज्ञकाः ॥ ४३ ॥
तत्समूहाः षडाख्याता योगविघ्नकरा इमे ।
योगज्ञैरेभिर्जित्वा[3] तान् योगिनो योगमा[4]प्नुयुः ॥ ४४ ॥

---

१. योगयोगोद्भवेत्–ग० ।
२. नभः–ख० ।
३. भित्वा–ग० ।
४. साधने–ग० ।

[1]यमं नियममासनप्राणायामौ ततः परम् ।
प्रत्याहारं धारणाख्यं ध्यानं सार्द्धं समाधिना ।। ४५ ।।

अष्टाङ्गान्याहुरेतानि योगिनो योगसाधने ।
अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयाऽऽर्जवम् ।। ४६ ।।

क्षमाधृतिमिताहारशौचं चेति यमा दश ।
तपः सन्तोष[2] आस्तिक्यं दानं देवस्य पूजनम् ।। ४७ ।।

सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो हुतम् ।
दशैते नियमाः प्रोक्ता योगशास्त्रविशारदैः ।। ४८ ।।

पद्मासनं स्वस्तिकाख्यं भद्रं वज्रासनं तथा ।
वीरासनमिति प्रोक्तं क्रमादासनपञ्चकम् ।। ४९ ।।

ऊर्वोरुपरि विन्यस्य सम्यक् पादतले उभे ।
अङ्गुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमात् ततः ।। ५० ।।

पद्मासनमिति प्रोक्तं योगिनां हृदयङ्गमम् ।
जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे ।। ५१ ।।

ऋजु[3]कायो वसेत् योगी स्वस्तिकं तत् प्रचक्षते ।
सीमन्याः पार्श्वयोर्न्यस्येद् गुल्फयुग्मं सुनिश्चलम् ।। ५२ ।।

वृषणाधः पादपार्ष्णि पाणिभ्यां परि[4]बन्धयेत् ।
भद्रासनं समुद्दिष्टं योगिभिः परिकीर्त्तितम् ।। ५३ ।।

ऊर्वोः पादौ क्रमान्न्यस्य जान्वोः प्रत्यङ्मुखाङ्गुलीः ।
करौ निबध्यादाख्यातं वज्रासनमनुत्तमम् ।। ५४ ।।

---

१. 'यम्'इत्यारभ्य 'योगसाधन' इत्येतदन्तं नास्ति–ग० ।
२. सन्तोषं–ग० ।
३. कारो–ख० ।
४. परिपूजितम्–ग० ।

एकं पादमधः कृत्वा विन्यस्योरौ [1]तथेतरम् ।
ऋजुकायो वसेद् योगी वीरासनमितीरितम् ॥ ५५ ॥

इडया कर्षयेद् वायुं बाह्यं षोडशमात्रया ।
धारयेत् पूरितं योगी चतुःषष्ट्या च मात्रया ॥ ५६ ॥

सुषुम्नामध्यगं सम्यग् द्वात्रिंशन्मात्रया शनैः ।
नाड्या पिङ्गलया चैवं रेचयेद् योगवित्तमः ॥ ५७ ॥

प्राणायाममिमं प्राहुर्योगशास्त्रविशारदाः ।
भूयो भूयः क्रमात् तस्य [2]व्यत्यासेन समाचरेत् ॥ ५८ ॥

मात्रावृद्धिक्रमेणैव सम्यग् द्वादश षोडश ।
जपध्यानादिभिर्युक्तं सगर्भं तद् विदुर्बुधाः ॥ ५९ ॥

तदुपेतं[3] विगर्भं च प्राणायामं परं विदुः ।
क्रमादभ्यसतः पुंसो देहे स्वेदोद्गमोऽधमः ॥ ६० ॥

मध्यमः [4]कल्यसंयुक्तो भूमित्यागः परो मतः ।
उत्तमस्य गुणावाप्तिर्यच्छीलनकमिष्यते ॥ ६१ ॥

इन्द्रियाणां विचरतां विषयेषु निराकुलम् ।
बलादाहरणं तेभ्यः प्रत्याहारोऽयमीरितः ॥ ६२ ॥

अङ्गुष्ठगुल्फजानुषु सीमनीलिङ्गनाभिषु ।
हृद्ग्रीवाकण्ठदेशेषु लम्बिकायां ततो नसि ॥ ६३ ॥

भ्रूमध्ये स्तनके मूर्ध्नि द्वादशान्ते यथाविधि ।
धारणं प्राणमरुतोर्धारणेति निगद्यते ॥ ६४ ॥

---

१. अथेतरम्–ख० ।
२. वात्यासेन–ख० ।
३. तदुपेतं–क० ख० ।
४. कल्प–क० ख० ।

समाहितेन मनसा चैतन्यान्तरवर्त्तिना ।
आत्मन्यभीष्टदेवानां ध्यानं ध्यानमिहोच्यते ॥ ६५ ॥

[1]समत्वभावना नित्यं जीवात्मपरमात्मनोः ।
समाधिमाहुर्मुनयः प्रोक्तमष्टाङ्गलक्षणम् ॥ ६६ ॥

इति ते कथितं देवि ! कामादिषट्कनाशनम् ।
अथ ते कथयिष्यामि मन्त्रात्मयोगमुत्तमम् ।
दुर्लभं विषयासक्तैः सुलभं संयमात्मनाम् ॥ ६७ ॥

समाधिः संविदुत्पत्तिः परजीवैकतां प्रति ।
यदि जीवः पराद् भिन्नः कार्यतामेति सुव्रते ॥ ६८ ॥

[2]सुचित्तं च [3]प्रसह्यैव घटवत् परमेश्वरि ।
विनाशित्वं भयं चैव द्वितयाविति ते श्रुतिः ॥ ६९ ॥

नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ।
एकः सन् भिद्यते भ्रान्त्या मायया न स्वरूपतः ॥ ७० ॥

तस्माद् द्वैतं न मे चाऽस्ति न प्रपञ्चो न संसृतिः ।
यथाकाशो घटाकाशो महाकाश इतीरितः ॥ ७१ ॥

तथा भ्रान्तिर्द्विधा प्रोक्ता ह्यात्मा जीवेश्वरात्मना ।
नाहं देहो न च प्राणो नेन्द्रियाणि तथैव च ॥ ७२ ॥

न मनो नैव बुद्धिश्च नैव चित्तमहङ्कृतिः ।
नाहं पृथ्वी न सलिलं न च वह्निस्तथाऽनिलः ॥ ७३ ॥

न चाकाशो न शब्दश्च न च स्पर्शस्तथा रसः ।
न हि गन्धो न रूपं च न मायाऽहं न संसृतिः ॥ ७४ ॥

---

१. ममत्व-क० ख० ।
२. स्वचित्तञ्च-क० ख० ।
३. प्रसज्यैव-क० ख० ।

सदा साक्षिस्वरूपाद् वा ब्रह्म चैवास्मि केवलः ।
[1]सोऽहं ब्रह्म न संसारी न मत्तोऽन्यत् कदाचन ॥ ७५ ॥

इति विद्यात् स्वमात्मानं समाधिः परिकीर्तितः ।
समाधौ [2]सुखरूपोऽसौ तुरीयस्वर एव हि ॥ ७६ ॥

तुरीयांशः पराशक्तिर्बिन्द्वात्मा ब्रह्म केवलम् ।
प्रज्ञात्मानं[3] वदन्त्येके [4]एकेऽपि ब्रह्म केवलम् ॥ ७७ ॥

जीवमीश्वरभावेन विद्यात् सोऽहमिति ध्रुवम् ।
यथा [5]फेनतरङ्गादि समुद्रादुत्थितं पुनः ॥ ७८ ॥

समुद्रे लीयते यद्वज्जगदात्मनि लीयते ।
यस्यैवं परमात्मा स[6] पृथग्भूतः प्रकाशितः ॥ ७९ ॥

स याति परमं भावं स्वयं साक्षात् परामृतम् ।
यदा मनसि चैतन्यं भाति सर्वात्मकं सदा ॥ ८० ॥

योगिनो व्यवधानेन तदा सम्पद्यते स्वयम् ।
यदा भूतानि सर्वाणि स्वात्मन्येवाभिपश्यति ॥ ८१ ॥

सर्वभूतेषु चात्मानं ब्रह्म सम्पद्यते तदा[7] ।
यदा सर्वाणि भूतानि समाधिस्थो न पश्यति ॥ ८२ ॥

एकीभूतः परेणासौ तदा भवति केवलः ।
तदा जन्मजरादुःखव्याधीनामेव भेषजम् ॥ ८३ ॥

---

१. सोऽयं–ख० ।
२. स्वस्वरूपोऽसौ–क० ख० ।
३. प्रज्ञात्मा न–क० ख० ।
४. एकोऽपि–ग० ।
५. फेण–क० ख० ।
६. सम्पृ–ग० ।
७. सदा–क० ख० ।

केवलं ब्रह्मविज्ञानं जायतेऽसौ तदा शिवः ।
तस्माद् विज्ञानतो मुक्तिर्नान्यथा भवकोटिभिः ॥ ८४ ॥

मन्त्रौषधिबलैर्यद्वज्जीर्यते भक्षितं विषम् ।
तद्वत् सर्वाणि कर्माणि जीर्यन्ति ज्ञानिनः क्षणात् ॥ ८५ ॥

देहाभिमाने गलिते विदिते परमात्मनि ।
यत्र यत्र मनो याति तत्र तत्र समाधयः ॥ ८६ ॥

अहं ब्रह्म न चान्योऽस्मि मुक्तोऽहमिति भावयेत् ।
सच्चिदानन्दरूपोऽहं नित्यं मुक्तस्वभाववान् ॥ ८७ ॥

एवं समाधियुक्तो यः समाधये[1] स कल्प्यते ।
सदाशिवोऽहमित्युक्त्वा स्वेच्छया विहरेद् यतिः ॥ ८८ ॥

लिप्यते न स पापेन बध्यते न च कर्मणा ।
[2]यथाऽग्निविद्रुतं स्वर्णं मालिन्यं दहति क्षणात् ॥ ८९ ॥

तथा ब्रह्मार्पितात्माऽसौ सर्वकर्माणि दह्यति ।
आत्मस्थां देवतां त्यक्त्वा बहिर्देवं विचिन्वते ॥ ९० ॥

करस्थं कौस्तुभं त्यक्त्वा भ्रमते काचतृष्णया ।
न योगेन न यन्त्रेण न मन्त्रेण विना हि सः ॥ ९१ ॥

द्वयोरभ्यासयोगेन ब्रह्मसंसिद्धिकारणम् ।
तमःपरिवृते गेहे घटो दीपेन दृश्यते ॥ ९२ ॥

एवं मायावृतो ह्यात्मा मनुना गोचरीकृतः ।
एतत् ते कथितं देवि ! ब्रह्मज्ञानमिदं महत् ॥ ९३ ॥

विज्ञाय गुरुतो जप्त्वा संसारसागरं तरेत् ।
यत्र यत्र मृतश्चायं गङ्गायां श्वपचालये ॥ ९४ ॥

---

१. स समाधये–ग० ।
२. यथा गिरिद्रुतं–ख० ।

ब्रह्मविद् ब्रह्मभूयाय कल्पते नान्यथा प्रिये ।
विश्वं शरीरमित्युक्तं पञ्चभूतात्मकं प्रिये ॥ ९५ ॥
चन्द्रसूर्याग्नितेजोभिर्जीवब्रह्मैक्यरूपकम् ।
तिस्रः कोट्यस्तदर्द्धेन शरीरे नाड्यो मताः[1] ॥ ९६ ॥
तासु मुख्या दश प्रोक्तास्तासु तिस्रो व्यवस्थिताः ।
प्रधाना मेरुदण्डेऽत्र चन्द्रसूर्याग्निरूपिणी ॥ ९७ ॥
इडा वामे स्थिता नाडी शुक्ला तु चन्द्ररूपिणी ।
शक्तिरूपा तु सा नाडी साक्षादमृतविग्रहा ॥ ९८ ॥
पिङ्गलाख्या च या दक्षे पुंरूपा सूर्यविग्रहा ।
दाडिमीकुसुमप्रख्या विषाख्या चापरा मता ॥ ९९ ॥
मेरुमध्यस्थिता या तु मूलादाब्रह्मरन्ध्रगा ।
सर्वतेजोमयी सा तु सुषुम्ना वह्निरूपिणी ॥१००॥
तस्या मध्ये विचित्राख्या अमृतस्राविणी शुभा ।
सर्वदेवमयी सा तु योगिनां हृदयङ्गमा ॥१०१॥
विसर्गाद् बिन्दुपर्यन्तं व्याप्य तिष्ठति तत्त्वतः ।
मूलाधारे त्रिपुराख्ये इच्छाज्ञानक्रियात्मके ॥१०२॥
मध्ये स्वयम्भुलिङ्गं तु कोटिसूर्य[2]समप्रभम् ।
तदूर्ध्वे तत्तुरीयं तु ध्यायेद् बन्धूकसन्निभम् ॥ १०३॥
तदूर्ध्वे तच्छिखाकारा कुण्डली रक्तविग्रहा ।
सा एव हि परा सूक्ष्मा महात्रिपुरसुन्दरी ॥१०४॥
चैतन्यं सर्वभूतानां शब्दब्रह्म यदुच्यते ।
तत्प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम् ॥१०५॥

---

१. नताः–ख० ।
२. सूर्यं–ख० ।

सर्वतेजोमयं तत्तु सच्चिदानन्दमव्ययम् ।
तद्बाह्ये हेमवर्णाभं रसवर्णं चतुर्दलम् ॥१०६॥

द्रुतहेमसमप्रख्यं पद्मं तत्र विभावयेत् ।
तदूर्ध्वेऽग्निसमप्रख्यं[1] षड्दलं हीरकप्रभम् ॥१०७॥

वादिलान्तषड्वर्णेन युक्तं स्वाधिष्ठानसंज्ञकम् ।
मूलमाधारषट्कानां मूलाधारं ततो विदुः ॥१०८॥

स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः ।
तदूर्ध्वे नाभिदेशे तु [2]मणिपूरं महत्पुरम् ॥१०९॥

हेमाभं वैद्युताभं च बहुतेजोमयं तथा ।
मणिवद् भिन्नं तत् पद्मं[3] मणिपूरं ततो विदुः ॥११०॥

दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम् ।
विष्णुनाऽधिष्ठितं पद्मं विश्वालोकनकारणम् ॥१११॥

तदूर्ध्वेऽनाहतं पद्ममुद्यदादित्यसन्निभम् ।
कादिठान्तं दलैरर्कपत्रैश्च समलङ्कृतम् ॥११२॥

तन्मध्ये बाणलिङ्गं तु सूर्यायुतसमप्रभम् ।
शब्दब्रह्ममयः शब्दो [4]मोहितस्तत्र दृश्यते ॥११३॥

तेनाहताख्यं तत्पद्मं योगिभिः परिकीर्त्यते ।
आनन्दसदनं तत्तु पुरुषाधिष्ठितं परम् ॥११४॥

तदूर्ध्वे तु विशुद्धाख्यं दलैः षोडशभिर्युतम् ।
स्वरैः षोडशकैर्युक्तं धूम्रवर्णं महत्प्रभम् ॥११५॥

---

१. प्रोक्तं–ख० ।
२. नाल–ग० ।
३. पूरं–क० ख० ।
४. अनाहतः–क० ख० ।

विशुद्धिं तनुते यस्माज्जीवस्य हंसलोकनात् ।
विशुद्धं पद्ममाख्यातम् आकाशाख्यं महाद्भुतम् ॥११६॥
आज्ञाचक्रं तदूर्ध्वे तु आत्मनाऽधिष्ठितं परम् ।
हक्षादिद्विदलं पद्मं चन्द्रेणाऽधिष्ठितं तु तत् ॥११७॥
आज्ञासंक्रमणं तत्र गुरोराज्ञेति कीर्तितम् ।
कैलासाख्यं तदूर्ध्वे तु [1]रोधिनी तु तदूर्ध्वतः ॥११८॥
सहस्राराम्बुजं देवि ! बिन्दुस्थानं तदूर्ध्वतः ।
आदौ पूरकयोगेन स्वाधारे योजयेन्मनः ॥११९॥
[2]गुदमेढ्रान्तरे शक्तिं तामाकुञ्च्य प्रबोधयेत् ।
लिङ्गभेदक्रमेणैव बिन्दुस्थानं समानयेत् ॥१२०॥
शम्भुना तां परां शक्तिमेकीभावं विचिन्तयेत् ।
तदुद्भवामृतं वक्त्रद्रुतं लाक्षारसोपमम् ॥१२१॥
पाययित्वा च तां शक्तिं [3]पराख्यां योगसिद्धिदाम् ।
षट्चक्रदेवतास्तत्र सन्तर्प्याऽमृतधारया ॥१२२॥
आनयेत् तेन मार्गेण मूलाधारं पुनः सुधीः ।
यातायातक्रमेणैव तत्र कुर्यान्मनोलयम् ॥१२३॥
एवमभ्यास[भ्यस्य]मानन्तु अहन्यहनि पार्वति ।
जरामरणदुःखाद्यैर्मुच्यते भवबन्धनैः ।
इत्युक्तं परमे योगं योनिमुद्राप्रबन्धनम् ॥१२४॥
अथापरं प्रवक्ष्यामि समाधिं भवनाशनम् ।
अथवा परमेशानि ! यथोक्तध्यानयोगतः ॥१२५॥

---

१. बोधिनी–क० ख० ।
२. गुद मेढ्रान्तरे–क० ख० ।
३. परोक्षां–क० ख० ।

हृत्पद्मकलिकामध्ये ध्यायेद् देवीमनन्यधीः ।
त्रिपुरात्मकमात्मानं भावयेन्न्यस्तविग्रहः ॥१२६॥
ऐक्यं सम्भावयेन्नित्यं स्वगुरुदेवतात्मनाम् ।
अहं देवो न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक् ॥१२७॥
सच्चिदानन्दरूपोऽहं शुद्धिबुद्धिस्वभाववान् ।
प्रणवं पूर्वमुद्धृत्य तदिति परतस्ततः ॥१२८॥
सदिति तु समालोच्य कर्म कुर्याद् विचक्षणः ।
स्मरणात् कर्मणामाद्यं ब्रह्मभूयाय कल्पते ॥१२९॥
सर्वमङ्गलसम्पन्नो बहिर्निर्गत्य साधकः ।
[1]त्यक्त्वा मूत्रपुरीषे च करपादौ विशोधयेत् ॥१३०॥
मुखं प्रक्षाल्य देवेशि ! नासारन्ध्रद्वयं ततः ।
नेत्राञ्जनं विधायैव शुद्धस्थानं समाश्रयेत् ॥१३१॥
नेत्राञ्जनमकृत्वैव संपश्येत् सौरमण्डलम् ।
जन्मार्जितफलं नश्येत् का कथा तस्य दुर्मतेः ॥१३२॥
त्रितत्त्वेन त्रिधाऽऽचम्य दन्तधावनमाचरेत् ।
दन्तका[2]ष्ठमखादित्वा पूजयेद् यस्तु देवताम् ॥१३३॥
तत्पूजा विफला देवि मृते च नरकं व्रजेत् ।
क्लीमात्मकं कामदेवं सर्वान्ते जनमालिखेत् ॥१३४॥
प्रियाय हृदयान्तोऽयं मनुर्दन्तविशुद्धये ।
चतुर्दशस्वरैर्वक्त्रं क्षालयेच्छुद्धिहेतवे ॥१३५॥

इति गन्धर्वतन्त्रे षष्ठः पटलः ॥ ६ ॥



---

१. त्यक्त–क० ख० ।
२. काठ–क० ख० ।

# सप्तमः पटलः

शङ्कर उवाच

प्रातः स्नानं ततः कुर्यात् त्रैपुरं [1]योजनक्रमम् ।
सुगन्धिसलिलैः शुद्धैः कुलतीर्थेऽथवा पुनः ॥ १ ॥

नद्यादौ विधिवत् स्नायात् [2]कुलदर्भविधारकः ।
रौप्यं दक्षिणतर्जन्यां अनामा [3]हेमसंयुता ॥ २ ॥

वामकनिष्ठिका हेमैः कुलदर्भोऽयमीरितः ।
एष एव भवेद्दर्भो न दर्भो वनसम्भवः ॥ ३ ॥

अशून्यं तु करं कुर्याद् वह्नीन्द्वर्कप्रतिष्ठया ।
सर्वभूतवशी स स्यान्मुद्रया चातिशोभया ॥ ४ ॥

त्रितत्त्वेन त्रिधाऽऽचम्य सङ्कल्प्य पापनुत्तये ।
कुलपात्रे सरत्नश्च[4] सतिलं सजलं ततः ॥ ५ ॥

गृहीत्वा कुलदेवस्य प्रीतये स्नानमाचरेत् ।
अस्नातस्य कुलं नास्ति तथा तर्पयतः पितॄन् ॥ ६ ॥

इदं विष्णुभैरवस्तु विचक्रम इतीरितम् ।
मृदालभनकृत्ये च नित्यमेवमुदीरयेत् ॥ ७ ॥

कुलचक्रं जले न्यस्य कुलमुद्रां विधाय च ।
एहि गङ्गे ! नमस्तुभ्यं सर्वतीर्थसमन्विते ॥ ८ ॥

---

१. योजयन्–ख० ।

२. विधायक:–क० ।

३. अनामा हैमसंयुताम्–ग० ।

४. बहुरत्नश्च–ग० ।

आवाहयामि देवि ! त्वां स्नानार्थमिह सुन्दरि ।
आवाह्याऽम्भसि संयोज्य सोमसूर्याग्निमण्डलम् ॥ ९ ॥

सञ्चिन्त्य मन्त्री तन्मध्ये ध्यायेत् त्रिपुरसुन्दरीम् ।
गायत्र्याश्च महादेव्याः सुन्दरीमाह्वयेच्छिवाम् ॥ १० ॥

त्रिवारमञ्जलौ[1] वारिमूलमन्त्रेण मन्त्रयेत् ।
अभिषिञ्चेत् ततो मूर्ध्नि मूलमन्त्रं हृदि स्मरन् ॥ ११ ॥

त्रिभिस्तु त्रिपुराबीजैस्त्रिधा मज्जनमाचरेत् ।
तस्मादुत्थाय देवेशि ! निर्णिक्ताशेषविग्रहः[2] ॥ १२ ॥

त्र्यक्षरीं च समुच्चार्य दुकूले परिधापयेत् ।
सकेशं मूषिकाक्रान्तमधौतं भग्नमस्वरम् ॥ १३ ॥

मलिनं परकीयं च पर्य्युषितं च वर्जयेत् ।
तिलकं कुलरूपं च कृत्वाऽऽचम्य विधानतः ॥ १४ ॥

ततः सन्ध्यामुपासीत पापहा येन साधना ।
स्नानं च त्रिविधं प्रोक्तं सन्ध्या च त्रिविधा स्मृता ॥ १५ ॥

आन्तरं च भवेद् देवि ! बाह्यं मानसमेव च ।
मानसं वै भवेत् स्नानं यः सदा शुद्धमानसः ॥ १६ ॥

स्पर्शने पादिके देवि ! निर्विकल्पः सदैव हि ।
बाह्यमत्रैव सम्प्रोक्तमान्तरं शृणु साम्प्रतम् ॥ १७ ॥

प्रागुक्तक्रमयोगेन प्राणायामपरो बुधः ।
शक्तिं परशिवेनैव सङ्गमार्थं[3] विधानतः ॥ १८ ॥

---

१. अञ्जनौ–क० ख० ।
२. निर्मुक्ताशेषविग्रह–क० ख० ।
३. सङ्गमय्य–ग० ।

तदुद्भवामृते शश्वन्निमज्य पुनरेव हि।
स्नायाच्च विमले तीर्थे पुष्करे हृदयाश्रिते ॥ १९ ॥
बिन्दुतीर्थेऽथवा स्नात्वा पुनर्जन्म न विद्यते।
आत्मानं सर्वदा सम्यग् ध्यायेद् ध्यानपरायणः ॥ २० ॥
देवताभेदतः सन्ध्या मानसीयं परा प्रिये।
शिवशक्त्योः समायोगो यस्मिन् काले प्रजायते ॥ २१ ॥
सा सन्ध्या कुलनिष्ठानां समाधिस्थैः प्रतीयते।
अपरां कथयाम्यत्र सर्वपापविनाशिनीम् ॥ २२ ॥
उपविश्य शुचौ देशे त्रितत्त्वेन त्रिधाऽऽचमेत्।
प्राणायामत्रयं कृत्वा त्रिभिर्बीजैस्त्रिधाविधम् ॥ २३ ॥
वामहस्ते जलं गृह्य गलितोदकबिन्दुभिः।
सप्तधा प्रोक्षणं कुर्यान्मूर्ध्नि मन्त्रमनुस्मरन् ॥ २४ ॥
अवशिष्टोदकं दक्षहस्ते संगृह्य साधकः।
नासामाश्लिष्य तोयेन ततस्तेनाऽघमर्षणम् ॥ २५ ॥
इडयाऽऽकृष्य देहान्तः क्षालितैः पापसञ्चयैः।
कृष्णवर्णं तदुदकं [1]दक्षनाड्या विरेचितम् ॥ २६ ॥
दक्षहस्ते तु तन्मन्त्री पापरूपं विचिन्त्य च।
पुरतो वज्रपाषाणे प्रक्षिपेदस्त्रमन्त्रतः ॥ २७ ॥
इत्यघमर्षणं कृत्वा पुनराचमनं तथा।
अभिषिञ्चेत् ततो मूर्ध्नि विधिना साधकोत्तमः ॥ २८ ॥
ॐ आपो देवी रसोऽमृतं पूतं ब्रह्म पुनीमहे।
जलाञ्जलित्रयं भूमौ मार्तण्डभैरवाय च ॥ २९ ॥
ऊर्ध्वबाहुस्ततो मन्त्री मार्तण्डं समुपाश्रयेत्।
ॐ उदुत्यं जातवेदसं देवं वहन्ति केतवः ॥ ३० ॥

---
१. वाम–क० ख०।

दृशे विश्राय मार्तण्डशेषे भैरवमीरयेत् ।
सूर्यमण्डलमध्ये तु कुलचक्रं विचिन्तयेत् ॥ ३१ ॥
बाल्योचितं स्पृहन्तीं वै [1]बालिकां चक्रमध्यतः ।
बालार्कमण्डलाभासां भानुवह्नीन्दु[2]लोचनाम् ॥ ३२ ॥
पाशाङ्कुशौ शरांश्चापं धारयन्तीं शिवां स्मरेत् ।
मध्याह्ने चिन्तयेद् देवीं नवयौवनशोभिताम् ॥ ३३ ॥
सायाह्ने चिन्तयेद् देवीं त्रैलोक्यैकप्रभामयीम् ।
सर्वयौवनसम्पन्नामुज्ज्वलां परमां कलाम् ॥ ३४ ॥
तामेव चिन्तयेद् रात्रौ भोगी भोगपरायणाम् ।
अष्टोत्तरशतावृत्त्या गायत्रीं च जपेत् सुधीः ॥ ३५ ॥
रविमण्डलगां देवीं प्रणिपत्य समापयेत् ।
एवं सन्ध्यां समाप्याऽथ हृदि विद्यां परामृशेत् ॥
अथवा परमेशानि ! सदैनां परिचिन्तयेत् ॥ ३६ ॥

देवी उवाच

इदानीं श्रोतुमिच्छामि कथमत्राधिकारिता ।
वेदव्रतविहीनानां व्रात्यादीनां कृतागसाम् ॥ ३७ ॥
तथैवाऽनुपनीतानां स्त्रीशूद्राणां भवेच्छिव ! ।
कथमेते महादेव ! मुक्तिं गच्छन्त्यनुत्तमाम् ॥
न विना ब्राह्मणं मुच्येद् देहबन्धादिति श्रुतिः ॥ ३८ ॥

ईश्वर उवाच

देवदारुवने पूर्वं ब्राह्मणानतिदुर्धियः ।
विलोक्य भगवान् विष्णुर्मामभ्येत्याभिवाद्य च ॥ ३९ ॥

---

१. बालिका–क० ख० ।
२. त्रिलोचनाम्–ग० ।

उपविष्टस्तदा देवः कारुण्यद्रुतचेतसा ।
पृष्टवान् मां महादेवि ! तेषां मुक्तेर्हि कारणम् ॥ ४० ॥

भगवान् उवाच

इमे दुर्मतयः सर्वे वेदाचारबहिष्कृताः ।
अन्यायमैथुने शक्ताः सुरापानपरायणाः ॥ ४१ ॥
आत्मज्ञानविहीनानां योगाभ्यासावहेलिनाम् ।
कथमेषां भवेन्मुक्तिस्तदुपायं वद प्रभो ॥
शूद्रादीनां कथं देव दीक्षायामधिकारिता ॥ ४२ ॥

ईश्वर उवाच

अपि कृत्वा दुराचारान् पतितो वेदवर्जितः ।
नारी शूद्रोऽथवा व्रात्यो यां ज्ञात्वा ब्राह्मणो भवेत् ॥ ४३ ॥
यया विज्ञायते ब्रह्म सच्चिदानन्दमव्ययम् ।
तामेव कथयाम्यद्य तवैव हृदि संस्थिताम् ॥ ४४ ॥
चतुर्विंशतितत्त्वेन निर्मिता तत्स्वरूपिणी ।
त्रिकारं चम्पकापीतं ब्रह्मविष्णुशिवात्मकम् ॥ ४५ ॥
शतपत्रासनारूढं ध्यायेत् पद्मासनस्थितम् ।
पुकारं[1] चिन्तयेदेवमतसीपुष्पसन्निभम् ॥ ४६ ॥
पद्ममध्यस्थितं सौम्यमुपपातकनाशनम् ।
रकारं कपिलं नित्यं कमलासनसंस्थितम् ॥ ४७ ॥
ध्यायेच्छान्तं सुरश्रेष्ठ ! महापातकनाशनम् ।
सुकारं चिन्तयेद् देव ! इन्द्रनीलसमप्रभम् ॥ ४८ ॥
निर्दहेत् सर्वदुःखानि ग्रहरोगोद्भवानि च ।
न्दकारं वह्निदीप्ताभं चिन्तनात् पुरुषर्षभ ॥ ४९ ॥

---

१. पकारं-ग ।

भ्रूणहत्याकृतं पापं तत्क्षणादेव नश्यति ।
रीङ्कारं विमलं ध्यायेद् ब्रह्महत्याविनाशनम् ॥ ५० ॥
विकारं चिन्तयेद् विद्वान् शुद्धस्फटिकसन्निभम् ।
पापं नश्यति तत् क्षिप्रमगम्यागमनोद्भवम् ॥ ५१ ॥
ब्रकारं चिन्तयेद् योगी शुद्धस्फटिकसन्निभम् ।
अभक्ष्यभक्षणं पापं तत्क्षणादेव नश्यति ॥ ५२ ॥
हेकारं तारकावर्णमिन्दुशेषविभूषितम् ।
योगिनां वरदं ध्यायेद् ब्रह्महत्याविनाशनम् ॥ ५३ ॥
काकारं कृष्णवर्णं च नीलमेघसमप्रभम् ।
ध्यात्वा पुरुषशार्दूल पादं नाशयति ध्रुवम् ॥ ५४ ॥
मेकारं रक्तवर्णं च कमलासनसंस्थितम् ।
गोहत्यादिकृतं पापं नाशयत्येव तत्क्षणात् ॥ ५५ ॥
श्वकारं[1] परमं ध्यायेत् तत्त्वकाञ्चनसन्निभम् ।
कमलासनमासीनं[2] स्त्रीहत्याविमोचनम्[3] ॥ ५६ ॥
रीङ्कारं शुक्लवर्णं तु जातीपुष्पसमप्रभम् ।
गुरुहत्याकृतं पापं ध्यात्वा दहति तत्क्षणात् ॥ ५७ ॥
धीकारं चिन्तयेच्छुक्लं कुन्दपुष्पसमप्रभम् ।
पितृमातृवधात् पापान्मुच्यते नात्र संशयः ॥ ५८ ॥
मकारं पद्मरागाभं चिन्तयेद् दीप्ततेजसम् ।
पूर्वजन्मार्जितं पापं तत्क्षणादेव नश्यति ॥ ५९ ॥
हिकारं शङ्खवर्णं तु पूर्णचन्द्रसमप्रभम् ।
अशेषपापदहनं ध्यायेन्नित्यमिहाच्युतम् ॥ ६० ॥

---

१. श्वकायं–क० ख० ।
२. समासीनं–क० ख० ।
३. मन्त्री–क० ख० ।

तत्कारं पाण्डरं ध्यायेत् पद्मस्योपरि संस्थितम् ।
प्रतिग्रहकृतं पापं स्मरणादेव नश्यति ॥ ६१ ॥
नःकारं रक्तवर्णं तु इन्द्रगोपसमप्रभम् ।
ध्यात्वा प्राणिवधं पापं निर्दहेज्जगदीश्वर ॥ ६२ ॥
क्लीङ्कारं रक्तवर्णं तु स्मरेद् वज्रसमप्रभम् ।
निर्दहेत् सर्वपापानि नान्यैः पापैः प्रलिप्यते ॥ ६३ ॥
नेकारं तु मुखं पूर्वमुद्यदर्कसमप्रभम् ।
सकृद् ध्यात्वा सुरश्रेष्ठ! स गच्छेद् ब्रह्मणः पदम् ॥ ६४ ॥
नीलोत्पलदलश्यामं प्रकारं दक्षिणाननम् ।
सकृद् ध्यात्वा सुरश्रेष्ठ! स गच्छेद् वैष्णवं पदम् ॥ ६५ ॥
सौम्यं गोरोचनापीतं चोकारं चोत्तराननम् ।
सकृद् ध्यात्वा सुरश्रेष्ठ ! स गच्छेद् रुद्रतां पुनः ॥ ६६ ॥
शरच्चन्द्रनिभं शान्तं दकारं पश्चिमाननम् ।
सकृद् ध्यात्वा सुरश्रेष्ठ ! स गच्छेदैश्वरं पदम् ॥ ६७ ॥
यात्कारं च शिवः प्रोक्तमूर्ध्वाननमितीरितम् ।
सकृद् ध्यात्वा सुरश्रेष्ठ ! सदाशिवपुरं व्रजेत् ॥ ६८ ॥
अक्षराणां तु सर्वेषां वक्ष्यन्ते देवताः क्रमात् ।
अग्निवायुसूर्यविद्युदुमा वरुण एव च ॥ ६९ ॥
बृहस्पतिस्तु पर्जन्य इन्द्रो गन्धर्व एव च ।
पूषा शिवश्च त्वष्टा च वासवश्च मरुत्तथा ॥ ७० ॥
सोमोऽङ्गिरा विश्वेदेवा अश्विनी च प्रजापतिः ।
सर्वदेवश्च रुद्रश्च ब्रह्मा विष्णुश्च देवताः ॥ ७१ ॥
जयकाले चिन्तयित्वा तासां सायुज्यमाप्नुयात् ।
ललितायास्त्रिभिर्बीजैस्त्रिपदेयं त्रयीमयी ॥ ७२ ॥

---

१. यमा–क० ख० ।

एतज्ज्ञात्वा तु मेधावी जपहोमं करोति यः ।
षडङ्गमथ[1] विद्यादौ ध्यायन् तां परमां[2] कलाम् ॥ ७३ ॥

न भवेत् सूतकं तस्य मृतकं[3] च न विद्यते ।
यश्चैवं तु न जानाति गायत्रीं च यथाविधि ॥ ७४ ॥

कथितं सूतकं तस्य मृतकं च मयाऽनघ ! ।
नैव दानफलं तस्य न च यज्ञफलं लभेत् ॥ ७५ ॥

न च तीर्थफलं प्रोक्तं तस्यैव सूतके सति ।
गायत्र्येषा समाख्याता त्रैपुरी सर्वसिद्धिदा ॥ ७६ ॥

गायन्तं त्रायते यस्माद् गायत्री तेन चोच्यते ।
अष्टोत्तरसहस्रं वै जपेदेनामनन्यधीः ॥ ७७ ॥

सर्वपापविनिर्मुक्तो भवेत् पूजाधिकारवान् ।
जीवन्मुक्तो जामदग्न्यः शिष्यो मे घोरपातकैः ॥ ७८ ॥

विमुक्तो मातृहत्याद्यैर्मीननाथस्तथापरः ।
जैगीषव्यश्च चन्द्रश्च वासवश्च विमोचितः ॥ ७९ ॥

गुरुतल्पगमनाद्यैस्तथागस्त्यः प्रमोचितः ।
अभक्ष्यभक्षणात् पापादनयैव विमोचितः ॥ ८० ॥

चाण्डालीगमनाद्यैश्च वशिष्ठश्चापि मोचितः ।
दत्तात्रेयः सुरापानात् ज्वलनः सर्वभक्षणात् ॥ ८१ ॥

त एव ब्राह्मणाः सर्वे विष्णुना प्रभविष्णुना ।
अनयैव महादेवि ! सर्व एव प्रमोचिताः ॥ ८२ ॥

---

१. षडङ्गमविधायादौ–क० ख० ।
२. परदेवताम्–क० ख० ।
३. सूतकं–क० ख० ग० ।

देवी उवाच

धन्या चानुगृहीतास्मि त्वया नाथेन शङ्कर ! ।
निःसंशयास्मि देवेश ! भ्रमो द्वैतश्च मे हतः ।
कतिधा सा भवेद् देव ! तदिदानीं वद प्रभो ॥ ८३ ॥

ईश्वर उवाच

एकैव सा महादेवि ! बहुधा भिन्नतां गता ।
सौरी च वैष्णवी चैव शाक्ती ब्राह्म्यथ शाम्भवी ॥ ८४ ॥
तत्तन्त्रे ताः प्रयोक्तव्यास्त्रैपुरीयं प्रकाशिता ।
तर्पणं च त्रिधा प्रोक्तं साम्प्रतं तच्छृणुष्व मे ॥ ८५ ॥
सोमार्कानलसङ्घट्टात् स्खलितं यत् परामृतम्[1] ।
तेनामृतेन दिव्येन तर्पयेत् परदेवताम् ॥ ८६ ॥
आन्तरं तर्पणं ह्येतन्मानसं शृणु साम्प्रतम् ।
आत्मानं तन्मयं स्मृत्वा सदा सन्तर्पितात्मवान् ॥ ८७ ॥
सर्वदा सर्वकार्येषु सन्तुष्टः स्थिरमानसः ।
उपविश्य शुचौ देशे ततस्तर्पणमारभेत् ॥ ८८ ॥
तर्पयित्वा गुरूनादौ मूलदेवीं च तर्पयेत् ।
बीजद्वयं ततो विद्या हुतभुग्दयितान्विता ॥ ८९ ॥
ततो देव्याः स्वनामान्ते तर्पयामि नमः पदम् ।
देवान् पितॄन् ऋषींश्चैव तर्पयेत् कुलवारिणा ॥ ९० ॥
तर्पणादौ प्रयुञ्जीत तृप्यतां वृद्धभैरवं ।
तथैव परमेशानि विष्णुं रुद्रं प्रजापतिम् ॥ ९१ ॥
एवं ऋषीन् प्रतर्प्याथ पितॄनपि च भैरवान् ।
तृप्यतां सुन्दरी माता पिता भैरवस्तृप्यताम् ॥ ९२ ॥

---

१. परमामृतम्—ग० ।

आदौ त्रिपुरपूर्वं च तर्पणे विनियोजयेत् ।
श्राद्धे विवाहे दाने च स्नाने चानङ्गपूजने ॥ ९३ ॥

सर्वदा सर्वकार्येषु तान्त्रिके वैदिके तथा ।
त्रिपुरभैरवं चैव स्मरेत् त्रिपुरसुन्दरीम् ॥ ९४ ॥

स्वविद्यां संस्मरन् कुर्यात् क्रियां सर्वत्र चोदिताम् ।
द्विजातीनां च संस्कारो वेदोक्तः समुदाहृतः ॥ ९५ ॥

तेषां तु तत्र तत्रापि विद्यया विधिमाचरेत् ।
अन्येषामपि वर्णानां विद्ययैव समापयेत् ॥ ९६ ॥

विद्यया संस्कृतो यस्तु स एव ब्राह्मणो मतः ।
[1]निधने विद्यया दाहो विद्ययान्यत् समाचरेत् ॥ ९७ ॥

तेनैव तन्मयात् सिद्धिः सर्वत्र भवति ध्रुवम् ।
यावन्न दीयते देवि ! सूर्यायाऽर्घ्यं विधानतः ॥ ९८ ॥

विधिना विहिता पूजा तावत् केन प्रगृह्यते ।
मार्तण्डभैरवायाऽर्घ्यं पूर्णाभिः सिततण्डुलैः ॥ ९९ ॥

रक्तपुष्पैश्चन्दनैश्च सगणाय निवेदयेत् ।
शिवबीजं वह्निसंस्थं वामनेत्रविभूषितम् ॥१००॥

नादबिन्दुकलायुक्तं हंसः पदमतो लिखेत् ।
मार्तण्डभैरवायेति प्रकाशशक्ति चालिखेत् ॥१०१॥

सहितायेति चोक्त्वा वै इदमर्घ्यमतः परम् ।
वह्निजायान्वितं कृत्वा सूर्यायाऽर्घ्यं निवेदयेत् ॥१०२॥

न दद्याद् भास्करायाऽर्घ्यं शङ्खतोयैर्महेश्वरि ! ।
सर्वदेवमयं सूर्यं सर्वदेवनमस्कृतम् ॥१०३॥

---

१. निधनो–क० ख० ।

पूजयित्वा विधानेन प्रदक्षिणमनुव्रजन् ।
प्रणम्य भगवन्तं वै सर्वपापैः प्रमुच्यते ॥१०४॥

यः सदा पूजयेद् देवं दृष्ट्वा वा प्रणमेत् प्रभुम् ।
पूजितं देवतत्त्वेन ब्रह्माण्डान्तरगोचरम् ॥१०५॥

तिस्रः कोट्यर्द्धकोटी च तीर्थानां यदुदाहृतम् ।
सकृत् प्रदक्षिणं देव ! दद्यात् तत्फलमञ्जसा ॥१०६॥

तीर्थानां दर्शने यद् यत् तत्तद् भास्करदर्शनात् ।
सर्वतीर्थामृतैः स्नातो यः सदा सूर्यरश्मिभिः ॥१०७॥

अथ त्रिपुरगायत्र्या देव्यै अर्घ्यं निवेदयेत् ।
सूर्यमण्डलसंस्थायै पूर्वोक्तध्यानयोगतः ॥१०८॥

चक्रराजं हृदि ध्यात्वा तत्र देवीं समानयेत् ।
अष्टोत्तरशतावृत्त्या जपन् विद्यामनन्यधीः ॥१०९॥

॥ इति गन्धर्वतन्त्रे सप्तमः पटलः ॥ ७ ॥



# अष्टमः पटलः

ईश्वर उवाच

ततो मौनी[1] विशुद्धात्मा हृदि विद्यां परामृशन् ।
अबहिर्मानसो योगी[2] यागभूमिमथाविशेत् ॥ १ ॥

[3]केशकीटादिसंयुक्ता न स्निग्धा नातिपिच्छिला ।
न रूक्षा नातिनीचा वै नात्युष्णा[4] न [5]वनान्विता॥ २ ॥

न च वायुभिराच्छन्ना नान्यप्राणि[6]समाकुला ।
धूलिकर्दमसंयुक्ता पशुभिर्न विलोकिता ॥ ३ ॥

[7]वृक्षादिभिरनाकीर्णा द्रववारिसमाकुला ।
अनावृता चतुर्दिक्षु मनसोऽतुष्टिकारिणी ॥ ४ ॥

ऊषरे कृमिसंयुक्ते[8] स्थाने पूतेऽपि नार्चयेत् ।
या च भूमिर्निषिद्धैषा विहिता कथ्यतेऽधुना ॥ ५ ॥

वापीकूपसमीपस्था सुमनोद्यानमध्यगा ।
विचित्रमण्डपैर्युक्ता शुद्धवेदिपरिष्कृता ॥ ६ ॥

---

१. मौनं–ग० ।
२. योग–ग० ।
३. ये मर्कटा–ग० ।
४. नात्युच्चा–क० ख० ।
५. लवणान्विता–(न बलान्विता)–ग० ।
६. प्राणैः–ग० ।
७. सूक्ष्मा–ग० ।
८. कृषिसंयुक्तस्थाने पुण्येऽपि–क० ख० ।

पताकाध्वजसंकीर्णा लाक्षारुणपरिच्छदा ।
पुष्पप्रकरसंकीर्णा घण्टाचामरभूषिता ॥ ७ ॥

दीपदर्पणसंयुक्ता वितानोपपरिष्कृता ।
पेयैर्भक्ष्यैः समायुक्ता कर्पूरागुरुधूपिता ॥ ८ ॥

बालार्कसदृशी रम्या मनःसन्तोषकारिणी ।
तत्तदायुधपूर्णान्ता[1] विभूषितप्रपूजिता ॥ ९ ॥

एवमेषा महादेवि ! यागभूमिः समीरिता ।
पूजावेद्या बहिः स्थित्वा [2]चतुर्हस्तान्तरे धिया ॥ १० ॥

गृहे चेद् द्वारदेशस्थ आचम्य मनसा गुरून् ।
प्रणमेदिष्टदेवीं च दिक्पालानपि चेतसा ॥ ११ ॥

इन्द्रमग्निं यमं वन्दे निर्ऋतिं वरुणं तथा ।
पवनं धनदं चेशं प्रजापतिमनन्तकम्[3] ॥ १२ ॥

गणेशं चैव क्षेत्रेशं वन्दे द्वारश्रियं तथा ।
गणनाथं बटुकं च दुर्गां क्षेत्रं रतिं स्मरम् ॥ १३ ॥

प्रीतिं वसन्तकं चैव शङ्खपद्मनिधींस्तथा ।
सरस्वतीं महालक्ष्मीं मायां दुर्गां नमाम्यहम् ॥ १४ ॥

भद्रकालीं च स्वस्तिं च स्वाहां शुभकरीं[4] तथा ।
गौरीं च लोकधात्रीं च वागीश्वरीं नमाम्यहम् ॥ १५ ॥

ब्रह्माणं वास्तुपुरुषं प्रणमामि यथाक्रमम् ।
पुष्पाञ्जलिमथैतेभ्यो भक्त्या परमया दिशेत् ॥ १६ ॥

---

१. पूर्णान्तर्विभूषित–ग० ।
२. चतुर्हस्तान्तरेखया–ग० ।
३. अनन्तरम्–ग० ।
४. शुभङ्करी–ग० ।

मण्डलं वामतः कृत्वा चतुरस्रं महेश्वरि ।
आधारं पूजयेत् तत्र पात्रं चान्नोदकान्वितम् ॥ १७ ॥

संस्कृत्य परमेशानि ! सर्वभूतबलिं हरेत् ।
तारं च भुवनेशानीं सर्वविघ्नपदं ततः ॥ १८ ॥

हृदन्ते[1] सर्वभूतेभ्यो हुङ्कारं वह्निवल्लभाम् ।
समुच्चरन् बलिं दद्यात् मुद्रया तत्त्वसंज्ञया ॥ १९ ॥

अङ्गुष्ठानामिकायोगं तत्त्वमुद्रेयमीरिता ।
वक्त्रान्ते चास्त्रमालिख्य ङेन्तं फट्कारसंयुतम् ॥ २० ॥

अस्त्रमन्त्रः समाख्यातः सर्वविघ्नौघनाशकः ।
अनेनैवाक्षतान् सम्यक् सम्मन्त्र्य सप्तधा ततः ॥ २१ ॥

अपसर्पन्तु ते भूता भूमौ ये चान्तरिक्षगाः ।
दिव्यलोकगता ये च ते नश्यन्तु[2] शिवाज्ञया ॥ २२ ॥

अनेनैवाक्षतांस्तत्र विकिरेद् यज्ञमण्डपे ।
ऐं क्लीं सौः इति मन्त्रेण पूजा देव्या[3] महेश्वरि ! ॥ २३ ॥

अङ्गं सङ्कोचयन् वामं प्रविशेद् दक्षिणाङ्घ्रिणा ।
यागमन्दिरगांस्तत्र विघ्नानुत्सारयेत् ततः ॥ २४ ॥

पार्ष्णिघातैः[4]करास्फोटसमुदञ्चितवक्त्रकः[5] ।
तालत्रयमिदं कृत्वा विघ्नान् सर्वानपाहरेत्[6] ॥ २५ ॥

---

१. हृदाख्यान्ते–क० ग० ।
२. नश्यन्ति–क० ख० ।
३. वेदी–ग० ।
४. कर–क० ख० ।
५. वक्त्रकैः–ग० ।
६. उपाहरेत्–क० ख० ।

ततः पुनर्हुम्फडिति पार्श्वमूर्ध्वमधस्तथा ।
आत्मनः [1]क्रोधदृष्ट्याऽथ निरीक्ष्य सुमना भवेत् ॥ २६ ॥

वीक्षणं सर्वबीजेन यज्ञभूमेः समीरितम् ।
तत्तुर्यो बिन्दुसंयुक्तः कलानादसमन्वितः ॥ २७ ॥

वर्मबीजमिदं प्रोक्तं धर्मकामार्थसाधनम् ।
प्रोक्षणं चास्त्रमन्त्रेण यागभूमेः समाचरेत् ॥ २८ ॥

अशुद्धपक्षिसंयोगपक्षिविष्ठावसेचनम् ।
मूषिकामण्डूकस्पर्शकृमिकीटादिसङ्गमः ॥ २९ ॥

अज्ञातदूषणं स्थानं मार्जनादौ च यद् भवेत् ।
एवमादीनि नश्यन्ति लोकनात् स्पर्शनात् प्रिये ॥ ३० ॥

मधुकैटभयोर्मेदसङ्घातैर्दृढताङ्गता ।
मेदिनी सर्वदा शुद्धा [2]सुरपूजासु सर्वतः ॥ ३१ ॥

तस्य दोषस्य मोषार्थं कामबीजं लिखेत् क्षितौ ।
[3]नैवेद्यादि स्वयं धृत्वा आच्छाद्य मीनमुद्रया ॥ ३२ ॥

वायुबीजेन संशोष्य वह्निना च मलं दहेत् ।
श्रीवत्समुद्रया दृष्ट्वा तत् सर्वमवलोकयेत् ॥ ३३ ॥

यदात्मना न विज्ञातं सम्यक् पुष्पादिपूर्[4]षणम् ।
[5]अपस्पर्शादिकं वापि यदन्यायार्जितं भवेत् ॥ ३४ ॥

---

१. क्रोधदृष्ट्याथ—क० ख० ।
२. स्वर—ग० ।
३. 'नैवेद्यादि' इत्यारभ्य 'श्रीवत्समुद्रया' इत्यन्तं नास्ति—ग० ।
४. पुष्पादिदूषणम्—क० ख० ।
५. अस्पर्शनादिकम्—क० ख० ।

तथा निर्माल्यसंसृष्टिः कीटाद्यारोहणं [1]च यत् ।
तत् सर्वं नाशमायाति नैवेद्याद्यवलोकनात् ॥ ३५ ॥

नैवेद्यकादिकं यत्तु पुष्पगन्धादिकं च यत् ।
सर्वमाच्छादितं कार्यं यावदावाहयेत् पराम् ॥ ३६ ॥

आवाह्य स्थापयित्वा तु निराच्छादं प्रकाशयेत् ।
राक्षसाः प्रतिगृह्णन्ति निराच्छादं यतः प्रिये ! ॥ ३७ ॥

आसनं च ततः कुर्यान्नातिनीचं न चोच्छ्रितम् ।
आसनं चार्घ्यपात्रं च भग्नमासादयेन्न तु ॥ ३८ ॥

कृष्णाजिने मोक्षसिद्धिः श्रीमोक्षौ व्याघ्रचर्मणि ।
काम्यार्थं कम्बले चैवमभीष्टं रक्तकम्बले ॥ ३९ ॥

कुशासने सर्वसिद्धिर्मारणे कृष्णकम्बलम् ।
त्रिपुरापूजने शस्तं रक्तकम्बलमासनम् ॥ ४० ॥

नैतद् द्विहस्ततो दीर्घं सार्द्धहस्तानुविस्तृतम् ।
न त्र्यङ्गुलात् समुच्छ्रायं पूजाकर्मणि संग्रहेत् (?)॥ ४१ ॥

यथेष्टं चार्मणं कुर्यात् पूर्वोक्तं सिद्धिदायकम् ।
न दीक्षितो विशेज्जातु कृष्णसाराजिने गृही ॥ ४२ ॥

धरण्यां दुःखसम्भूतिर्दौर्भाग्यं दारुजासने ।
आम्रनिम्बकदम्बानामासनं वंशनाशनम् ॥ ४३ ॥

बकुले किंशुके चैव पनसेषु हतश्रियः ।
वंशेष्टकाधरणीतृणपल्लवनिर्मितम् ॥ ४४ ॥

वर्जयेदासनं मन्त्री दारिद्र्यव्याधिदुःखदम् ।
नाराचैर्वारिभिन्नं स्याद् विशीर्णं भग्नमेव च ॥ ४५ ॥

---

१. चरेत्—क० ख० ।
२. सर्व—क० ख० ।

पर्युषितं परेषां तदधौतं च विवर्जयेत् ।
[1]गाम्भीरीनिर्मितं शस्तं [2]नान्यदारुमयं शुभम् ॥ ४६ ॥

न यथेष्टासनो भूयात् पूजाकर्मणि साधकः ।
काष्ठादिकासनं कुर्यान्मितमेव सदा प्रिये ! ॥ ४७ ॥

चतुर्विंशत्यङ्गुलेन दीर्घकाष्ठासनं शिवे ! ।
षोडशाङ्गुलविस्तीर्णमुच्छ्रायाच्चतुरङ्गुलम् ॥ ४८ ॥

तदर्द्धाङ्गुलं वा कुर्यान्नोच्छ्रितं [3]चात आचरेत् ।
धरण्यां वस्त्रसंयोगाद् दारुजे कम्बलस्य च ॥ ४९ ॥

कौशेया[4]जिनसंयोगो हन्ति पुण्यं पुरातनम् ।
यथाशक्त्ये[5]कतो मन्त्री शस्तासनमुपाविशेत् ॥ ५० ॥

पाणिभ्यामासनं धृत्वा विहितं विस्तरेद् भुवि ।
पराबीजं समुच्चार्य ततश्चाधारपूर्वकम् ॥ ५१ ॥

शक्तिपदं समालिख्य कमलासनमालिखेत् ।
ङेन्तं नमःपदं कुर्यादनेनैवासनं यजेत् ॥ ५२ ॥

मूलप्रकृतिं तत्रैव कूर्मं च परिचिन्तयेत् ।
अनन्तं चापि सम्पूज्य पृथिव्यर्च्यं निवेदयेत् ॥ ५३ ॥

प्रणवं पूर्वमुच्चार्य पृथिव्यै नम इत्यपि ।
पाणिभ्यामासनं धृत्वा स्मरेदेवं विधानतः ॥ ५४ ॥

मेरुपृष्ठ ऋषिः प्रोक्तः सुतलं छन्द ईरितम् ।
कूर्मो वै देवता चात्र आसनस्योपवेशने ॥ ५५ ॥

---

१. गाम्भारी–क० ख० ।
२. नान्यद्–क० ख० ।
३. चाति–क० ख० ।
४. वाजिन–क० ख० ।
५. यथाशस्ते कृतो–ग० ।

विनियोगस्तथा प्रोक्त उपविशेत् समन्त्रकम् ।
पृथ्वि ! त्वया धृता लोका देवि ! त्वं विष्णुना धृता ॥ ५६ ॥
त्वं च धारय मां नित्यं पवित्रमासनं कुरु ।
दुःशिल्पिरचितत्वादि यदन्यासनदूषणम् ॥ ५७ ॥
अज्ञातरूपकं याति विलयं विधिना प्रिये ! ।
पदद्वयं समं सम्यगूरुद्वयोपरि स्थितम् ॥ ५८ ॥
सव्यं पादमुपादाय दक्षिणोपरि विन्यसेत् ।
विशुद्धकव्योः[1] पार्ष्णि तु नासाग्रग्रस्तलोचनः ॥ ५९ ॥
पद्मासनं भवेदेतत् प्रशस्तं त्रिपुरार्चने ।
स्वस्तिकं गोमुखं चैवमूर्ध्वं स्वस्तिकमेव वा ॥ ६० ॥
पर्यङ्कमासनं शस्तमेवं बद्धासनः प्रिये ।
पश्यन्नभीष्टमेवं च पाददोषं न पश्यति ॥ ६१ ॥
न युक्तमन्यथा पाददर्शनं सुरपूजने ।
दिग्विभागेषु कौबेरी दिक् शिवा प्रीतिदायिनी ॥ ६२ ॥
तस्मात् तन्मुख आसीनः पूजयेत् त्रिपुरां सदा ।
उत्तराभिमुखो भूत्वा यदा देवीं प्रपूजयेत् ॥ ६३ ॥
उत्तराशा तदा देवि पूर्वाशैव न संशयः ।
ईशानमग्निकोणं स्याद् वायुकोणं तथेशकम् ॥ ६४ ॥
दक्षिणाशा तदा ज्ञेया पश्चिमाशा महेश्वरि ।
राक्षसं वायुकोणं स्यादाग्नेयं राक्षसं भवेत् ॥ ६५ ॥
प्राकप्रत्यङ्मुख[2]पूजायां लौकिकं पश्चिमं स्मृतम् ।
दक्षिणोत्तरपूजायां सम्मुखं पश्चिमं स्मृतम् ॥ ६६ ॥

---

१. विष्टरस्य कोटचोः–क० ख० ।
२. मख–क० ख० ।

योगिनीचक्रपूजायां दिगियं नान्यथा भवेत् ।
कुङ्कुमारुणदेहस्तु रक्ताभरणभूषितः ॥ ६७ ॥
रक्तासनोपविष्टस्तु लाक्षारुणगृहे स्थितः ।
ताम्बूलरागवदनो धूपामोदसुगन्धितः ॥ ६८ ॥
कर्पूरक्षोददिग्धाङ्गो रक्तचन्दनभूषितः ।
सर्वशृङ्गारवेशाढ्यस्त्रिपुरोकृतविग्रहः ॥ ६९ ॥
मनःसङ्कल्पयुक्तो वा साधकः स्थिरमानसः ।
कृताञ्जलिपुटो भूत्वा मन्दस्मितमुखाम्बुजः ॥ ७० ॥
वामकर्णोर्ध्वभागे तु गुरुं च प्रणमेत् ततः ।
दक्षकर्णोर्ध्वभागे तु गणेशं प्रणमेद् बुधः ॥ ७१ ॥
दुर्गां नमेत् पुरोभागे पृष्ठतः क्षेत्रनायकम् ।
स्वदक्षे वामतो देव्या दीपं संस्थापयेत् ततः ॥ ७२ ॥
ततो रमिति मन्त्रेण शिखां दीपस्य संस्पृशेत् ।
देवतीर्थेन देवेशि ! संस्पृश्य च विधानतः ॥ ७३ ॥
सुप्रकाशो महादीपः सर्वतस्तिमिरापहः ।
सबाह्याभ्यन्तरं ज्योतिर्दीपोऽस्तु शुभदायकः ॥ ७४ ॥
स तस्य शुभदो दीपो भवेत् स्पर्शनमात्रतः ।
पतङ्ग-कीट-केशादि-दाह-क्रव्यादसंहतः ॥ ७५ ॥
वसामज्जास्थिसंभूतिर्यदाद्यनुपयोगिनः ।
अज्ञातरूपकं सर्वं दोषं स्पर्शाद् विनाशयेत् ॥ ७६ ॥
रोचनाकुङ्कुमाभ्याश्च[1] कस्तूरीचन्दनेन्दुभिः ।
रञ्जितं चक्रराजञ्च स्वयम्भूकुसुमैर्युतम् ॥ ७७ ॥
सिन्दूररजसाक्रान्तं पुरतः सिंहविष्टरे ।
संस्थाप्य सहसा देवि ! योगिनीभिः समन्ततः ॥ ७८ ॥

---

१. भ्यश्च–ख० ।

देवीरूपं विचिन्त्याऽथ चक्रे पुष्पाञ्जलिं दिशेत् ।
[1]अशून्यं कुसुमैः कुर्याच्छून्ये [2]विघ्नान्यनेकशः ॥ ७९ ॥

गन्धपुष्पाक्षतादीनि दक्षभागे निधापयेत् ।
प्रक्षालनाय करयोः पात्रं पश्चान्निधापयेत् ॥ ८० ॥

अर्घ्यादिकं पुरोभागे सव्ये कुम्भं निधापयेत् ।
मण्डलं वामतः कृत्वा जलेन चतुरस्रकम् ॥ ८१ ॥

वहत् कराभ्यां देवेशि ! तत्राधारं मनोहरम् ।
सुवर्णरौप्यताम्रादि विहितं स्थापयेत् ततः ॥ ८२ ॥

वह्निमण्डलरूपं तं कलाभिः सह पूजयेत् ।
कलशं हेमजं धान्यं निच्छिद्रं चापि सुन्दरम् ॥ ८३ ॥

वस्त्रपूतैर्जलैः पूर्णं सगन्धैर्दोषवर्जितैः ।
पानीयं घटमध्यस्थं वीक्षन् गुह्यं च साधकः ॥ ८४ ॥

वामेन पाणिना देवि ! तत्राधारे निवेशयेत् ।
पूजयेत् सूर्यरूपं तं कलाभिः परमेश्वरि ! ॥ ८५ ॥

[3]कलशं तं समभ्यर्च्य विशेषेण वरानने ! ।
तत्रस्थममृतं साक्षाच्चन्द्ररूपं विचिन्तयेत् ॥ ८६ ॥

चन्द्रमण्डलमभ्यर्च्य कलाभिः सुरवन्दिते ! ।
आनन्दभैरवं तत्र यजेदानन्दभैरवीम् ॥ ८७ ॥

यद्यन्यद् दूषणं पात्रे तोये [4]वाऽऽज्ञानतो भवेत् ।
तत् सर्वं नाशमायाति पूजार्हः कलशो भवेत् ॥ ८८ ॥

---

१. अशून्य–क० ख० ।
२. विघ्नाद्यनेकशः–क० ख० ।
३. कल्पं तञ्च–क० ख० ।
४. राज्ञान्वतो–क० ख० ।

पात्रमस्त्राम्बुभिः[1] प्रोक्ष्य दक्षतो वह्निमण्डले।
साधारं स्थापयेद् देवि ! पूजयेत् तं यथाविधि ॥ ८९ ॥

शुद्धोदकेन सम्पूर्णं मूलविद्यां ततो जपेत्।
प्रोक्षयेत् तेन कलशं प्रोक्षणीस्थेन वारिणा ॥ ९० ॥

वामतस्तु तथा शङ्खं प्रतिष्ठाप्य विधानतः।
तदुत्तरत एवास्मिन् पाद्यमाचमनीयकम् ॥ ९१ ॥

चक्रोपरि शिवां नत्वा भूतशुद्धिमथाचरेत्।
स्वभावतः सदा शुद्धं पञ्चभूतात्मकं वपुः ॥ ९२ ॥

मनःपूतिसमायुक्तं श्लेष्मविन्मूत्रपिच्छिलम्।
तस्यैव हि विशुद्ध्यर्थं[2] वाय्वग्निसलिलाक्षरैः ॥ ९३ ॥

शोषदाहौ तथा भस्म प्रोत्सादोऽमृतवर्षणम्।
आप्लावनं च कर्तव्यं पूरकुम्भकरेचकैः ॥ ९४ ॥

पञ्चशुद्धिविहीनेन कृतं यदभिचारवत्।
विपरीतफलं दद्यादभक्त्याऽभ्यर्चनं तथा ॥ ९५ ॥

शरीराकारभूतानां भूतानां यद् विशोधनम्।
अव्ययब्रह्मसंस्पर्शाद् भूतशुद्धिरियं शिवे ! ॥ ९६ ॥

अन्तःकरणमध्ये तु ज्योतिरात्मा प्रवर्तते।
लिङ्गं देहं तु तं प्राहुर्योगिनस्तत्त्ववेदिनः ॥ ९७ ॥

तस्य [3]शोधनमात्रेण सर्वशुद्धिः प्रजायते।
तदेव विश्वजननकारणं जन्मकारणम् ॥ ९८ ॥

---

१. पात्रमस्त्रानुभिः–ख०।
२. विशुद्धार्थं–क० ख०।
३. वै शोधनं चैव–क० ख०।

तत्प्रतीतौ भवेन्मुक्तिर्नान्यतो जन्मकोटिभिः ।
प्राणायामत्रयं कृत्वा योनिमुद्रां तथा [1]स्मरेत् ॥ ९९ ॥
विद्याकूटत्रयं देवि ! वह्न्यर्केन्दुमयं धिया ।
पुरत्रयेऽथ सञ्चिन्त्य तेषामैक्यं ततः स्मरेत् ॥१००॥
तस्मिंस्तेजोमये विश्वे सच्चिदानन्दधामनि ।
केवलानुभवानन्दे परं ब्रह्मणि शाश्वते ॥ १०१ ॥
निमज्ज्य बिन्दुगे धाम्नि क्षणं स्थित्वा तु चिन्तयेत् ।
बालार्ककिरणारक्तं तत् तत् तेजोमयं स्मरेत् ॥१०२॥
शुद्धलाक्षामृताम्भोधिमध्ये चातिमनोहरे ।
नवरत्नमये द्वीपे तच्चिन्तामणिमण्डपे ॥१०३॥
रत्नसिंहासनाम्भोजे वह्न्यर्केन्दुस्वरूपिणीम् ।
बालार्ककोटिसङ्काशां तुरीयां परमां कलाम् ॥१०४॥
दक्षिणाधःकरे बाणान् वामाधो धनुरेव च ।
दक्षिणोर्ध्वे श्रृणिं वामे पाशं चापि करैर्धृताम् ॥१०५॥
अरुणामरुणाकल्प[2]रसनाक्षित्रयान्विताम् ।
आत्माभेदेन सञ्चिन्त्य शुद्धज्ञानस्वभाविनम् ॥१०६॥
केवलानुभवानन्दमात्मानं परिचिन्तयेत् ।
ॐ ह्रीं हंसस्ततः सोऽहं स्वाहेति मनुना शिवे ! ॥१०७॥
बालाबीजत्रयस्यान्ते महात्रिपुरसुन्दरि ! ।
आत्मानं रक्ष रक्षेति कुर्याद् रक्षां हृदि स्पृशन् ।
दिग्बन्धः [3]सास्त्रया चैवं कोटिकाभिः समन्ततः ॥१०८॥

॥ इति श्रीगन्धर्वतन्त्रे अष्टमः पटलः ॥ ८ ॥

---

१. स्वरे-ख० ।
२. वसना-क० ।
३. स्वस्त्रिया-क० ख० ।

# नवमः पटलः

ईश्वर उवाच

देव एव यजेद् देवं [1]नादेवो देवमर्चयेत् ।
न्यासं विना जपं प्राहुरासुरं विफलं शिवे ! ॥ १ ॥

न्यासस्तदात्मको भूत्वा देवो भूत्वा तु तं यजेत् ।
प्राणायामैस्तथा ध्यानैर्न्यासैर्देवशरीरता ॥ २ ॥

न्यासविधिं शृणु प्राज्ञे ! करशुद्धिपुरःसरम् ।
मातृकाद्यं समुद्धृत्य द्वितीयं च सबिन्दुकम् ॥ ३ ॥

शान्तान्तकादिसंयुक्तं ऐकारान्तान्तयोजितम् ।
एवमेषा महाविद्या करशुद्धिकरी मता ॥ ४ ॥

गृहीत्वा रक्तपुष्पं च सगन्धं साधकस्ततः ।
अनेनैव तु मन्त्रेण पुष्पं हस्ततलस्थितम् ॥ ५ ॥

सम्मार्ज्य सव्यहस्तेन वामेन पाणिना ततः ।
निर्मञ्छ्य कामबीजेन जिघ्रपेद् ? वाग्भवेन तु ॥ ६ ॥

ऐशान्यां निःक्षिपेदेतच्छेषबीजेन पार्वति ! ।
अङ्गुल्यग्राणि शुद्धानि पुष्पस्य ग्रहणाद् भवेत्[2] ॥ ७ ॥

मर्दनात् करयोः शुद्धिर्निर्मञ्छनात् तु पृष्ठयोः ।
घ्राणाद् देवाश्च तुष्यन्ति तीर्थानां च समागमः ॥ ८ ॥

प्रक्षेपात् सर्वविघ्नानां दूरसंस्थानमेव च ।
दुर्गन्धोत्सृ[3]ष्टसंस्पर्शदूषणं करयोस्तु यत् ॥ ९ ॥

---

१. नादौ वा–ग० ।

२. भवेत्–ग० ।

३. स्वरगन्धात्सिष्टे–ग० ।

अज्ञातरूपं तत् सर्वं नाशयेद् विधिनाऽमुना ।
करशुद्धिं बिधायादौ ऋषिन्यासादिकं ततः ॥ १० ॥

ऋषिश्छन्दो देवतानां विन्यासेन विना यदा ।
जप्यते साधितेऽप्येष न तत्र तत् फलं लभेत् ॥ ११ ॥

ऋषिरस्या महेशानि ! दक्षिणामूर्तिरव्ययः ।
पङ्क्तिच्छन्दस्तथा प्रोक्तं विद्यायाः शृणु पार्वति ! ॥ १२ ॥

देवता परमेशानि ! महात्रिपुरसुन्दरी ।
विनियोगः समाख्यातो भुक्तिमुक्तिप्रसाधने ॥ १३ ॥

शिरसि मुखवृत्ते च हृदये च प्रविन्यसेत् ।
मातृकां शृणु देवेशि ! सर्वपापविनाशिनीम् ॥ १४ ॥

या ब्राह्मीप्रमुखा देव्यो मातरः परिकीर्तिताः ।
तासां मन्त्राणि सर्वाणि व्यञ्जनानि स्वरास्तथा ॥ १५ ॥

चन्द्रबिन्दुसमायुक्ताः सर्वकामफलप्रदाः ।
ऋषिः सन्मोहनः प्रोक्तश्छन्दो गायत्र्यमुच्यते ॥ १६ ॥

देवतेयं समुद्दिष्टा समस्तजननी परा ।
शक्तयस्तु स्वरा देवि बीजं व्यञ्जनसञ्चयः ॥ १७ ॥

विनियोगः समुद्दिष्टः समस्तजनमोहने ।
स्वरेण दीर्घयुक्तेन षडङ्गानि समाचरेत् ॥ १८ ॥

हृदयञ्च शिरो देवि ! शिखां च कवचं ततः ।
नेत्रवक्त्रं[1] न्यसेत्.........नमः ॥ १९ ॥

स्वाहा वषड् वौषडस्त्रं फडन्तं योजयेत् प्रिये ! ।
षडङ्गोऽयं मातृकायाः सर्वपदोत्तरः शिवे ! ॥ २० ॥

---

१. मन्त्रं–क० ख० ।

बालार्ककोटिरुचिरां स्फटिकाक्षमालां
कोदण्डमिक्षुजनितं [1]स्मरपबाणान् ।
विद्यां च हस्तकमलैर्दधतीं त्रिनेत्रां
ध्यायेत् समस्तजननीं नवचन्द्रचूडाम् ॥ २१ ॥

द्व्यष्टपत्त्रा[2]म्बुजे कण्ठे स्वरा[3]न् षोडश चिन्तयेत् ।
हृत्पद्मे द्वादशच्छेदकादीन् द्वादश विन्यसेत् ॥ २२ ॥

दश पात्राम्बुजे नाभौ उकारादीन् न्यसेद् दश ।
षट्पत्रे लिङ्गमध्यस्थे वकारादीन् न्यसेच्च षट् ॥ २३ ॥

आधारे चतुरो वर्णान् नादीन् न्यसेच्चतुर्दले ।
हक्षौ भ्रूमध्यगे पद्मे द्विदले परिचिन्तयेत् ॥ २४ ॥

इत्यन्तर्मातृकां स्मृत्वा बहिर्न्यासं ततः शिवे ।
अकारादिक्षकारान्ता मातृकाः परिकीर्तिताः ॥ २५ ॥

प्रत्येकं कामबीजाद्याः सर्वकामफलप्रदाः ।
चन्द्रबिन्दुसमायुक्ता नमोऽन्ताश्च प्रविन्यसेत् ॥ २६ ॥

ललाटे मुखवृत्ते च नेत्रकर्णेषु पार्वति ! ।
नासागण्डौष्ठदन्तेषु समूर्द्धास्येषु शाङ्करि ! ॥ २७ ॥

पाणिपादयुगस्यान्तःसन्ध्यग्रेषु क्रमाच्छिवे ! ।
पार्श्वद्वये पृष्ठनाभिजठरेषु क्रमान्न्यसेत् ॥ २८ ॥

[4]आदीन् सधातुकान् देवि ! क्रमेणैव ततो न्यसेत् ।
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ॥ २९ ॥

१. स्वर-क० ख० ।
२. पात्रा-क० ख० ।
३. स्मरान्-क० ख० ।
४. यादीन्-ख० ।

प्राणात्मा च जीवात्मा च परमात्मा तथैव च ।
हृदये बाहुमूले च तथा कण्ठप्रदेशके ॥ ३० ॥

[1]स्कन्धयोर्हृदयप्रान्ते पाणिपादयुगे तथा ।
जठराननयोर्देवि ! सर्वाङ्गेषु क्रमान्न्यसेत् ॥ ३१ ॥

ललाटेऽनामिकां मध्यां विन्यसेन्मुखपङ्कजे[2] ।
तर्जनीमध्यमानामावृद्धा एव तु नेत्रयोः ॥ ३२ ॥

अङ्गुष्ठं कर्णयोर्देवि ! कनिष्ठाङ्गुष्ठकौ नसोः ।
मध्यास्तिस्रो गण्डयोश्च मध्यमामोष्ठयोः प्रिये ! ॥ ३३ ॥

अनामां दन्तयोर्देवि ! मध्यमामुत्तमाङ्गके ।
मुखेऽनामां मध्यमां च हस्तपादेऽथ पार्श्वयोः ॥ ३४ ॥

कनिष्ठानामिकामध्यास्तास्तु पृष्ठेऽथ पार्वति ! ।
तास्तु साङ्गुष्ठका नाभौ सर्वाः कुक्षौ प्रविन्यसेत् ॥ ३५ ॥

हृदये च तलं सर्वं बाह्वोः कण्ठप्रदेशके ।
स्कन्धयोर्हृदयप्रान्ते हस्तपादयुगे तथा ॥ ३६ ॥

जठरास्ययुगे देवि ! तलमेव प्रकीर्तितम् ।
एतास्तु मातृकामुद्राः क्रमेण परिकीर्तिताः ॥ ३७ ॥

अज्ञात्वा विन्यसेद् यस्तु न्यासः स्यात् तस्य निष्फलः ।
अनामया वा पुष्पैर्वा मनसा वा न्यसेदुत ॥ ३८ ॥

एवं तु मातृकान्यासं यः कुर्यात् परमेश्वरी ।
सर्वयज्ञेषु पूजासु पूतो योग्यश्च जायते ॥ ३९ ॥

नातः परतरं मन्त्रं विद्यते क्वचिदेव हि ।
ये ये मन्त्रा देवतानामृषीणामथ रक्षसाम् ॥ ४० ॥

---

१. कन्ध—ग० ।
२. वृत्तके—ग० ।

ते सर्वे मातृकामन्त्रे नित्यमेव प्रतिष्ठिताः ।
सर्वमन्त्रमयश्चायं सर्वदेवमयस्तथा ॥ ४१ ॥

चतुर्वर्गप्रदश्चायं तुष्टिपुष्टिप्रदायकः ।
सर्वपीठमयश्चापि मातृकान्यास उच्यते ॥ ४२ ॥

यः कुर्यान्मातृकान्यासं विनैव [1]स्वरपूजनात् ।
तस्माद् बिभेति सततं भूतग्रामश्चतुर्विधः ॥ ४३ ॥

तं द्रष्टुमपि देवाश्च [3]स्पृहयन्ति महौजसः ।
स तु सर्ववशं कुर्यान्न च याति पराभवम् ॥ ४४ ॥

पुटितां सर्वबीजेन समस्तजननीं पराम् ।
पञ्चाशन्मातृकां विद्यां जपेदष्टोत्तरं[4] शतम् ॥ ४५ ॥

वाग्देवतां हृदि ध्यात्वा मूर्ध्नि सर्वाक्षराणि तु ।
द्विधा च मातृकामन्त्रैः सक्रमैर्व्युत्क्रमैरपि ॥ ४६ ॥

मन्त्रयित्वा महेशानि ! प्रभाते यः पिबेज्जलम् ।
स वाग्मी पण्डितो धीमान् जायते [5]प्रवरः कविः ॥ ४७ ॥

चन्द्रबिन्दुसमायुक्तान् स्वरान् पूर्वं पठेद् बुधः ।
व्यञ्जनानि तु सर्वाणि केवलानि पठेत् प्रिये ! ॥ ४८ ॥

जलं हस्ततले गृह्य पठित्वाऽक्षरसंहतिम् ।
अभिमन्त्र्य च तत् तोयं प्रथमं पूर्वकैः पिबेत् ॥ ४९ ॥

कुम्भकेन द्वितीयं तु तृतीयं रेचकेन तु ।
एवं सकृत् त्रिवारं तु पीत्वा तोयं विचक्षणः ॥ ५० ॥

---

१. वेद–ग० ।
२. सुर–ग० ।
३. स्पृशयन्ति–ख० ।
४. अष्टोत्तरः–ख० ।
५. च–ग० ।

दृढाङ्गः पण्डितो भूयात् पुत्रपौत्रसमन्वितः ।
त्रिसन्ध्यमथ पीत्वैव मातृकामन्त्रमन्त्रितम् ॥ ५१ ॥
[1]तोयं कवित्वमाप्नोति सर्वान् कामांस्तथैव च ।
सततं कुरुते यस्तु मातृकामन्त्रमन्त्रितम् ॥ ५२ ॥
तोयपानं[2] महादेवि ! पूरकुम्भकरेचकैः ।
स सर्वकामान् सम्प्राप्य पुत्रपौत्रसमृद्धिमान् ॥ ५३ ॥
भूत्वा महाकविर्लोके बलवान् सत्यविक्रमः ।
सर्वत्र दुर्लभो भूत्वा चान्ते मोक्षमवाप्नुयात् ॥ ५४ ॥
राजानमथवा राजपुत्रं भार्यां च वा प्रिये ! ।
वशीकरोति नचिरान्मातृकामन्त्रपालकः ॥ ५५ ॥

॥ इति गन्धर्वतन्त्रे नवमः पटलः ॥ ९ ॥



---

१. तोयाः—ख० ।
२. दानं—ख० ।

# दशमः पटलः

देवी उवाच

षोढाख्यां मातृकां देव ! कथयस्व वृषध्वज ! ॥

ईश्वर उवाच

गणेशैः प्रथमो न्यासो द्वितीयस्तु ग्रहैर्मतः ।
नक्षत्रैश्च तृतीयः स्याद् योगिनीभिश्चतुर्थकः ॥ १ ॥

राशिभिः पञ्चमो न्यासः षष्ठः [1]पीठैर्निगद्यते ।
षोढा[2] न्यासस्त्वयं प्रोक्तः सर्वकामफलप्रदः ॥ २ ॥

देवी उवाच

फलं चास्य प्रयोगश्च विशदीकुरु तत्त्वतः ॥

ईश्वर उवाच

नारायणोऽस्य ऋषिः प्रोक्तश्छन्दस्त्रिष्टुबुदाहृतम्[3] ।
शिवशक्त्यात्मको[4] वर्णं ऋषिर्देवता च सदाशिवः ॥ ३ ॥

हंसः शक्तिः पराबीजं श्रीबीजं चैव कीलकम् ।
पुरुषार्थप्रसाध्ये च विनियोगः प्रकीर्तितः ॥ ४ ॥

मूर्ध्नि सञ्चिन्तयेद् [5]देवि ! श्रीगुरुं शिवरूपिणम् ।
रमाबीजं परं पश्चात् हंसात् स्वराद्यमीरितम् ॥ ५ ॥

---

१. पीठे–ख० ।

२. षोढन्यासः–ख० ।

३. उदाहृतः–ग० ।

४. शिवशक्त्यात्मवर्णऋषी–ख० ।

५. देवी–ग० ।

विघ्नेश्वराय वै प्रोच्य प्रिये ! नमस्ततः परम् ।
विघ्नराजादिकानेवं[1] शक्तियुक्तान् तथैव च ॥ ६ ॥

विन्यसेन्मातृकास्थाने मातृकैकान्वितं शिवे ।
विघ्नराजाय देवेशि क्रियै नमस्ततः परम् ॥ ७ ॥

विनायकाय तुष्ट्यै च शान्त्यै शिवोत्तमाय च ।
विघ्नहर्त्रे[2] तथा पुष्ट्यै नम इति प्रविन्यसेत् ॥ ८ ॥

विघ्नहर्त्रे सरस्वत्यै नम इति प्रविन्यसेत् ।
विनायकाय मेधायै पूर्ववदथ विन्यसेत् ॥ ९ ॥

एकदन्ताय कान्त्यै च द्विदन्ताय च यामिनीम् ।
गजवक्त्राय मोहिन्यै निरञ्जनजटे ततः ॥ १० ॥

कपर्दिने च तीव्रायै ज्वालिनी दीर्घवक्त्रकः ।
शङ्कुकर्णाय नन्दायै स्वरसा च वृषध्वजः ॥ ११ ॥

गणनाथश्च कामिन्या गजेन्द्रश्च शुभा तथा ।
जयिनी शूर्पकर्णश्च सत्यया च त्रिलोचनः ॥ १२ ॥

लम्बोदराय विघ्नेश्यै महानन्दस्वरूपिणी ।
कामदया चतुर्मूर्तिः सदाशिवस्ततः परम् ॥ १३ ॥

मदविह्वलया युक्त आमोदो विकटायुतः ।
दुर्मुखाय च [3]घूर्णायै सुमुखो भूतिसंयुतः ॥ १४ ॥

प्रमदाय तथा भूम्यै एकपादो मतिस्तथा ।
द्विजिह्वो रभया युक्तः शूरसेनश्च मानुषी ॥ १५ ॥

मकरध्वजया युक्तो वीरश्च परमेश्वरि ! ।
षण्मुखाय विकर्णायै वरदो भृङ्गटीयुतः ॥ १६ ॥

---

१. घूर्णाय–ग० ।
२. मेवं–ख० ।
३. कर्त्रे–ख० ।

वामदेवाय लज्जायै दीर्घघोणायुतस्ततः ।
वज्रतुण्डो द्विरण्डश्च धनुर्धरायुतः प्रिये ! ॥ १७ ॥

सेनान्यै चैव यामिन्यै ग्रामणी रात्रिसंयुतः ।
मत्तश्चन्द्रिकया युक्तो विमत्ताय शशिप्रभा ॥ १८ ॥

तथैव परमेशानि ! लोलया मत्तवाहनः ।
जटिले चपलाक्षिण्यै मुण्डी ऋद्धियुतस्तथा ॥ १९ ॥

खड्गी दुर्भगया युक्तो वरेण्यः शुभगायुतः ।
न्यस्तव्यः परमेशानि ! शिवया वृषकेतनः ॥ २० ॥

भक्तप्रियाय दुर्गायै मेघनादाय कामिनी ।
कालकुजासमायुक्तो गणेश्वरः प्रकीर्तितः ॥ २१ ॥

गणेशो विघ्नहारिण्या न्यस्तव्यः साधकोत्तमैः ।
सूर्यमुख्यान्महादेवि ! न्यसेत् कामदुघानथ ॥ २२ ॥

स्वरान् पूर्वं समुद्धृत्य चन्द्रबिन्दुसमन्वितान् ।
सूर्याय नम उच्चार्य हृदये च प्रविन्यसेत् ॥ २३ ॥

भ्रुवोर्मध्ये तथा सोमं यवर्गेण प्रविन्यसेत् ।
भूपुत्रं लोचनद्वन्द्वे कवर्गेण तथैव च ॥ २४ ॥

बुधं च हृदये देवि चवर्गेण प्रविन्यसेत् ।
बृहस्पतिं तथा कण्ठे टवर्गेण प्रविन्यसेत् ॥ २५ ॥

[1]भार्गवं तु गले देशे तवर्गेण तथा प्रिये ।
पवर्गेण शनिं नाभौ राहुं गुदे शवर्गकैः ॥ २६ ॥

लक्षाभ्यां पादयोः केतुं न्यसेदेवं विधानतः ।
स्वराद्यश्च द्वितीयश्च अश्विन्यै नम इत्यपि ॥ २७ ॥

---

१. भार्गवस्तु—ख० ।

ललाटे च प्रविन्यस्य तथान्यानपि विन्यसेत् ।
इं युतां भरणीं देवि ! दक्षनेत्रे प्रविन्यसेत् ॥ २८ ॥
ईं उँ ऊँ कृत्तिकां चैव विन्यसेत् वामनेत्रके ।
ऋं ॠं लृं ॡं युतान् देवि ! रोहिणीं दक्षकर्णके ॥ २९ ॥
एं युतां मृगशीर्षाञ्च वामकर्णे प्रविन्यसेत् ।
ऐकारेण तथार्द्राञ्च दक्षनासापुटे न्यसेत् ॥ ३० ॥
ओं औं पुनर्वसुं चैव वामनासापुटे न्यसेत् ।
कं युताञ्च न्यसेत् [1]पुष्यां कण्ठदेशे च पार्वति ! ॥ ३१ ॥
खगाभ्याञ्च तथाश्लेषां दक्षस्कन्धे प्रविन्यसेत् ।
घङाभ्याञ्च मघां देवि ! वामस्कन्धे प्रविन्यसेत् ॥ ३२ ॥
चं पूर्वफल्गुनीं चैव दक्षकूर्परके न्यसेत् ।
वामकूर्परके देवि ! छं जं उत्तरफल्गुनीम् ॥ ३३ ॥
दक्षिणे मणिबन्धे तु झं ञं हस्ताञ्च विन्यसेत् ।
मणिबन्धे तथा वामे टं ठं चित्रां प्रविन्यसेत् ॥ ३४ ॥
डङ्कारेण तथा स्वातीं दक्षहस्ततले न्यसेत् ।
ढणाभ्याञ्च विशाखां वै वामहस्ततले ततः ॥ ३५ ॥
तथाभ्यामनुराधाञ्च न्यसेन्नाभौ समाहितः ।
दं धं ज्येष्ठाञ्च कटौ दक्षे त्रिभिर्मूलाञ्च वामतः ॥ ३६ ॥
पूर्वाषाढां बकारेण दक्षोरौ विन्यसेत् ततः ।
भकारेणोत्तराषाढां वामोरौ तदनन्तरम् ॥ ३७ ॥
दक्षजानुप्रदेशे च मं श्रवणाञ्च विन्यसेत् ।
यं रं युतां धनिष्ठाञ्च वामे जानुनि विन्यसेत् ॥ ३८ ॥
शतभिषां लकारेण दक्षजङ्घाप्रदेशके ।
वंशं वर्णस्थितां वामे पूर्वभाद्रपदां न्यसेत् ॥ ३९ ॥

१. पुष्यं–ग० ।

तथैवोत्तरभाद्रञ्च षसहैर्दक्षपादतः ।
लक्षाभ्यां [1]बिन्दुमद् द्वाभ्यां रेवतीं विन्यसेत् ततः ॥ ४० ॥
रक्ताक्षीञ्च श्वेतवर्णां पशुभीतिहरां शुभाम् ।
खड्गञ्च चषकञ्चैव शूलखट्वाङ्गमेव च ॥ ४१ ॥
अनुग्रामुग्रदंष्ट्राञ्च एकास्यां रिपुनाशिनीम् ।
पायसान्नप्रसक्ताञ्च स्वरैः कल्पितविग्रहाम् ॥ ४२ ॥
डाकिनीं भावयेदे[2]वं सर्वकामप्रपूरणीम् ।
स्वरान् पूर्वं समुद्धृत्य चन्द्रबिन्दुसमन्वितान् ॥ ४३ ॥
[3]ठान्तद्वयं ततः पश्चात् पाशतूरीयभेदितम् ।
नादबिन्दुकलायुक्तं बीजद्वयमुदीरितम् ॥ ४४ ॥
ठान्तं भान्तं महीबीजं वारुणं वह्निवायवौ ।
वामकर्णस्ततो देवि ! नादबिन्दुकलायुतः ॥ ४५ ॥
डाकिन्यै नम इत्यन्ते सम्बोध्य डाकिनीं ततः ।
दुग्धा तु गत इत्युक्त्वा चतुःषष्टिपदं ततः ॥ ४६ ॥
लक्षकोटिपदस्यान्ते योगिनी स्वामिनीति च ।
सर्वसत्त्ववशं ब्रूयात् कविशब्दपदं ततः ॥ ४७ ॥
आज्ञां मे देहि तत् पश्चान्नम विक्रिपदद्वयम् ।
विशुद्धौ विन्यसेद् देवि ! राकिणीं चिन्तयेत् ततः ॥ ४८ ॥
हृत्पुण्डरीकमध्यस्थां दंष्ट्राभीममुखीं तथा ।
नवीननीरदश्यामां पीनोन्नतपयोधराम् ॥ ४९ ॥
शूलं डमरुकं चैव वज्रपद्मे च धारिणीम् ।
शुक्लाम्वासक्तचित्ताञ्च कठवर्णात्मविग्रहाम् ॥ ५० ॥

---

१. बिन्दुसन्धाभ्याम्–ग० ।
२. देवीम्–ख० ।
३. 'ठान्तद्वयम्' इत्यारभ्य 'शाकिनीं ततः' (१०-६५) इत्यन्तं नास्ति–ग० ।

कठवर्णांस्ततो रेफपूर्ववत् स्वरभेदिते ।
चान्तं हित्वाऽग्निबीजञ्च पूर्ववत् तदनन्तरम् ॥ ५१ ॥

राकिण्यै नम आभाष्य सम्बोध्य च तथा भवेत् ।
असृग्धातुगते पश्चात् द्वात्रिंशल्लक्षकोटि च ॥ ५२ ॥

योगिनीं स्वामिनीप्रान्ते पूर्ववत् तदनन्तरम् ।
रक्तवर्णां त्रिनेत्रां च देवदेवेशसंयुताम् ॥ ५३ ॥

दंष्ट्रीमुग्ररूपाभां च रुद्रं शक्तिं वराभयौ ।
दधतीं चिन्तयेद् देवीं गुडभक्तोत्सुकां पराम् ॥ ५४ ॥

एवं ध्यात्वा महेशानीं डफवर्णात्मविग्रहाम् ।
डफवर्णांस्ततो देवि ! भूबीजद्वितयं तथा ॥ ५५ ॥

वह्निं हित्वा महाबीजं पूर्ववदपरं[1] तथा ।
शाकिन्यै नम उच्चार्य सम्बोध्य च तथा व्रजेत् ॥ ५६ ॥

मांसधातुगते पश्चात् षोडशलक्षकोटितः ।
पूर्ववदपरं सर्वं नाभिपद्मे प्रविन्यसेत् ॥ ५७ ॥

स्वाधिष्ठानाख्यपद्मे च काकिनीं परिचिन्तयेत् ।
पीतवर्णां महामत्तां गजकुम्भोपमस्तनीम् ॥ ५८ ॥

दध्यन्नासक्तचित्तां च सुरप्रवरवन्दिताम् ।
शूलं डमरुकं चैव पाशं चाभयमेव च ॥ ५९ ॥

वहन्तीं परमेशानीं वादिलान्तात्मविग्रहाम् ।
वादिलान्तांस्तथा कां कीं कमलवरयूं ततः ॥ ६० ॥

काकिन्यै नम इत्यन्ते सम्बोध्य चैव काकिनीम् ।
मेदोधातुगते पश्चात् तथाऽष्टदलकोटि च ॥ ६१ ॥

---

१. अपरं तथा–क० ।

भोगिनि स्वामिनि प्रोच्य पूर्ववदपरं तथा ।
पञ्चवक्त्रां त्रिनेत्रां च वह्निभानुस्वरूपिणीम् ॥ ६२ ॥

चापं बाणं तथा पाशं सृणिं च पुस्तकं तथा ।
ज्ञानमुद्रां च हस्ताब्जैर्दधतीं परमेश्वरीम् ॥ ६३ ॥

मुद्गान्नप्रीतिसंयुक्तां मूलाधारे विचिन्तयेत् ।
वादिधान्तस्तथा शां शीं शमलवरयूं तथा ॥ ६४ ॥

शाकिन्यै नम इत्यन्ते सम्बोध्य शाकिनीं ततः ।
अस्थिधातुगते चैव चतुर्लक्षेति कोटि च ॥ ६५ ॥

योगिनि स्वामिनि प्राज्ञे वरवरदपदं तथा ।
बिन्दुस्थां शुक्लवर्णां च हक्षवर्णस्वरूपिणीम् ॥ ६६ ॥

डमरुं चाक्षसूत्रं च कपालं खड्गमेव च ।
पुस्तकं ज्ञानमुद्रां च दधतीं बाहुभिः सदा ॥ ६७ ॥

लोचनत्रयसंयुक्तां षड्वक्त्रां सर्वमोहिनीम् ।
हरिद्रान्नप्रसक्तां च मधुमदमुदान्विताम् ॥ ६८ ॥

देवेन्द्रवन्दितां देवीं भावयेद् काकिनीं पराम् ।
हं क्षं हां हीं च देवेशि ! हमलवरयूं तथा ॥ ६९ ॥

हाकिन्यै नम उच्चार्य सम्बोध्य चैव लाकिनीम् ।
मज्जाधातुगते पश्चाद् द्विलक्षकोटिशब्दतः ॥ ७० ॥

शेषं पूर्ववदुद्धृत्य भ्रुवोर्मध्ये प्रविन्यसेत् ।
अकारादिक्षकारान्तां मातृकां सर्वमुच्चरेत् ॥ ७१ ॥

यां यां तु परमेशानि ! यमलवरयूं ततः ।
याकिन्यै नम इत्यन्ते सम्बोध्यैव तु याकिनीम् ॥ ७२ ॥

---

१. वरपर-ग० ।

शुक्रधातुगते पश्चाद् दशकोटिपदं ततः ।
पूर्ववच्च प्रविन्यस्य राशिन्यासमतः परम् ॥ ७३ ॥

वेदार्णैर्दक्षगुल्फेऽथ मेषं विन्यस्य पार्वति ! ।
दक्षजानौ वृषं त्र्यर्णैर्वृषणे मिथुनं त्रिभिः ॥ ७४ ॥

द्वाभ्यां कर्कटकं कुक्षौ द्वाभ्यां स्कन्धेऽथ सिंहकम् ।
अनुस्वारविसर्गाभ्यां शवर्गेण च कन्यकाम् ॥ ७५ ॥

दक्षिणे च शिरोभागे विन्यसेद् वीरवन्दिते ।
तथा वामशिरोभागे कवर्गेण तुलां न्यसेत् ॥ ७६ ॥

चवर्गेण तथा स्कन्धे वृश्चिकं विन्यसेत् ततः ।
टवर्गेण तथा कुक्षौ धन्विनं विन्यसेत् ततः ॥ ७७ ॥

मकरं तु तवर्गेण वृषणे दक्षिणे न्यसेत् ।
पवर्गेण तथा कुम्भं वामजानुनि विन्यसेत् ॥ ७८ ॥

यवर्गेण क्षकारेण मीनं गुल्फे तु वामके ।
चतुर्थीनतिसंयुक्तं स्थानेष्वेवं क्रमान्न्यसेत् ॥ ७९ ॥

अथ पीठानि विधिना यथास्थाने प्रविन्यसेत् ।
परापूर्वं च सर्वेषां मातृकां च पृथक् पृथक् ॥ ८० ॥

चतुर्थीनतियुक्तानि मातृकावन्न्यसेत् क्रमात् ।
कामरूपं महापीठं वाराणसीं ततः[1] परम् ॥ ८१ ॥

नेपालं[2] च महापीठं पौण्ड्रवर्द्धनमेव च ।
पुरस्थिरं[3] महादेवि ! [4]चरस्थिरमतः परम् ॥ ८२ ॥

१. अतः—ग० ।
२. मेदानश्च—ख० ।
३. पुरस्थितम्—ग० ।
४. चरस्थितम्—ग० ।

पूर्णशैलं महापीठमर्बुदं च ततः परम् ।
काश्मीरं च तथा पीठं कान्यकुब्जमथो भवेत् ॥ ८३ ॥

आम्रातकेश्वरं पीठमेकाग्रं च तथा शिवे ।
त्रिस्रोतः पीठमुद्दिष्टं कामकोटिमतः[1] परम् ॥ ८४ ॥

कैलाशभूतनगरं केदारं पीठमुत्तमम् ।
श्रीपीठं च तथोङ्कारं जालन्धरमतः परम् ॥ ८५ ॥

मानवं च कुलान्तं च [2]वेदमातृकमेव च ।
गोकर्णं च ततो देवि ! मारुतेश्वरमेव च ॥ ८६ ॥

अट्टहासं च विरजं राजगृहमतः परम् ।
पीठं कोल्लगिरिं चैव एलापुरमतः प्रिये ॥ ८७ ॥

कालेश्वरं महापीठं प्रणवं च जयन्तिकाम् ।
पीठमुज्जयिनीं चैव क्षीरिकापीठमेव च ॥ ८८ ॥

हस्तिनापुरकं पीठं पीठमुड्डीशमेव च ।
प्रयागं चैव षष्ठीशं मायापुरजलेश्वरौ ॥ ८९ ॥

मलयं च महापीठं श्रीशैलमथवाऽपि च ।
मेरुगिरिं महेन्द्रं च वामनं चापि विन्यसेत् ॥ ९० ॥

हिरण्यपुरकं पीठं महालक्ष्मीपुरं[3] च वै ।
उड्डीयानं महापीठं छायापुरमतः परम् ॥ ९१ ॥

षोढान्यासस्त्वयं प्रोक्तः सर्वपापहरः सदा ।
षोढान्यासविहीनो यः प्रणमेद् देवि ! सुन्दरीम् ॥ ९२ ॥

---

१. कोट–ख० ।

२. देव–ग० ।

३. पुरमेव च–ग० ।

सोऽचिरान्मृत्युमाप्नोति नरकं च प्रपद्यते ।
एवं न्यस्तशरीरस्तु भवेद् गङ्गाधरः[1] स्वयम्[2] ॥ ९३ ॥
मन्त्री न चाऽत्र सन्देहो निग्रहानुग्रहक्षमः ।
न तस्य पूज्यो लोकेऽस्मिन् पितृमातृमुखो नरः ॥ ९४ ॥
स्वयं च साधकश्रेष्ठो यं कञ्चन च विन्दति ।
[3]स मर्त्यो मृत्युमाप्नोति नात्र कार्या विचारणा ॥ ९५ ॥
नमस्कारं न कुर्वीत ज्येष्ठस्यापि कदाचन ।
गुरोरपि न पद्येत म्रियते नात्र संशयः ॥ ९६ ॥
तस्मात् सर्वप्रयत्नेन नमस्कारं विवर्जयेत् ।
कामं क्रोधं तथा लोभं मायाऽहङ्कारमेव च ॥ ९७ ॥
सङ्कल्पं भोजनालापं न कुर्यात् केनचित् सह ।
भोक्तव्यं योषिता सार्द्धं यत् किञ्चित् तन्मयैव हि ॥ ९८ ॥
विन्यसेद् देवि ! युक्तात्मा त्रिकालं च दिवा निशि ।
षण्मासाभ्यास[4]योगेन सामर्थ्यं तद् वदाम्यहम् ॥ ९९ ॥
यत्रायं निवसेद् देवि ! षोढान्यासी च साधकः ।
[5]दिव्यं क्षेत्रं भवेत् तत्र समन्ताद् दशयोजनम् ॥१००॥
देवाः सर्वे नमस्यन्ति तं नमामि न संशयः ।
कृत्वा न्यासमिमं देवि ! यत्र गच्छति साधकः ॥१०१॥
तत्र यद्विषये चैव षण्मासं[6] पुरुषैः सह ।
द्यावान्तरिक्ष-भू-शैल-जलाऽरण्य-निवासिनः ॥१०२॥

---

१. बन्दीश्वरः–ग० ।
२. स्वरम्–ख० ।
३. समर्थो–ख० ।
४. यथा साभ्यास–ख० ।
५. 'दिव्यं क्षेत्रम्' इत्यारभ्य 'साधकः' इत्येतदन्तं नास्ति–ग० ।
६. सन्मानं–ग० ।

भूतप्रेतपिशाचाश्च यक्षकूष्माण्डराक्षसाः ।
पश्यन्ति पावकारूढं ये चान्ये हिंसका जनाः ॥१०३॥

शत्रुसंहतिसङ्कीर्णे संग्रामेऽथापदेषु च ।
न भयं विद्यते तस्य परत्र शिवतां व्रजेत् ॥१०४॥

ये केचित् पापसङ्घाताः सप्तजन्मान्तरोद्भवाः ।
नश्यन्ति न्यासमात्रेण भास्करेण तमो यथा ॥१०५॥

सतताभ्यासयोगेन षण्मासेन च मानवः ।
दह्यन्ति सर्वपापानि ब्रह्महत्यादिकानि च ॥
किञ्चातिबहुनोक्तेन मम तुल्यो भवेद् ध्रुवम् ॥१०६॥

॥ इति गन्धर्वतन्त्रे दशमः पटलः ॥ १० ॥



# एकादशः पटलः

ईश्वर उवाच

करशुद्धिमृषिन्यासमासनं च ततः परम् ।
कराङ्गयोः षडङ्गानि वशिन्याद्यमतः परम् ॥ १ ॥
नरयोनिं चतुर्व्यूहतत्त्वन्यासादिकं तथा ।
मूलवर्णादिविन्यासं [1]सम्मोहनाख्यमेव च ॥ २ ॥
एतदेव हि नित्यं स्यात् काम्यं चान्यत् प्रकीर्तितम् ।
करशुद्धिकरी पूर्वं त्रिपुरेति पदं ततः ॥ ३ ॥
अमृतार्णवशब्दोपर्यासनाय नमो मनुः ।
पादयोर्विन्यसेत् पश्चाद् बालान्ते त्रिपुरेश्वरी ॥ ४ ॥
पीताम्बुजासनायान्ते नमो जानुनि विन्यसेत् ।
ह्रीं क्लीं सौः त्रिपुरेत्युक्त्वा सुन्दरीति पदं ततः ॥ ५ ॥
ङेन्तमात्मासनायान्ते नम उच्चार्य विन्यसेत् ।
कटिद्वये प्रविन्यस्य शिवं सोमयुतं कुरु ॥ ६ ॥
आदिमध्यं तथाऽन्तं च सभार्याशिवसंयुतम् ।
त्रिपुरवासिनीत्युक्त्वा चक्रासनाय हृत् ततः ॥ ७ ॥
एतस्या एव विद्यायास्त्रिपुरश्रीपदं ततः ।
सर्वमन्त्रासनायान्ते नमो गुह्ये प्रविन्यसेत् ॥ ८ ॥
परा च कामबीजं च वारुणं त्विन्द्रसंयुतम् ।
योनियुक्तं सबिन्दुं च त्रिपुरमालिनीं ततः ॥ ९ ॥
साध्यासनाय मूले च नम इति प्रविन्यसेत् ।
मायाबीजं रमाबीजं कुमार्याश्च तृतीयकम् ॥ १० ॥

---

१. सन्मोहना—ख॰ ।

तथा त्रिपुरसिद्धान्ते त्रिपुरसिद्धासनं [1]ततः ।
नाभिदेशे प्रविन्यस्य हृदये च [2]प्रविन्यसेत् ॥ ११ ॥

शिवचन्द्रौ वह्निसंस्थौ वाग्भवं तदनन्तरम् ।
कामबीजं कुमार्यास्तु शिवचन्द्रान्वितं कुरु ॥ १२ ॥

पृथ्वीबीजात् ततो वह्निशक्तिबीजस्ततः परम् ।
शिववह्नी नियोज्यैव हित्वा सर्गं तु बैन्दवम् ॥ १३ ॥

संयोज्य परमेशानि ! त्रिपुराम्बापदं ततः ।
पर्णेन[3] शक्तिपीठाय नमो हृदि प्रविन्यसेत् ॥ १४ ॥

वशिन्या[4] शेषबीजान्ते महात्रिपुरभैरव ! ।
सदाशिवमहाप्रेतपद्मासनाय चालिखेत् ॥ १५ ॥

नम इत्यजबन्धे तु विन्यसेत् साधकोत्तमः ।
वह्निर्वरुणशक्रं च षष्ठस्वरविभूषितम् ॥ १६ ॥

नादबिन्दुकलायुक्तं वशिनीति पदं ततः ।
वाग्देवता चतुर्थ्यन्ता[5] नमः स्वरैः प्रविन्यसेत् ॥ १७ ॥

मादनं शक्रमारूढं महामाया ततः परम् ।
इयं कामेश्वरी ज्ञेया कवर्गेण ललाटके ॥ १८ ॥

धान्तं[6] वरुणमिन्द्रं च चतुर्थस्वरबिन्दुकम् ।
एषैव मोदिनी देवी भ्रुवोर्मध्ये चवर्गकैः ॥ १९ ॥

---

१. नमः–ग० ।
२. ततो–ग० ।
३. पर्वणः–ख० ।
४. वदन्या–ख० ।
५. चतुर्थ्यन्त्य–ख० ।
६. वान्तम्–ख० ।

वायुं पुरन्दरं देवि ! षष्ठस्वरविभूषितम् ।
नादबिन्दुकलायुक्तं विमलेयं समीरिता ॥ २० ॥

न्यस्तव्या कण्ठदेशे तु टवर्गेणैव पार्वति ! ।
छान्तं भान्तं च ज्वलनं तुरीयस्वरबिन्दुकम् ॥ २१ ॥

अरुणेयं तु वाग्देवी तवर्गेण हृदि स्मृता ।
जयिनी च ततो देवि ! नकुलिः सोमशक्रकम् ॥ २२ ॥

वरुणं वायुबीजं च षष्ठस्वरविभूषितम् ।
नाभिदेशे समाख्याता पवर्गेण वरानने ! ॥ २३ ॥

जान्तं भान्तं ततो रेफं वायुबीजसमन्वितम् ।
षष्ठस्वरसमायुक्तं नादबिन्दुकलायुतम् ॥ २४ ॥

सर्वेश्वरी यवर्गेण स्वाधिष्ठानाख्यपङ्कजे ।
संवर्तकं महेशानि ! कालबीजोपरि स्थितम् ॥ २५ ॥

वह्निबीजं ततो माया नादबिन्दुकलान्विता ।
मूलाधारे शवर्गेण [1]कौलिनी परिकीर्त्तिता ॥ २६ ॥

एता वाग्देवता देवि ! वशिनीवत् प्रविन्यसेत् ।
मूलविद्या द्विरावृत्त्या सर्वाङ्गुलितलेषु च ॥ २७ ॥

ङेन्तेषु परमेशानि ! न्यसेदङ्गानि षट् क्रमात् ।
नमः स्वाहा वषट् वौषट् हुँ फडिति षडङ्गकम् ॥ २८ ॥

करयोरथ विन्यस्य षडङ्गेषु तथा न्यसेत् ।
नमोऽन्तं हृदये ङेन्तं स्वाहान्तं च तथा शिवः ॥ २९ ॥

शिखा वषट् चतुर्थ्यन्ता हुँ ङेन्तं कवचं ततः ।
नेत्रत्रयं च वौषट् च अस्त्रं फडन्तमीश्वरि ! ॥ ३० ॥

---

१. कोलिनी-ख० ।

हृदयं मध्यमाऽनामातर्जनीभिः स्मृतः शिवः ।
मध्यमातर्जनीभ्यां स्यादङ्गुष्ठेन शिखा प्रिये ! ॥ ३१ ॥

दशभिः कवचं प्रोक्तं तिसृभिर्नेत्रमीरितम् ।
तथैवोक्ताङ्गुलीभ्यां च सशब्दमस्त्रमीरितम् ॥ ३२ ॥

पूजा तपोऽर्चना होमः सिद्धमन्त्रकृता अपि ।
अङ्गविन्यासविधुरा न दास्यन्ति फलान्यमी ॥ ३३ ॥

वशिनीप्रमुखान् देवि ! विन्यसेत् तदनन्तरम् ।
मूलकूटत्रयेणैवं स्थानेष्वेषु क्रमान्न्यसेत् ॥ ३४ ॥

कर्णयोश्चिबुके चैव शङ्खयोर्वदने पुनः ।
नेत्रयोर्नसि विन्यस्य अंशयोर्जठरे ततः ॥ ३५ ॥

पुनः कूर्परयोः कुक्षौ जानुनोर्लिङ्गमूर्द्धनि ।
पादयोर्गुह्यदेशे च पार्श्वयोर्हृदयाम्बुजे ॥ ३६ ॥

स्तनयोः कण्ठदेशे च न्यसेदेवं विधानतः ।
चतुर्व्यूहं ततो देवि ! न्यसेत् पीठसमन्वितम् ॥ ३७ ॥

मूलवाग्भवमुच्चार्य अग्निचक्रे पदं ततः ।
कामगिर्यालये पश्चान्मित्रीशपदमुद्धरेत् ॥ ३८ ॥

नाथात्मके पदं पश्चात् कामेश्वरी पदं ततः ।
रुद्रात्मशक्तिशब्दात् श्रीपादुकायै नमो न्यसेत् ॥ ३९ ॥

आधारे परमेशानि ! हृदये च ततः परम् ।
मूलद्वितयमुच्चार्य सूर्यचक्रे पदं ततः ॥ ४० ॥

जालन्धरपदात् पीठे षष्ठीशनाथशब्दतः ।
आत्मके पदमाभाष्य वज्रेश्वरीपदं ततः ॥ ४१ ॥

विष्ण्वात्मशक्तिशब्दान्ते पूर्ववच्च तदीरितम् ।
शक्तिकूटं समुच्चार्य सोमचक्रे पदं ततः ॥ ४२ ॥

पूर्णगिरिपदान्ते च पीठे [1]पदमतः परम् ।
उड्डीशपरतो देवि ! नाथात्मके पदं ततः ॥ ४३ ॥

तदन्ते योजयेद् देवि ! भगपूर्वां च [2]मालिनीम् ।
ब्रह्मात्मशक्तिशब्दान्ते पूर्ववद् द्विदले न्यसेत् ॥ ४४ ॥

तूर्यबीजमथोच्चार्य ब्रह्मचक्रे पदात् ततः ।
तथैवोड्यानपीठे तु [3]चर्यानाथात्मके पदम् ॥ ४५ ॥

तदन्ते परमेशानि ! महात्रिपुरसुन्दरी ।
परं ब्रह्मात्मशक्त्यन्ते पूर्ववद् ब्रह्मरन्ध्रके ॥ ४६ ॥

विन्यस्यैवं महेशानि ! तत्त्वन्यासं समाचरेत् ।
मूलादिब्रह्मरन्ध्रान्तं मूलान्तं पुनरेव हि ॥ ४७ ॥

मूलवाग्भवमुच्चार्य आत्मतत्त्वपदं ततः ।
[4]व्यापिकायै चतुर्थ्यन्ता महात्रिपुरसुन्दरी ॥ ४८ ॥

नम इति प्रविन्यस्य कामराजमतः परम् ।
विद्यातत्त्वपदात् पूर्वं पूर्ववद्धृदयावधि ॥ ४९ ॥

न्यसेत् [5]तार्तीयबीजान्ते शिवतत्त्वस्वरूपिणीम् ।
मूलादिब्रह्मरन्ध्रान्तं तदादिभ्रूलतावधि ॥ ५० ॥

ततो न्यसेन्महादेवि ! विद्याकूटत्रयं पृथक् ।
करयोर्मूलमध्याग्रमूलहृद्दृहृद्युगान्तरे ॥ ५१ ॥

मूलविद्यात्रयावृत्त्या स्थानेष्वेषु क्रमान्न्यसेत् ।
ब्रह्मरन्ध्रे तुरीयं च तेनैव व्यापकं न्यसेत् ॥ ५२ ॥

---

१. पत्र-ख० ।
२. मालिनी-ख० ।
३. वर्या-ख० ।
४. स्वापिकायै-ख० ।
५. त्वात्मीय-ख० ।

ब्रह्मरन्ध्रे तथाधारे हृदि नेत्रत्रये तथा ।
कर्णयोर्मुखवृत्ते च भुजयोः पृष्ठदेशके ॥ ५३ ॥
जानुद्वये तथा नाभौ मूलवर्णान् प्रविन्यसेत् ।
स्वयं मन्त्रतनुर्भूत्वा देवीं मन्त्रमयीं यजेत् ॥ ५४ ॥
त्रैलोक्यमरुणं ध्यायन् श्रीविद्यां मनसि स्मरेत् ।
योनिमुद्रां महेशानि ! ब्रह्मरन्ध्रे प्रविन्यसेत् ॥ ५५ ॥
ललाटे च प्रविन्यस्य भ्रुवोर्मध्ये च विन्यसेत् ।
मुखे कण्ठप्रदेशे तु हृदये तामनुक्रमात् ॥
न्यासः सम्मोहनाख्योऽहं त्रैलोक्यमोहनक्षमः ॥ ५६ ॥

देवी उवाच

अन्तर्योगविधिं ब्रूहि बहिर्योगविधिं तथा ॥

ईश्वर उवाच

शृणु देवि ! प्रवक्ष्यामि यजनं चान्तरं महत् ।
मनोजीवात्मनः शुद्धिः प्राणायामेन जायते ॥ ५७ ॥
अन्तर्गतं यच्च मलं तच्च शुद्धं प्रजायते ।
प्राणायामैर्विना देवि ! कृतं कर्म निरर्थकम् ॥ ५८ ॥
प्राणायामात् परं तत्त्वं प्राणायामात् परं तपः ।
प्राणायामात् परं ज्ञानं प्राणायामात् परं पदम् ॥ ५९ ॥
प्राणायामात् परो योगः प्राणायामात् परं धनम् ।
नास्ति नास्ति पुनर्नास्ति कथितं तव सुव्रते ! ॥ ६० ॥
वत्सराभ्यासयोगेन ब्रह्म साक्षाद् भवेद् ध्रुवम् ।
चैतन्यावरणं यद्वत् क्षीयते नात्र संशयः ॥ ६१ ॥
प्राणायामं विना मुक्तिमार्गो नास्ति मयोदितः ।
प्राणायामेन मुनयः सिद्धिमाहुर्न चान्यथा ॥ ६२ ॥

प्राणायामपरो योगी न योगी शिव एव सः ।
गमनागमनं वायोः प्राणस्य धारणं तथा ॥ ६३ ॥

प्राणायाम इति प्रोक्तो योगशास्त्रविशारदैः ।
प्राणो वायुरिति ख्यात आयामस्तन्निरोधनम् ॥ ६४ ॥

प्राणायाम इति प्रोक्तो योगिनां योगसाधनम् ।
बाह्यादापूरणं वायोरुदरे पूरको भवेत् ॥ ६५ ॥

सम्पूर्णकुम्भवद् वायोर्धारणं कुम्भकं भवेत् ।
बहिर्यद् रेचनं वायोरुदराद् रेचको भवेत् ॥ ६६ ॥

पूरकं च यथाशक्त्या कुम्भकं तच्चतुर्गुणम् ।
कुम्भकार्द्धं भवेद् रेचः प्राणायामोऽयमीरितः ॥ ६७ ॥

कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम्[1] ।
प्राणायामः स विज्ञेयस्तर्जनीमध्यमे विना ॥ ६८ ॥

वामया पूरयेद् वायुं शनैः शनैस्तु मध्यया ।
धारयेद् वामया मुञ्चेदपरं तत् क्रमात् क्रमात् ॥ ६९ ॥

यावच्छक्यं नियम्याऽसून् मनसैव स्मरन् पराम् ।
मन्त्रस्य मुखबीजं वा समस्तं वा जपन् प्रिये ! ॥ ७० ॥

मूलाधारे त्रिकोणाख्ये कोटिसूर्यसमप्रभे ।
ध्यायेत् कुण्डलिनीं नित्यं कामानन्दशिखोपमाम् ॥ ७१ ॥

रक्तां सूक्ष्मां च विश्वस्य सृष्टिस्थितिलयात्मिकाम् ।
विश्वातीतां ज्ञानरूपां चिन्तयेदूर्ध्ववाहिनीम् ॥ ७२ ॥

हुङ्कारोच्चारणेनैव समुत्थाय परां शिवे ! ।
षट्चक्रं च विनिर्भिद्य प्रापयित्वा परं शिवम् ॥ ७३ ॥

परमानन्देन संयोज्य परमानन्दरूपिणीम् ।
तदभेदसमापन्नमनाः कुलमनाः स्मरेत् ॥ ७४ ॥

---

१. न्यास्या–ख० ।

श्रावयित्वा सुराधारां प्रापयेच्छक्तिमण्डलम् ।
तेनैव चक्रभेदेन मूलाधारं समानयेत् ॥ ७५ ॥

मूलादिब्रह्मरन्ध्रान्तं बिसतन्तुस्वरूपिणीम् ।
उद्यत्सूर्यसहस्राभां ध्यायेन्मन्त्रात्मदेवताम् ॥ ७६ ॥

कुण्डलीं त्रिविधां तत्र तथा बीजत्रयं त्रिधा ।
तुरीयां कुण्डलीं मूर्ध्नि महात्रिपुरसुन्दरीम् ॥ ७७ ॥

वाग्भवं मूलदेशे च द्रवत्स्वर्णनिभं स्मरेत् ।
मूलादि हृदयं यावद् वह्निकुण्डलिनीं तथा ॥ ७८ ॥

हृदये कामराजं च सूर्यकोटिसमप्रभम् ।
सूर्यकुण्डलिनीं तत्र सूर्यकोटिसमप्रभाम् ॥ ७९ ॥

हृदयाद् गलपर्यन्तं ध्यायेदनाकुलः शिवे ।
भ्रूमध्ये शक्तिबीजं तु कोटिचन्द्रसमप्रभम् ॥ ८० ॥

भ्रूमध्याद् ब्रह्मरन्ध्रान्तं चन्द्रकुण्डलिनीं शिवे ! ।
चन्द्रकोटिसमप्रख्यां स्रवदमृतविग्रहाम् ॥ ८१ ॥

बीजत्रयमयीं बिन्दौ तुरीयां बिन्दुत्रयात्मिकाम् ।
देशकालानवच्छिन्नां सर्वतेजोमयीं स्मरेत् ॥ ८२ ॥

तुर्यकुण्डलिनीं तद्वत् केवलं ज्ञानविग्रहाम् ।
एवं ध्यात्वा पुनर्विद्यां सम्पूर्णां मनसा स्मरेत् ॥ ८३ ॥

चिदानन्दमयीं स्वच्छामेकात्मकतया प्रिये ! ।
[1]सुधावृष्ट्याऽभिपतन्त्या तर्पयेत् परदेवताम् ॥ ८४ ॥

ध्यात्वा ध्यात्वा पुनर्ध्यात्वा सहजानन्दविग्रहः ।
बिन्दुश्रुतसु[2]धाभिस्तु तर्पयेच्च पुनः पुनः ॥ ८५ ॥

---

१. स्वधा-ख० ।

२. स्वधा-ख० ।

अन्तर्याग इति प्रोक्तो जीवतो मुक्तिदायकः ।
मुनीनां च मुमुक्षूणामधिकारोऽत्र केवलम् ॥ ८६ ॥
प्रातः सायं चरेन्नित्यं षोडशप्राणसंयमम् ।
नाशयेत् सर्वपापानि तृणराशिरिवाऽनलः ॥ ८७ ॥
सर्वेषामेव पापानां प्रायश्चित्तमिदं स्मृतम् ।
स्वदेहस्थं यथा सर्पश्चर्मोत्सृज्य निरामयः ॥ ८८ ॥
प्राणायामात् तथा मुञ्चेदविद्याकामकर्मजम्[1] ।
परोपतापजं पापं परद्रव्यापहारजम् ॥ ८९ ॥
परस्त्रीमैथुनोत्पन्नं प्राणायामशतं दहेत् ।
महापातकजातानि ब्रह्महत्यादिकानि च ॥ ९० ॥
सर्वाण्येतानि दह्यन्ते प्राणायामचतुःशतैः ।
[2]नमः शक्तिः समाख्याता पञ्चास्यः पञ्चदेहगः ॥ ९१ ॥
एकरूपं शिवं कृत्वा तदङ्के तां निवेशयेत् ।
शून्यरूपे परे स्थाप्य तावुभौ सममास्थितौ ॥ ९२ ॥
चिन्तयेत् साधको नत्वा नादरूपं तयोः क्रमात् ।
तदन्तर्लीन[3]मात्मानं ज्योतीरूपं सनातनम् ।
समाधिना समागत्य त्यजेत् संसारबन्धनम् ॥ ९३ ॥

इति गन्धर्वतन्त्रे एकादशः पटलः ॥ ११ ॥

---

१. कर्मकम्—ख० ।
२. मनः—ग० ।
३. र्मानसात्मानम्—क० ख० ।

## द्वादशः पटलः

ईश्वर उवाच

अथवा परमेशानीं लीलाकलितविग्रहाम् ।
हृत्पुण्डरीकमध्यस्थां निगृह्येन्द्रियमानसः ॥ १ ॥

तन्मनाः साधकवरो मनसा पूजयेच्छिवाम् ।
वामकरस्य तर्जन्यां दक्षिणस्य कनिष्ठया ॥ २ ॥

तथा दक्षिणतर्जन्यां वामाङ्गुष्ठेन योजयेत् ।
उन्नतं दक्षिणाङ्गुष्ठं वामस्य मध्यमादिकाः ॥ ३ ॥

अङ्गुलीर्योजयेत् पृष्ठे दक्षिणस्य करस्य च ।
वामस्य पितृतीर्थेन मध्यमाऽनामिके तथा ॥ ४ ॥

अधोमुखे तु ते कुर्याद् दक्षिणस्य करस्य च ।
रक्तपुष्पं गृहीत्वैवं विधाय पाणिकच्छपम् ॥ ५ ॥

कुर्यात् तद्हृदयासन्नं निमील्य नयनद्वयम् ।
समकायशिरोग्रीवं कृतासनपरिग्रहः ॥ ६ ॥

पश्यन्निव ततो देवीमेकाग्रमनसा ततः ।
प्रत्यक्षीकृत्य हृदये मानसैरुपचारकैः ॥ ७ ॥

षोडशानां प्रकारैस्तु हृदिस्थां पूजयेच्छिवाम् ।
आसनं प्रथमं दद्याद् रत्नसिंहासनं शुभम् ॥ ८ ॥

पाद्यं चरणयोर्दद्याच्छिरस्यर्घ्यं निवेदयेत् ।
परमामृतपानीयं भावपुष्पैः सुवासितम् ॥ ९ ॥

स्वर्णपात्रे जलं कृत्वा दद्यादाचमनं मुखे ।
मधुपर्कं ततो दद्यात् पुनराचमनं ततः ॥ १० ॥

---

१. नास्ति—ग० ।

स्ववासे [1]मण्डपं कृत्वा पर्यङ्कं परिभावयेत् ।
श्रीरत्नपादुके दत्वा नीत्वा तां स्नानमन्दिरे ॥ ११ ॥

भद्रासनोपविष्टाया उद्वर्तनं समाचरेत् ।
घृतेनोद्वर्तनं कृत्वा मनसा परिभावयेत् ॥ १२ ॥

कर्पूरागुरुकस्तूर्या तथा मृगमदेन च ।
रोचनाकुङ्कुमैर्मिश्रैर्नानागन्धसमन्वितैः ॥ १३ ॥

सुगन्धिदिव्यतैलैश्च स्नापयेत् परमेश्वरीम् ।
देवकन्यासहस्रैस्तु स्वर्णकुम्भसहस्रकैः ॥ १४ ॥

नदीभिर्नदराजैश्च अप्सरोरगपन्नगैः ।
सिञ्चता वारिणा स्नातां चिन्तयेत् परदेवताम् ॥ १५ ॥

दुकूलैर्मार्जितं गात्रं दुकूले परिघे (?) तथा ।
कङ्कतीकेशसंस्कारो विधिवद् बन्धनं तथा ॥ १६ ॥

सूत्रावली केशपाशे सिन्दूरं केशमध्यमे ।
ललाटे तिलकं दद्यादलक्तं रदनच्छदे ॥ १७ ॥

नेत्रेषु रञ्जनं कृत्वा गन्धैर्गात्रानुलेपनम् ।
काञ्चनाञ्चितकञ्चूलीशोभनं हृदयोपरि ॥ १८ ॥

विभूषणं ततो दद्यात् सुवर्णरजतादिना ।
शिरःकर्णग्रीवादीनि उज्ज्वलाभरणानि च ॥ १९ ॥

नूपुरौ च ततो दद्यादानन्दहारमुज्ज्वलम् ।
अन्यदाभरणं चैव यत्र येन विराजते ॥ २० ॥

श्रीरत्नपादुके दत्त्वा चक्रमध्ये समानयेत् ।
गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च ॥ २१ ॥

---

१. मण्डलं—ख० ।

हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम् ।
कपिलाघृतसंयुक्तं नानाव्यञ्जनसंयुतम् ॥ २२ ॥
भक्ष्यं भोज्यं तथा लेह्यं पेयं चोष्यं तथैव च ।
क्षीरपानीयसंयुक्तं दधिमधुसमन्वितम् ॥ २३ ॥
सकर्पूरं च ताम्बूलं मानसं परिकल्पयेत् ।
मनसाऽपि महादेव्यै नैवेद्यं दीयते यदि ॥ २४ ॥
यो नरो भक्तिसंयुक्तः स दीर्घायुः सुखी भवेत् ।
माल्यं पद्मसहस्रस्य मनसा यः प्रयच्छति ॥ २५ ॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
स्थित्वा तव पुरे श्रीमान् सार्वभौमो भवेत् क्षितौ ॥ २६ ॥
मनसा तु महादेव्यै यः कुर्याच्च प्रदक्षिणम् ।
स दक्षिणे यमगृहे नरकाणि न पश्यति ॥ २७ ॥
नमनं मानसं देव्या यो भक्त्या कुरुते नरः ।
सोऽपि लोकान् विजित्यैव नरलोके महीयते ॥ २८ ॥
महामायां महादेवीं समर्चयति शक्तितः ।
नानाविधैस्तु नैवेद्यैरतिचिन्ताकुलस्तु यः ॥ २९ ॥
नैवेद्यं देहि नितरामिति यो भाषते मुहुः ।
सोऽपि लोकान् विभिद्यैव देवीलोके महीयते ॥ ३० ॥
बहिर्वच्चक्रपूजां च मनसैव समाचरेत् ।
नवावरणशक्तीनां पूजनं मनसैव हि ॥ ३१ ॥
इत्थमन्तः समाराध्य मनसैव जपेन्मनुम् ।
तदा भवति सिद्धीशो देववद् विहरेत् क्षितौ ॥ ३२ ॥
एवमेव महेशानि ! पूजयामि महेश्वरीम् ।
योगिनो मुनयश्चैव पूजयन्ति सदा प्रिये ! ॥ ३३ ॥

केवलं मानसेनैव नैव सिद्धो भवेद् गृही ।
सबाह्येन तु तेनैव गृहस्थो मुनिपुङ्गवः ॥ ३४ ॥

पार्वती उवाच

ध्यानयोगं महादेव ! श्रोतुमिच्छामि हे प्रभो ! ।
सम्पूर्णं कथयेशान ! येन सिद्धो भवेत् परः ॥ ३५ ॥

ईश्वर उवाच

विना न्यासैर्विना पूजां विना जापैः पुरस्क्रियाम् ।
ध्यानयोगाद् भवेत् सिद्धो नान्यथा खलु पार्वति ! ॥ ३६ ॥

ध्यानयोगादहं सिद्धो विष्णुश्चापि पितामहः ।
ध्यानयोगात् परं सिद्धा मानवा अपि पापिनः ॥ ३७ ॥

सर्वतन्त्रेषु यद् गुह्यं सर्वसिद्धिप्रदायकम् ।
विना येन न सिध्यन्ति वर्षकोटिशतैरपि ॥ ३८ ॥

ध्यानयोगं प्रवक्ष्यामि सर्वज्ञत्वप्रदायकम् ।
एकान्ते विजने रम्ये कृतासनपरिग्रहः ॥ ३९ ॥

निवृत्ताऽखिलचिद्वृत्तिर्मुद्रामुद्रितविग्रहः ।
कारणानन्दसन्दोहैर्बहिरन्तः प्रपूरितः ॥ ४० ॥

गुरून् नत्वा विधानेन सोऽहमिति [1]प्रबोधतः ।
ऐक्यं सम्भावयेद् धीमान् जीवस्य ब्रह्मणोऽपि च ॥ ४१ ॥

कारणे सर्वभूतानां तत्त्वान्यपि च चिन्तयेत् ।
बीजभावेन लीनानि व्युत्क्रमात् परमात्मनि ॥ ४२ ॥

एवं विचिन्त्य देवेशि ! पार्थिवांशं जले गतम् ।
जलं च तेजसो रूपं तेजोरूपं विचिन्तयेत् ॥ ४३ ॥

---

१. पुरोधतः–ख० ।

निर्वाणवायुना वह्निं वायुनाऽत्र विचिन्तयेत् ।
आकाशैः संहृतं वायुं खं च मनसि लीयते ॥ ४४ ॥

मनोऽहङ्कारवशगमहं[1] वै मनसि स्थितम् ।
महान्तं प्रकृतौ लीनं चिन्तयेत् परमेश्वरि ! ॥ ४५ ॥

मुमुक्षुश्चिन्तयेल्लीनां प्रकृतिं परमात्मनि ।
नाहो न रात्रिर्न सन्ध्या न सूर्यो नैव चन्द्रमाः ॥ ४६ ॥

इदं तमोमयं सर्वमासीद् भुवनवर्जितम् ।
अप्रज्ञातमलक्ष्यं च प्रसुप्तमिव सर्वतः ॥ ४७ ॥

चिन्तयित्वा महेशानि ! न किञ्चिदपि भावयेत् ।
एकमासीत् परं ब्रह्म नित्यं सूक्ष्ममतीन्द्रियम् ॥ ४८ ॥

नित्यानन्दमयं धाम तेजोरूपं सनातनम् ।
तदेव प्रकृतिः सा तु तेजोरूपा सनातनी ॥ ४९ ॥

नित्यानन्दवपुर्देवी तद्रूपा तत्प्रकाशिनी ।
तयोर्योगादभूद् वृष्टिः परमामृतरूपिणी ॥ ५० ॥

परिपूर्णमिदं देवि समस्तं प्लावयेत् तु या ।
तत्राम्भसि स्वमात्मानं चिन्तयेत् साधकोत्तमः ॥ ५१ ॥

[2]बुद्बुदं चिन्तयेत् तत्र प्रकृतिं चिन्तयेत् पराम् ।
प्रकृतेर्हि महान्तं वै अहं च महतस्तथा ॥ ५२ ॥

अहङ्कारान्मनश्चैव मनसः खं समुत्थितम् ।
आकाशाद् वायुमाकृष्य वायोस्तेजः समुत्थितम् ॥ ५३ ॥

तेजसो जलमासाद्य जलाच्च पृथिवीं स्मरेत् ।
बहिष्कृत्य यथास्थानं निवेश्य विधिना ततः ॥ ५४ ॥

---

१. गं तथा–ख० ।

२. बुदबदं–ख० ।

हैमं ब्रह्माण्डमेभिः स्याद् भूबीजेन दृढं स्मरेत् ।
प्रणवेन द्विधा कृत्वा जलौघैः परिपूरयेत् ॥ ५५ ॥

ब्रह्माण्डाभ्यन्तरे तोयं तदधो भेकमव्ययम् ।
तस्य पृष्ठे महादेवि ! कालाग्निरुद्ररूपकम् ॥ ५६ ॥

आधारशक्तिं तत्रैव मूलां प्रकृतिरूपिणीम् ।
ब्रह्मशिलासमारूढां कूर्माकारां शशिप्रभाम् ॥ ५७ ॥

पद्मद्वयधरां देवीं कूर्मं च मूर्ध्नि धारिणीम् ।
नीलाभं[1] चिन्तयेत् कूर्ममनन्तं कुन्दसन्निभम् ॥ ५८ ॥

तस्य मूर्ध्नि स्थितं देवि ! श्वेतं वाराहरूपकम् ।
तमालश्यामलां दन्ते धारयन्तं वसुन्धराम् ॥ ५९ ॥

तां च सञ्चिन्तयेत् तत्र नीलेन्दीवरधारिणीम् ।
चिन्तयेत् सलिलैः[2] पूर्णां चतुःसागरमेखलाम् ॥ ६० ॥

तन्मध्ये चिन्तयेद् देवि ! सुधासागरमद्भुतम् ।
रक्ताभममृतं तत्र शुद्धलाक्षारसोपमम् ॥ ६१ ॥

तन्मध्ये चिन्तयेद् देवि ! द्वीपं विद्रुमसन्निभम् ।
गिरिराजशताकीर्णं परितेक्षुवनं महत् ॥ ६२ ॥

गिरौ स्वर्णगिरिं चैव कल्पोद्यानं गिरेस्तटे ।
चम्पकाऽशोक-पुन्नाग-पाटलैः कुटजैस्तथा ॥ ६३ ॥

लवङ्ग-माधवी-बिल्व-देवदारु-नमेरुभिः ।
मन्दार-पारिजाताद्यैः कल्पवृक्षैः सुपुष्पितैः ॥ ६४ ॥

सर्वतोऽलङ्कृतं दिव्यैर्नित्यपुष्पफलद्रुमैः ।
चन्दनैः कर्णिकारैश्च मातुलुङ्गैः करञ्जकैः ॥ ६५ ॥

---

१. नीलाभां–ग० ।
२. सलिलापूर्णां–ग० ।

द्राक्षेक्षु-रम्भा-जम्बूभिर्मधूकैराम्रकैरपि ।
दाडिमी-चूत-पनसैः पूगैः कर्पूरकैरपि ॥ ६६ ॥
कदली-कुन्दखर्जूरनारिकेलैरलङ्कृतम् ।
कदम्बैः करवीरैश्च तगरैर्नागकेशरैः ॥ ६७ ॥
पावन्ती-स्वर्णयूथिभिर्वज्रैर्दमनकैरपि ।
मालती-मल्लिका-जाती-केतकी-शतपत्रकैः ॥ ६८ ॥
अन्यैः सुगन्धिपुष्पाद्यैः शोभितं यूथिकादिभिः ।
अन्योन्यासक्तवल्लीभिर्वृक्षषण्डैश्च मण्डितम् ॥ ६९ ॥
सर्वर्तुकुसुमोपेतैर्नमद्भिरुपशोभितम् ।
मन्दमारुतसंभिन्नकुसुमामोददिङ्मुखम् ॥ ७० ॥
उत्फुल्लकुसुमाऽऽमोदप्रहृष्यद्भृङ्गसङ्कुलम् ।
कूजत्कोकिलसङ्घेन वाचालितदिगन्तरम् ॥ ७१ ॥
कालमेघसमालोकनृत्यद्बर्हिकदम्बकम् ।
शारिकाशुकबहुलैः कूजत्कलरवैर्युतम् ॥ ७२ ॥
द्वन्द्वभावं प्रकुर्वद्भिर्मृगैर्नानाविधैरपि ।
सरित्सरोभिरच्छोदैः[1] शोभितं कुमुदोत्पलैः ॥ ७३ ॥
तेषु सरःसु विपुलं महारससरसामृतम् ।
सर्वतोऽलङ्कृतं दिव्यं लसत्काञ्चनपङ्कजम् ॥ ७४ ॥
मत्तषट्पदनिर्घुष्टं[2] शकुन्तैश्च कलस्वनैः ।
हंसकारण्डवाकीर्णं चक्राह्वैः सारसैरपि ॥ ७५ ॥
तन्महासरःपुलिने रत्नसोपानमण्डिते ।
महारससरसान्दोलवीचिविक्षेपशीतले ॥ ७६ ॥

---

१. आच्छोदैः–ख० ।
२. निर्यष्टं–ख० ।

सर्वकामदुघं दिव्यं सर्वरत्नसमन्वितम् ।
मौक्तिकैः कुसुमैः स्रग्भिर्दुकूलैः स्वर्णतोरणैः ॥ ७७ ॥

स्मरेत् कल्पतरुं तत्र तदधो रत्नभूमिकाम् ।
विस्तीर्णां[1] सुमहद्व्याप्तां तन्मध्ये रत्नमण्डपम् ॥ ७८ ॥

परितः पारिजाताढ्यं भास्वरं शशिशीतलम् ।
उद्यदादित्यसङ्काशं रत्नसोपानमण्डितम् ॥ ७९ ॥

शतयोजनविस्तीर्णं चतुर्द्वारसमन्वितम् ।
द्वार्षु विद्रुमदेहल्याभातं वज्रकवाटकम् ॥ ८० ॥

रत्नसङ्क्लृप्तसंशोभिकवाटाष्टकसंयुतम् ।
नानारत्नविशोभाढ्यं रत्नप्राकारमण्डितम् ॥ ८१ ॥

नवरत्नसमाक्लृप्ततुङ्गगोपुरतोरणम् ।
तत्र तत्र विनिःक्षिप्तनानारत्नो[2]पशोभितम् ॥ ८२ ॥

महामरकतस्थल्या जुष्टं विद्रुमवेदिभिः ।
शिखरेष्विन्द्रनीलेषु हेमकुन्तैरलङ्कृतम् ॥ ८३ ॥

चक्षुष्मत्पद्मरागाग्रैर्वज्रभित्तिषु निर्गतैः ।
जुष्टं विचित्रवैतानैर्महार्घ्यैर्हेमतोरणैः ॥ ८४ ॥

सर्वर्ध्युपचयैरर्कम[3]णिस्तम्भैर्विराजितम् ।
हेमदण्डशिखालम्बिध्वजावलिपरिष्कृतम् ॥ ८५ ॥

स्वस्वस्थानस्थितावस्थैर्लोकपालैरधिष्ठितम् ।
सिद्ध-चारण-गन्धर्वैर्विद्याधर-महोरगैः ॥ ८६ ॥

किन्नरैरप्सरोभिश्च क्रीडद्भिर्जुष्टदिङ्मुखम् ।
नृत्यसङ्गीतनिरतैरमरैः स्त्रीगणैर्युतम् ॥ ८७ ॥

---

१. विस्तीर्ण—ग० ।

२. शिल्प—ग० ।

३. मणेः—ख० ।

नवरत्नसमाबद्धस्तम्भराजिविराजितम् ।
तप्तहाटकसंक्लृप्तं वातायनमनोहरम् ॥ ८८ ॥

नानारत्नांशुकोद्बद्धसुवर्णशतकोटिभिः ।
किङ्किणीमणिसन्नद्धपताकाभिरलङ्कृतम् ॥ ८९ ॥

महामाणिक्य-वैदूर्य-रत्न-चामर-भूषितम् ।
जातरूपमयै रत्नैश्चित्रितैरतिविस्तृतैः ॥ ९० ॥

माणिक्य-रत्न-वैदूर्य-स्वर्णमालावलीयुतैः ।
अन्तरान्तरसम्बद्धरत्नैर्दृष्टिमनोहरैः ॥ ९१ ॥

विचित्रितैश्चित्रवर्णैर्वितानैरुपशोभितम् ।
स्थूलमुक्ताफलोद्दामलम्बमानैरलङ्कृतम् ॥ ९२ ॥

उपर्युपरि विन्यस्तनिलयेषु पृथक् पृथक् ।
क्लृप्तैः कशिपुभिः कान्तं पर्यङ्कव्यजनासनैः ॥ ९३ ॥

दिव्योपकरणोपेतं सर्वकालसुखावहम् ।
दुकूल-क्षौम-कौषेयैर्नानावर्णैर्विराजितम् ॥ ९४ ॥

स्रग्भिर्विचित्रपुष्पाभिर्मञ्जुशिञ्जत्षडङ्घ्रिभि ।
चन्दनाऽगुरु-कर्पूर-मृगनाभि-विलेपितम् ॥ ९५ ॥

चन्दनाऽगुरु-कर्पूर-प्रधूपितमनोहरम् ।
नानाकुसुमसौरभ्यवाहिगन्धवहान्वितम् ॥ ९६ ॥

नन्दनोद्यानमध्यस्थमधः कल्पतरोरपि ।
एवं सञ्चित्य मनसा [1]मण्डपं सुमनोहरम् ॥ ९७ ॥

तन्मध्ये स्फुरितं ध्यायेन्महामाणिक्यमण्डपम् ।
शरच्चन्द्रनिभं छत्रं मुक्तामाणिक्यमण्डितम् ॥ ९८ ॥

---

१. मण्डलम्-ख० ।

हेमदण्डशिखालम्बिश्वेतचामरभूषितम् ।
तदधःस्थां स्मरेद् रक्तां महामाणिक्यवेदिकाम् ॥ ९९ ॥

उद्यदर्कोन्दुकिरणां चतुरस्रोपशोभिताम् ।
वेदिकां वेदिकास्थाने सिंहासनं ततोपरि ॥१००॥

तस्याऽऽग्नेयादिकोणेषु धर्मादिकांस्तु संस्मरेत् ।
दिक्ष्वधर्मादिकांस्तत्र चिन्तयेद् गात्ररूपिणः ॥१०१॥

रक्तश्यामहरिद्रेन्द्रनीलाभान् पादरूपिणः ।
वृषकेशविभूतेश्च[1] रूपान् धर्मादिकान् स्मरेत् ॥१०२॥

प्रसूनतूलिकां तत्र सिंहासनस्य मध्यमे ।
तन्मध्ये परमं ध्यायेत् सर्वतत्त्वात्मकाम्बुजम् ॥१०३॥

आनन्दकन्दमेवात्र संविन्नालं तथैव च ।
प्रकृतिविकाररूपं द्वात्रिंशत्पत्रकेशरम् ॥१०४॥

पञ्चाशद्वर्णबीजाढ्यकर्णिकापरिमण्डितम् ।
कर्णिकायां स्मरेत् सूर्यं तन्मध्ये सोममण्डलम् ॥१०५॥

वह्निमण्डलमध्ये तु सत्त्वं च परिचिन्तयेत् ।
रजश्च तत्र सञ्चिन्त्य तमोऽपि च तन्मध्यतः ॥१०६॥

ज्ञानतत्त्वात्मनश्चैव मायातत्त्वात्मनस्तथा ।
विद्यातत्त्वात्मनो देवि ! कलातत्त्वात्मनो यजेत् ॥१०७॥

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
एते पञ्च महाप्रेताश्चतुर्दिङ्मध्यसंस्थिताः ॥१०८॥

सदाशिवोपरिगतं त्रिशृङ्गज्योतिरव्ययम् ।
तस्य मध्ये महापद्मं पीयूषपरिपूरितम् ॥१०९॥

---

१. विभृतेभ–ख० ।

सुधार्णवासने तत्र त्रिपुरां प्रकटेश्वरीम् ।
पीताम्बुजासने तद्वच्चिन्तयेत् त्रिपुरेश्वरीम् ॥११०॥

चिन्तयेत् साधको भक्त्या गुप्तयोगिन्यधीश्वरीम् ।
आत्मासनगतां तत्र स्मरेत् त्रिपुरसुन्दरीम् ॥१११॥

गुप्ततरेश्वरीं देवीं चक्रासने विचिन्तयेत् ।
त्रिपुरवासिनीं देवीं सम्प्रदायगणेश्वरीम् ॥११२॥

सर्वमन्त्रासने देवि ! चिन्तयेत् त्रिपुरश्रियम् ।
कुलकौलेश्वरीं देवीं साध्यासनगतां ततः ॥११३॥

त्रिपुरमालिनीं प्रोक्ते निगर्भयोगिनीश्वरीम् ।
सिद्धासने ततः पश्चात् सिद्धां त्रिपुरपूर्विकाम् ॥११४॥

पर्यङ्कशक्तिपीठे तु त्रिपुराम्बां विचिन्तयेत् ।
कामेश्वराङ्कपर्यङ्कसमासीनां परां कलाम् ॥११५॥

रक्तपद्मनिभां देवीं बालार्ककिरणारुणाम् ।
[1]जपाकुसुमसङ्काशां दाडिमीकुसुमप्रभाम् ॥११६॥

पद्मरागप्रतीकाशां कुङ्कुमोदकसन्निभाम् ।
स्फुरन्मुकुटमाणिक्यकिङ्किणीजालमण्डिताम् ॥११७॥

कालालिकुलसङ्काशकुटिलालकपल्लवाम् ।
प्रत्यग्रारुणसङ्काशवदनाम्भोजमण्डलाम् ॥११८॥

पिनाकिधनुराकारसुभ्रुवं परमेश्वरीम् ।
आनन्दमुदितोल्लोललीलाललितलोचनाम् ॥११९॥

किञ्चिदर्द्धेन्दुकुटिलललाटे मृदुपट्टिकाम् ।
स्फुरन्मयूखस[2]ङ्घातविलसद्धेमकुण्डलाम् ॥१२०॥

---

१. यवा–ग० ।
२. संहात–ख० ।

सुगण्डमण्डलाभोगजितेन्दुसुतलोचनाम् ।
विश्वकर्मादिनिर्माणसूत्रविस्पष्टनासिकाम् ॥१२१॥

ताम्रविद्रुमबिम्बान्तर्बिम्बोष्ठीममृतोपमाम् ।
[1]दाडिमीबीजवज्राभदन्तपङ्क्तिसुशोभिताम् ॥१२२॥

रत्नद्वीपस्फुरद्भासजिह्वामूलविराजिताम् ।
स्मितमाधुर्यविजितमाधुर्यरससागराम् ॥१२३॥

अनौपम्यगुणोपेतचिबुकोद्देशशोभिताम् ।
कम्बुग्रीवां महादेवीं मृणाललतितैर्भुजैः ॥१२४॥

रक्तोत्पलदलाकारसुकुमारकराम्बुजाम् ।
कराम्बुजनखज्योतिर्विराजितनभःस्थलाम् ॥१२५॥

मुक्ताहारलतोपेतपीनोन्नतपयोधराम् ।
त्रिवलीवलनायुक्तमध्यदेशसुशोभिताम् ॥१२६॥

लावण्यसरिदावर्तना[2]भिदेशसुशोभिताम् ।
अनर्घ्यरत्नघटितकाञ्चीयुक्तनितम्बिनीम् ॥१२७॥

नितम्बबिम्बद्विरदरोमराजीवराङ्कुशाम् ।
कदलीललितस्तम्भसुकुमारोरुमीश्वरीम् ॥१२८॥

लावण्यकदलीतुल्यजङ्घायुगलमण्डिताम् ।
गूढगुल्फपदद्वन्द्वप्रपदाजितकच्छपाम् ॥१२९॥

नूपुरैर्विलसत्पादपङ्कजातिमनोहराम् ।
ब्रह्मविष्णुशिरोरत्ननिघृष्टचरणाम्बुजाम् ॥१३०॥

तनुदीर्घाङ्गुलीभास्वन्नखचन्द्रविराजिताम् ।
शीतांशुशतसङ्काशकान्तिसन्तानहासिनीम् ॥१३१॥

---

१. दाडिम–ख० ।

२. कारनाभि–ख० ।

लौहित्यजितसिन्दूरजपादाडिमरागिणीम् ।
रक्तवस्त्रपरीधानां रक्ताभरणभूषिताम् ॥१३२॥

इच्छाशक्तिमयं पाशमङ्कुशं ज्ञानरूपिणम् ।
क्रियाशक्तिमये बाणधनुषी दधतीं पराम् ॥१३३॥

कर्पूरशकलोन्मिश्रताम्बूलपूरिताननाम् ।
महामृगमदोद्दामकुङ्कुमारुणविग्रहाम् ॥१३४॥

सर्वशृङ्गारवेषाढ्यां सर्वाभरणभूषिताम् ।
जगदाह्लादजननीं जगद्रञ्जनकारिणीम् ॥१३५॥

जगदाकर्षणकरीं जगत्कारणरूपिणीम् ।
सर्वदेवमयीं देवीं सर्वमन्त्रमयीं पराम् ॥१३६॥

सर्वलक्ष्मीमयीं साक्षात् परमानन्दरूपिणीम् ।
निर्लेपं निर्गुणं शुद्धमात्मानं त्रिपुरामयम् ॥१३७॥

आत्माभेदेन सञ्चिन्त्य याति तन्मयतां नरः ।
साऽहमित्यस्य सततं चिन्तनात् तन्मयो भवेत् ॥१३८॥

तामेव चिन्तयेद् देवि! नान्यत् किञ्चित् तया विना ।
तत्तेजोभिरिदं सर्वं परिपूर्णं विभावयेत् ॥१३९॥

एवं भावनया हृष्टो देववद् विहरेत् क्षितौ ।
ध्यानयोगपरस्यास्य पूज्यो नास्तीह कश्चन ॥१४०॥

स एव सुकृती लोके स पूज्यो न तु पूजकः ।
योगात्मा योगविज्ञानी स देवो न तु मानुषः ॥१४१॥

संन्यासी स च विन्यासी युक्तात्मा स मुनिर्मतः ।
नाऽसाध्यं वर्तते तस्य स सिद्धो योगिपुङ्गवः ॥१४२॥

इन्द्रियप्रीणनैर्द्रव्यैस्तोषयेद् भूषयेत् सदा ।
आत्मानमेव सततं पूजयेद् देवताधिया ॥१४३॥

देववद् विहरेन्नित्यं कालयोगपरायणः ।
यत् पश्यति यच्छृणोति गीतनृत्यादिकं च यत् ॥१४४॥

परिदधाति यत् किञ्चित् स्वयं यदनुलिम्पति ।
हस्त्यश्वरथखट्वादि यदारोहति साधकः ॥१४५॥

यत् करोति यदश्नाति तत् सर्वं देवताधिया ।
विषयान् विषयी भुङ्क्ते यानेव स्वमनोरथान् ॥१४६॥

तत्तत् समग्रमासाद्य तत्सर्वं देवताधिया ।
जाग्रदादि सुषुप्त्यन्तं सर्वं तद् देवताधिया ॥१४७॥

दिव्यभावो भवेत् तत्र येन सिद्धो भवेन्नरः ।
दिव्य एव भवेत् सिद्धो न चैवान्यः कदाचन ॥१४८॥

तस्माद् दिव्यपरो यस्तु देवीमानन्दरूपिणीम् ।
पूजयेत् सततं भक्त्या महात्रिपुरसुन्दरीम् ॥१४९॥

मोक्षार्थी लभते मोक्षं ध्यानयोगपरायणः ।
तां तु यश्चिन्तयेद् रात्रौ भोगी ध्यानपरायणः ॥१५०॥

कामेश्वराङ्कपर्यङ्कं समासीनां परां कलाम् ।
सर्वाङ्गसुन्दरीं हृद्यां प्रसादसुमुखेक्षणाम् ॥१५१॥

सकरुणामभिध्यायेत् सर्वाङ्गेषु मनो दधत् ।
चतुर्वर्गं करे तस्य जीवन्मुक्तः स एव हि ॥१५२॥

॥ इति श्रीगन्धर्वतन्त्रे द्वादशः पटलः ॥ १२ ॥



# त्रयोदशः पटलः

पार्वती उवाच

बहिर्यागविधिं ब्रूहि साङ्गेन परमेश्वर ! ।
विशेषार्घ्यस्य[1] संस्थानं नित्यायजनमेव[2] च ॥ १ ॥

ईश्वर उवाच

तादृशीमम्बिकां ध्यात्वा त्रिधाऽऽत्मानं च तन्मयम् ।
तेनैव मूलमन्त्रेण शिरोदेशे तदे[सदै]व हि ॥ २ ॥

स्वकीये कुसुमं दद्यादङ्गन्यासं पुनस्तथा ।
चैतन्यं सर्वभूतानां यद् [3]ब्रह्म सोहऽमीश्वरः ॥ ३ ॥

सोऽहमित्यस्य सततं चिन्तनाद् देवरूपता ।
आत्मनो[4] जायते सम्यग् भावनान्नात्र संशयः ॥ ४ ॥

पूजोपकरणस्यापि देवत्वमिह जायते ।
सर्वेषां देवतादृष्ट्या जायते शुद्धतापि च ॥ ५ ॥

अहं देवोऽथ नैवेद्यं पुष्पगन्धादिकं च यत् ।
देवाधारो ह्यहं देवो न देवो मत्परः क्वचित् ॥ ६ ॥

देवमेव भजे चाहं देवदेवोऽहमेव च ।
यदि बाह्यार्चना द्रव्यसम्पत्तिरपि विद्यते ॥ ७ ॥

---

१. विशेषार्यस्य–ख० ।
२. नित्याजननमेव–ख० ।
३. ब्रह्मा–ख० ।
४. आत्मानो–ग० ।

विशेषार्घ्यादिकं देवि! तदा कुर्यादतन्द्रितः।
पूजार्घ्यपात्रं नैवेद्याद्याधारपानपात्रकम् ॥ ८ ॥

सर्वं ताम्रमयं कुर्याद् यत् किञ्चिदिह पूजने।
ताम्रे देवाः प्रमोदन्ते ताम्रे देवाः स्थिताः सदा ॥ ९ ॥

देवीप्रीतिकरं ताम्रं तस्मात् ताम्रं प्रयोजयेत्।
शङ्खशुक्तिरजतस्वर्णैर्दिव्यानां पात्रमिष्यते ॥ १० ॥

महाशङ्खैस्तु वीराणां [1]फलजं वनवासिनाम्।
अष्टाङ्गुलस्य न न्यूनं नाधिकं सार्द्धपाणितः ॥ ११ ॥

सर्वेषामेव [2]पात्राणां मानमेवं विधीयते।
पञ्चरत्नैर्महादेव्याः पञ्चपात्राणि कारयेत् ॥ १२ ॥

सामान्यं च विशेषं च पाद्यमाचमनीयकम्।
कुम्भं चापि प्रयत्नेन रत्नैः कुर्याद् विभूतये ॥ १३ ॥

रत्नं गगनसंज्ञं च स्वर्गरत्नं तथैव च।
मर्त्यपातालरत्ने च नागरत्नं तथैव च ॥ १४ ॥

गारुडं चैव माणिक्यं वज्रं वैदूर्यमेव च।
नीलं च क्रमतो विद्यात् पञ्च रत्नानि योजयेत् ॥ १५ ॥

बीजपञ्चकमेतेषां क्रमाद् वक्ष्ये सुदुर्लभम्।
गसौ च [3]समनाः पश्चादिन्द्रस्थाः क्रमतः प्रिये! ॥ १६ ॥

नादबिन्दुकलायुक्ता वामकर्णविभूषिताः।
तर्पणार्थं विशेषेण चक्रपूजानिवेदने ॥ १७ ॥

---

१. कुलजं–ग०।
२. पात्राणाः–ख०।
३. मपलाः–ग०।

श्रीपात्रं [1]स्थापयेद् धीमान् विधिना साधकोत्तमः ।
योनिमुद्रां विधायादौ कुर्यादर्घ्यस्य साधनम् ॥ १८ ॥
आत्मश्रीचक्रयोर्मध्ये चतुरस्रं तु कारयेत् ।
तन्मध्ये चैव षट्कोणं तन्मध्ये वृत्तमुत्तमम् ॥ १९ ॥
त्रिकोणं तत्र संलिख्य चन्दनेन वरानने ! ।
मण्डलं तं समभ्यर्च्य साधयेदासनं ततः ॥ २० ॥
बालाबीजत्रयं देवि ! ततस्त्रिपुरसुन्दरी ।
अर्द्धपात्रासनं चैव साधयामीति साधयेत् ॥ २१ ॥
तथैवास्त्रेण युतया सामान्यार्घ्योदकेन तु ।
प्रक्ष्याल्य परमेशानि ! मण्डले स्थापयेत् ततः ॥ २२ ॥
वह्निमण्डलरूपं तं कलाभिः सह पूजयेत् ।
पूर्ववत् परमेशानि ! पात्रं प्रक्षाल्य साधकः ॥ २३ ॥
विशेषार्घ्यपदात् पात्रं प्रतिशब्दादनन्तरम् ।
[2]स्नापयामीति मनुना संस्थाप्य तदनन्तरम् ॥ २४ ॥
सूर्यमण्डलरूपं तं कलाभिः सह पूजयेत् ।
पूरयेत् तं विधानेन बिन्दुस्रुतसुधामयैः ॥ २५ ॥
मातृकां प्रतिलोमेन मूलाभिमन्त्रितामृतैः ।
आदिमैः पूरयेद् वापि तथा पुष्पासवैरपि ॥ २६ ॥
कपिलायास्तथा क्षीरैर्नारिकेलामृतैरपि ।
इक्षुरसैः सुगन्धैश्च मधुरात्रितयेन वा ॥ २७ ॥
[3]पूरयेत् तं महापात्रं नानाद्रव्यैः कदाचन ।
अधिकारिप्रभेदेन द्रव्यभेदा भवन्ति हि ॥ २८ ॥

१. साधयेत्–ख० ।
२. स्थापयामि–ख ।
३. पूजयेत्–ग० ।

स्वयम्भूकुसुमं तत्र कर्पूरागुरुचन्दनैः ।
रोचनाकुङ्कुमैर्मिश्रं कस्तूरीपरिभावितम् ॥ २९ ॥
निक्षिपेत् परमेशानि ! शर्करां मधुसंयुताम् ।
पूर्वोक्तमण्डलं तत्र सञ्चिन्त्य साधकोत्तमः ॥ ३० ॥
अङ्कुशमुद्रया पश्चात् तीर्थं वै प्रार्थयेत् ततः ।
ऋजुमध्ये मध्यपर्वाक्रान्ता तर्जन्यधोमुखी ॥ ३१ ॥
विज्ञेयाङ्कुशमुद्रेयं कुञ्चिता मध्यपर्वतः ।
सौरमण्डलतः पश्चात् तीर्थमावाहयेत् तथा ॥ ३२ ॥
गङ्गावतारमन्त्रेण सर्वैस्तीर्थगणैः सह ।
गङ्गापि [1]स्वयमायाति पूजापात्रजलं प्रति ॥ ३३ ॥
मीनमुद्रां विधायाथ हस्ताभ्यां पात्रमुत्तमम् ।
आच्छाद्य परमेशानि ! चिन्मयं तीर्थमागतम् ॥ ३४ ॥
अधोमुखावुभौ हस्तौ [2]स्वस्वोपरि च संस्थितौ ।
पार्श्वद्वयगताङ्गुष्ठौ मीनमुद्रेयमीरिता ॥ ३५ ॥
माणिक्यं मौक्तिकं देवि ! विद्रुमं गारुडं तथा ।
पुष्परागं तथा वज्रं नीलं गोमेदकं शुभम् ॥ ३६ ॥
वैदूर्यनवरत्नानि तत्राम्भसि नियोजयेत् ।
रत्नेशीं पूजयेत् तत्र सर्वपापविनाशिनीम् ॥ ३७ ॥
[3]श्रीबीजं च पराबीजं तथैव बीजपञ्चकम् ।
पूर्वबीजे विलोमे तु तत् पश्चाद् विनियोजयेत् ॥ ३८ ॥
द्रव्यदोषहरा देवी रत्नेशीयं नवाक्षरी ।
षडङ्गानि च षट्कोणे पूर्वोक्तानि प्रपूजयेत् ॥ ३९ ॥

१. यमुना–ख० ।
२. सुखोपरि–क० ।
३. श्रीबीजम्–ग० ।

तन्मध्ये परमेशानि ! वृत्तं पूर्णेन्दुसन्निभम् ।
चन्द्रमण्डलरूपं तदमृतं परिचिन्तयेत् ॥ ४० ॥

कलाभिस्तत् प्रपूज्याऽथ चिन्तयेन्मध्यमण्डलम् ।
अकथादित्रिरेखाढ्यं हक्षाभ्यन्तरमध्यगम् ॥ ४१ ॥

तदग्रे कामरूपं च जालन्धरं च वामतः ।
दक्षे पूर्णगिरिं चैव मध्ये चैवोड्डियानकम् ॥ ४२ ॥

तत्र तत्र यजेद् देवीं चतुर्व्यूहस्वरूपिणीम् ।
सूर्यकोटिप्रतीकाशं चन्द्रकोट्ययुतप्रभम् ॥ ४३ ॥

तथा दशभुजं देवं पञ्चवक्त्रं त्रिलोचनम् ।
खड्गखेटकपट्टीशमुद्गरं शूलदन्तकम् ॥ ४४ ॥

बिभृतं खेटकं शक्तिं वरदाभयपाणिनम् ।
तस्योत्सङ्गे [1]स्वधां देवीं चन्द्रकोट्ययुतप्रभाम् ॥ ४५ ॥

हिमकुन्देन्दुधवलां पूर्वायुधकरोद्यताम् ।
प्रहसन्तीं विशालाक्षीं देवदेवस्य सम्मुखे ॥ ४६ ॥

एवं ध्यात्वा समावाह्य कुलाकुलमयीं विभुः ।
अमृतीकरणं कुर्यान्मुद्रया धेनुसंज्ञया ॥ ४७ ॥

अवगुण्ठ्य ततो मन्त्री नीरजायतलोचने ! ।
सकलीकरणं कुर्यात् षडङ्गेन च पूर्ववत् ॥ ४८ ॥

परमीकरणं कुर्यान्महामुद्रिकया ततः ।
मुषलमुद्रिकां योनिं गालिनीं च प्रदर्शयेत् ॥ ४९ ॥

वाममुष्ट्यन्तरेऽङ्गुष्ठे दक्षिणे [2]सरलाङ्गुलीः ।
वामाङ्गुष्ठं स्पृशेदग्रे योजिता दक्षिणादयः ॥ ५० ॥

---

१. सुधा—ग० ।
२. सवशा—ख० ।

मुष्टिं कृत्वा तु हस्ताभ्यां वामस्योपरि दक्षिणम् ।
कुर्यान्मुषलमुद्रेयं सर्वविघ्नविनाशिनी ॥ ५१ ॥
कनिष्ठिकाङ्गुष्ठकौ शक्तौ करयोरितरेतरम् ।
तर्जनीमध्यमानामाः संहता भुग्नवर्जिताः ॥ ५२ ॥
मुद्रेयं गालिनी प्रोक्ता परमामृतदायिनी ।
शिवचन्द्रौ मातृकान्तं कालशक्राद्यवह्नयः ॥ ५३ ॥
वायुश्च वामकर्णेन योजिता बिन्दुनादिनः ।
बीजमेतत् समुच्चार्य तथा चानन्दभैरवम् ॥ ५४ ॥
[1]ङेऽन्तं शाखामन्त्रयुक्तं पुनर्बीजानि संलिखेत् ।
चन्द्रं हित्वा दिनं कुर्यात् कर्णे वामाक्षि ! योजयेत् ॥ ५५ ॥
[2]स्वधादेव्यै ततो वौषडियमानन्दभैरवी ।
अनेन तौ तु संयोज्य परमानन्दनन्दितौ ॥ ५६ ॥
तदामृते तयोर्योगादमृतं क्षरते चिरम् ।
तयोः पञ्चोपचारेषु ऋचः पञ्च नियोजयेत् ॥ ५७ ॥
प्रथमं प्रकृतेर्हंसः प्रतद्विष्णुरनन्तरम् ।
[3]त्र्यम्बकस्तृतीयः स्याच्चतुर्थस्तत्पदादिकः ॥ ५८ ॥
विष्णुर्योनिं पदादिस्तु पञ्चमः परिकीर्तितः ।
दशधा प्रजपेद् विद्यां संस्पृश्यामृतमद्रिजे ! ॥ ५९ ॥
वाग्भवं कामबीजं च सर्गवान् [4]मनुयुग् भृगुः ।
तथामृते पदं ब्रूयात् पश्चादमृतोद्भवे तथा ॥ ६० ॥

---

१. ङेहन्तं–ख० ।
२. सुधा–ग० ।
३. त्रैययुकः–ख० ।
४. मनुयुग्–ग० ।

अमृतेश्वरि ! तथेत्युक्त्वा पश्चादमृतवर्षिणि ।
अमृतं श्रावययुगं वह्निजायावधिर्मनुः ॥ ६१ ॥

वाग्भवं पदयुग्मं च वाग्वादिनि च वाग्भवम् ।
कामबीजं क्लिन्नेत्युक्त्वा क्लेदिनि क्लेदयेति च ॥ ६२ ॥

महाक्षोभं कुरुयुगं कामराजमतः परम् ।
तार्त्तीयं मोक्षमित्युक्त्वा कुरुयुग्मं वदेत् ततः ॥ ६३ ॥

शक्तिबीजं पुनश्चान्ते सन्दीपनमनुः प्रिये ! ।
सन्दीपनादिकं कृत्वा बोधिन्या बोधयेत् ततः ॥ ६४ ॥

कृताञ्जलिपुटो भूत्वा स्मरेन्मन्त्रं वरानने ! ।
ब्रह्माण्डखण्डसम्भूतमशेषरससम्भवम् ॥ ६५ ॥

आपूरितं महापात्रं पीयूषवहमावह ।
अखण्डैकरसानन्दकरे पञ्चसुधामयि ! ॥ ६६ ॥

स्वच्छन्दस्फुरणामत्र निधेह्यकुलनायिके ! ।
अकुलस्थामृताकारे शुद्धिस्थानकरेऽपरे ॥ ६७ ॥

अमृतत्वं निधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणि ।
स्वरूपे नैकरस्यं च कृत्वाऽस्यैतत्स्वरूपिणि ॥ ६८ ॥

भूत्वाऽपरामृताकारं मय्येतत् स्फुरणं कुरु ।
एवं पात्रचतुष्कं च बटुकादेः पुनर्भवेत् ॥ ६९ ॥

गुरूणां च त्रयं चैकमेकमेवात्मनो भवेत् ।
एवं भवन्ति पात्राणि नवैव ह्युत्तमानि च ॥ ७० ॥

पञ्चपात्रं भवेन्मध्यमधमं त्वेकपात्रकम् ।
गुरवे गुरुपुत्राय तत्पत्न्यै तत् समर्पयेत् ॥ ७१ ॥

---

१. बीजम्–ख० ।

वरशक्त्यै[1] वरं पात्रं निवेद्याऽऽत्मनि योजयेत्[2] ।
एवमेवार्चनाद् देवि ! भवेदमृतमुत्तमम् ॥ ७२ ॥
कुशाग्रेण समादाय अमृतं सर्वपावनम् ।
गुरुत्रयं च सन्तर्प्य बटुकादीन् प्रतर्प्य च ॥ ७३ ॥

ॐ आर्द्रं ज्वलति[3] ज्योतिरेवाहं [4]ब्रह्माहमस्मि साहमस्मि अहमेवाहं मां जुहोमि स्वाहा ॥

प्रलयानलसङ्काशे चिदग्नौ [5]जुहुयात् ततः ।
आत्मनः कुण्डलिन्याश्च हुत्वा वै ब्रह्मरन्ध्रके ॥ ७४ ॥
बीजत्रयेण त्रिः प्राश्य मुद्रया तत्त्वसंज्ञया ।
विशुद्धान्तर्मनाः पूतो योग्यः स्याद् [6]योगकर्मणि ॥ ७५ ॥
अमृतत्वं कवित्वं च प्राश्याऽमृतं लभेन्नरः ।
भ्रंशनादस्य पात्रस्य भूमौ बिन्दुनिपातनात् ॥ ७६ ॥
अशुभं स्यात् तदा तस्य होमाच्छान्तिर्न चान्यतः ।
प्रोक्षयेत् तेन चात्मानं मूलेन वारुणेन वा ॥ ७७ ॥
पूजोपकरणं चापि त्रिरभ्युक्ष्य तथैव हि ।
अमृतैः प्रोक्षितं यत् तु सर्वं ब्रह्ममयं भवेत् ॥ ७८ ॥
यदन्यद् दीयते द्रव्यमलङ्कारादिकं च यत् ।
वरुणस्यैव बीजेन तेषां प्रोक्षणमाचरेत् ॥ ७९ ॥

---

१. शक्तौ—ख० ।
२. इत परम्—'पात्रं यद् बटुकादीनां साधकेभ्यो निवेदयेत्' इत्यधि०—ग० ।
३. 'ज्योतिर्ज्वलति' इत्यधि०—ग० ।
४. ब्रह्माणम् ग० ।
५. मयि वस्तुनः—ग० ।
६. याग—ग० ।

सर्वेषां देवमुच्चार्य मूलमुच्चार्य पूर्वतः ।
अर्घ्यपात्रस्थतोयेन प्रतिनाम्ना निवेदयेत् ॥ ८० ॥

अन्यतोयैस्तु संसृष्टमर्घ्यपात्रस्थितेतरैः ।
तन्न गृह्णातीष्टदेवी दत्तं विधिशतैरपि ॥ ८१ ॥

॥ इति गन्धर्वतन्त्रे त्रयोदशः पटलः ॥ १३ ॥

# चतुर्दशः पटलः

ईश्वर उवाच

आधारशक्तिमारभ्य कामेश्वरान्तमद्रिजे ! ।
पूजयेत् साधको भक्त्या पीठं मन्त्रमयं[1] पुरः ॥ १ ॥

ॐकारबिन्दुमध्यस्थं नामधेयाद्यमक्षरम् ।
देवतानां स्वबीजं तत् पूजायामृद्धिसिद्धिदम् ॥ २ ॥

कामपीठं ततो ध्यात्वा पूजयेत् साधकस्तथा ।
देवं कामेश्वरं तत्र ह्येकवक्त्रं चतुर्भुजम् ॥ ३ ॥

[2]भस्मश्वेतं मध्यहृदि रक्तारक्तं च कुङ्कुमैः ।
त्रिशूलं च पिनाकं च वामहस्तद्वये धृतम् ॥ ४ ॥

उत्पलं बीजपूरं च दक्षिणद्वितये तथा ।
श्वेतपद्मोपरिस्थं च ध्यात्वा मध्ये प्रपूजयेत् ॥ ५ ॥

शक्त्या युक्तो यदा देवि ! साधकः परिचिन्तयेत् ।
आयुधा[3]नपि रूपं च मूलदेव्याः समं निशि ॥ ६ ॥

शाम्भवाख्येन यजेद् देवं पूर्वोक्तेन च साधकः ।
सप्तम्या मूलमुच्चार्य महात्रिपुरसुन्दरी ॥ ७ ॥

[4]अमृतपदमुच्चार्य चैतन्यमूर्तिमादितः ।
कल्पयामीति मनुना मूर्तिं सञ्चिन्तयेत् तथा ॥ ८ ॥

---

१. मन्त्रमध–ख० ।
२. भस्माश्रुतं–ख० ।
३. आयुधानयरूपञ्च–ख० ।
४. अमृतं–ग० ।

देवीं कामेश्वराङ्कस्थां परमानन्दनन्दिताम् ।
साधकाय प्रयच्छन्तीं पुरुषार्थचतुष्टयम् ॥ ९ ॥
आनन्दालसया दृष्ट्या वीक्षन्तीं करुणार्द्रया ।
नाराचमुद्रया पश्चाद् [1]रक्षामन्त्रेण कारयेत् ॥ १० ॥
अवगुण्ठ्य ततो मन्त्री कुर्याद् दिग्बन्धनं ततः ।
प्राणायामं ततः कृत्वा गृह्णीयात् कुसुमाञ्जलिम् ॥ ११ ॥
पुष्पाञ्जलिं विना देवीं नावाहयेत् कदाचन ।
ततो ध्यायेन्महादेवीं यथोक्तां परमेश्वरीम् ॥ १२ ॥
प्रत्यक्षीकृत्य हृदये जितप्राणोऽथ साधकः ।
ऐक्यं सञ्चिन्तयेद् देव्या बाह्यान्तर्मूर्तियुग्मयोः ॥ १३ ॥
ततस्तु वायुबीजेन वह्न्यासापुटेन तु ।
तच्चैतन्यं विनिःसार्य पुष्पाञ्जलौ निवेशयेत् ॥ १४ ॥
नासिकावायुनिःसारात् पुष्पस्था देवता भवेत् ।
यावत् संस्थापयेद् देवीं स्वहस्तं न वियोजयेत् ॥ १५ ॥
कृते वियोगे हस्तस्य पुष्पात् तस्मान्महेश्वरि ! ।
गन्धर्वैः पूज्यते देवी पूजकैर्नाऽऽप्यते फलम् ॥ १६ ॥
त्रिखण्डामुद्रया तस्मात् तामावाहनविद्यया ।
[2]निर्गमय्यातिदीप्ताभां श्रीपीठान्तर्निधा[3]पयेत् ॥ १७ ॥
पाणिद्वयं समं सम्यक् परिवर्तनयोगतः ।
योजयित्वा तर्जनीभ्यां मनो मे धारयेत् ततः ॥ १८ ॥
मध्यमे योजयेन्मध्ये कनिष्ठे तदधस्ततः ।
अङ्गुष्ठावपि संयोज्यौ त्रिधा युग्मक्रमेण तु ॥ १९ ॥

---

१. रक्ष्य–ख० ।
२. निर्गमर्या–ख० ।
३. निधारयेत्–ख० ।

त्रिखण्डेयं महामुद्रा त्रिपुराह्वानकर्मणि ।
हंसबीजसमारूढा बाला चाग्न्यासनस्थिता ॥ २० ॥

अनया मूलमुच्चार्य मुद्रयाऽथ त्रिखण्डया ।
महापद्मवनान्तःस्थे कारणानन्दविग्रहे ॥ २१ ॥

सर्वभूतहिते मातरेह्येहि परमेश्वरि ! ।
देवेशि ! भक्तिसुलभे परिवारसमन्विते ॥ २२ ॥

अस्यां [1]मूर्तौ समागच्छ स्थितिं मत्कृपया कुरु ।
एहि देवि ! प्रभावात् ते शुभदे भयनाशिनि ! ॥ २३ ॥

यावत् त्वां पूजयिष्यामि तावत् त्वं सुस्थिरा भव ।
कामेशि ! त्वमिहागच्छ सर्वैः परिकरैः सह ॥ २४ ॥

पूजाकर्मणि सान्निध्यमिह कल्पय कामिनि ! ।
कामेश्वरि ! समागच्छ कामेशाङ्कनिषेदुषि ! ॥ २५ ॥

अव्युच्छिन्नां मतिं शुद्धां वाचं कण्ठस्य देहि मे ।
एवं कृते महादेवि ! स्थितिस्तस्याः प्रजायते ॥ २६ ॥

सम्यक् सम्पूरितः पुष्पैः कराभ्यां कल्पितोऽञ्जलिः ।
आवाहनी समाख्याता मुद्रा सर्वार्थसाधिका ॥ २७ ॥

अधोमुखी कृता सैव तदा वै स्थापनी भवेत् ।
मिलितं मुष्टियुगलं सन्निधापनरूपिणी ॥ २८ ॥

अन्तरङ्गुष्ठमुष्ट्या तु सन्निरोधनरूपिणी ।
एतस्या एव मुद्रायास्तर्जन्यौ सवने यदा ॥ २९ ॥

अवगुण्ठनमुद्रेयं सर्वरक्षाकरी मता ।
अमृतीकरणं कुर्यात् साधको धेनुमुद्रया ॥ ३० ॥

१. 'मूर्तौ' नास्ति–ग० ।

परिवर्त्य करौ पश्चात् तर्जनीमध्यमे युगे ।
कनिष्ठाऽनामिकायुग्मं परस्परयुतं कुरु ॥ ३१ ॥
धेनुमुद्रेयमाख्याता अमृतीकरणे प्रिये ! ।
अङ्गमन्त्रान् न्यसेद् देवि ! देव्यङ्गे साधकोत्तमः ॥ ३२ ॥
सकलीकरणं नाम मुद्रेयं व्याप्तिरूपिणी ।
अन्योन्यग्रथिताङ्गुष्ठा प्रसारितकराङ्गुलिः ॥ ३३ ॥
महामुद्रेयमाख्याता परमीकरणे शिवे ।
ततोऽवगुण्ठयेद् देवीमवगुण्ठनमुद्रया ॥ ३४ ॥
आवाहनं भवेद् देवि ! दूरादाह्वानमेव च ।
संस्थापनं भवेद् देव्या निश्चलत्वोपपादकम् ॥ ३५ ॥
नैकट्यावस्थितित्वं च सन्निधानमितीरितम् ।
अनन्यचित्तता याश्चा सन्निरोधनमुच्यते ॥ ३६ ॥
सम्पूर्णावस्थितेर्याश्चा सकलीकरणं प्रिये ! ।
अयोग्य[1]दृष्टयविषतापादनम् अवगुण्ठनम् ॥ ३७ ॥
आनन्दपूर्णावस्थितित्वममृतीकरणं शिवे ! ।
सर्वापराधजातानां सहिष्णुत्वप्रकाशकम् ॥ ३८ ॥
परमीकरणं नाम सम्प्रार्थनमिहोच्यते ।
सम्मुखमुद्रया देवीं सम्मुखं प्रार्थयेत् ततः ॥ ३९ ॥
मुष्टिद्वयस्थिताङ्गुष्ठौ सम्मुखौ च परस्परम् ।
संश्लिष्टावुच्छ्रितौ कुर्यात् सेयं[2] सम्मुखमुद्रिका ॥ ४० ॥
मूलविद्यां समुच्चार्य महात्रिपुरसुन्दरी ।
श्रीपादुकां ततः पश्चात् पूजयामीति भक्तितः ॥ ४१ ॥

---

१. दृष्टाविषयतापादो–ख० ।
२. श्रेयः–ख० ।

देवीपादाम्बुजद्वन्द्वे पुष्पाञ्जलित्रयं दिशेत् ।
तथैव तर्पयाम्यन्ते मुद्रया तर्पयेत् त्रिधा ॥ ४२ ॥

प्रार्थनामुद्रया पश्चादभ्यर्थयेदनेन तु ।
प्रसादसुमुखे देवि ! प्रसन्ना भव सुन्दरि ! ॥ ४३ ॥

पूजाभागं गृहाणेमं मामकं भक्तवत्सले ! ।
अहं यद्यपि देवेशि ! दुर्बलोऽप्यल्पसाधनः ॥ ४४ ॥

भक्त्या करोमि पूजां ते कृपयाऽनुगृहाण माम् ।
प्रसृताङ्गुलिकौ हस्तौ मिथः श्लिष्टौ च सम्मुखौ ॥ ४५ ॥

कार्यौ च हृदये सेयं मुद्रा प्रार्थनसंज्ञिका ।
सन्दर्शयेत् स्वस्वबीजपूर्वं मुद्रास्ततो नव ॥ ४६ ॥

सङ्क्षोभद्रावणाकर्षव[1]श्योन्मादमहाङ्कुशाः ।
खेचरीबीजयोन्याख्या नवमुद्रास्त्वनु[2]क्रमात् ॥ ४७ ॥

एता मुद्रा महेशानि ! बन्धूककुसुमप्रभाः ।
स्वस्वमुद्राकराः सर्वाः श्रीविद्या सम्मुखी स्मरेत् ॥ ४८ ॥

अथैवं परमेशान्या उपचारान् निवेदयेत् ।
भक्त्यैवैते [3]कृता देवे साधकं देवसन्निधिम् ॥ ४९ ॥

चारयन्ति यतस्तस्मादुच्यन्ते चोपचारकाः ।
समीपे चारणाद् वापि [4]फलायाऽन्ते तथोदिताः ॥ ५० ॥

नमोऽन्तमासनं दद्यात् स्वागतं दर्शनं भवेत् ।
नमोऽन्तं पादयोः पाद्यमर्घ्यं शिरोऽन्तमेव च ॥ ५१ ॥

---

१. वल्लयोन्मदमहाङ्कुशाः–ख० ।

२. ततः–ख० ।

३. कृते–ग० ।

४. कलाकान्ते–ख० ।

स्वधेत्याचमनं प्राज्ञि ! मधुपर्कं तथैव च ।
तेनैव मनुनाचामं नमोऽन्तं स्नानमेव च ॥ ५२ ॥

नमोऽन्ते वाससी प्रोक्ते तथाङ्गाभरणानि च ।
नमोऽन्तमर्पयेत् कुन्दं पुष्पं च वौषडन्तकम् ॥ ५३ ॥

पुष्पं समर्पयेद् देव्यै मुद्रया ज्ञानसंज्ञया ।
[1]अङ्गुष्ठतर्जनीयोगाज्ज्ञानमुद्रेयमीरिता ॥ ५४ ॥

नमोऽन्तं च तथा धूपं दीपमालां तथैव च ।
नैवेद्यं च ततो दद्याद् यथोक्तं वै चतुर्विधम् ॥ ५५ ॥

पानार्थं मधुरं वारि दद्यादाचमनं पुनः ।
कर्पूरसहितं देव्यै ताम्बूलं च निवेदयेत् ॥ ५६ ॥

तर्पणानि पुनर्दद्यात् त्रिपुरातत्त्वमुद्रया ।
अङ्गुष्ठानामिकायोगं तत्त्वमुद्रेयमीरिता ॥ ५७ ॥

अङ्गुष्ठं शिवमित्याहुरनामा शक्तिरुच्यते ।
तर्पणस्तु तयोर्योगादमृतैर्वामपाणिना ॥ ५८ ॥

योनिमुद्रां प्रदर्श्याथ मुद्राः सन्दर्शयेत् क्रमात् ।
स्तुत्वा प्रणम्य विधिवज्जपेद् विद्यामनन्यधीः ॥ ५९ ॥

जपान्ते जुहुयादग्निं होमान्ते बलिमुत्सृजेत् ।
बलिदानावसाने तु निवेद्यानि निवेदयेत् ॥ ६० ॥

दशाङ्गाद्यैस्ततो धूपैः पुनर्देवीं प्रधूपयेत् ।
दीपमालां प्रदर्श्याथ पादाल्ललाटकावधि ॥ ६१ ॥

वीरेश्वराय वौषट् सिन्दूरं दापयेदथ ।
अङ्गरागेषु सिन्दूरं पानेषु[2] मदिरां तथा ॥ ६२ ॥

---

१, अङ्गुष्ठा–ख० ।
२. मानेषु–ख० ।

वस्त्रेषु रक्तकौषेयं त्रिपुराप्रीतिदायकम् ।
नेत्राञ्जनं निवेद्याथ दर्शयेद् दर्पणं ततः ॥ ६३ ॥

मूर्ध्नि छत्रं निधायाथ वीजयेद् रक्तचामरैः ।
सितैर्वा परमेशानीं न तु कृष्णैः कदाचन ॥ ६४ ॥

वादयन् शङ्खघण्टे च पुनः पुनः प्रधूपयेत् ।
ततः सन्तोषयेद् देवीं गीतवादित्रनिःस्वनैः ॥ ६५ ॥

वाद्यैर्नानाविधैर्देवि ! क्रीडाकौतुकमङ्गलैः ।
नटनर्त्तकसङ्घैश्च[1] वेश्याभिरपि पार्वति ! ॥
आत्मानं सर्वभावेन निवेद्य तन्मयो भवेत् ॥ ६६ ॥

॥ इति गन्धर्वतन्त्रे चतुर्दशः पटलः ॥ १४ ॥



---

१. संहैश्च–ख० ।

# पञ्चदशः पटलः

देवी उवाच

उपचाराः कथं देव ! फलं तेषां च कीदृशम् ।
यच्च प्रियतमं देव्यास्तत् सर्वं वद शङ्कर ! ॥ १ ॥

ईश्वर उवाच

उपचारान् प्रवक्ष्यामि शृणु षोडश पार्वति ! ।
[1]यैः सम्यक् तुष्यते देवी विधिना विहितैरिह ॥ २ ॥

सौवर्णं राजतं [2]वास्त्रं तथा रत्नविनिर्मितम् ।
आसनं प्रथमं दद्यात् पौष्पं दारवमेव च ॥ ३ ॥

न पत्रमासनं दद्यात् कदाचिदिह पूजने ।
यथोक्तविधिना देव्यै रक्तकम्बलमेव वा ॥ ४ ॥

[3]स्वसुमेरुपादपीठान्ते पद्मकल्पितमासनम् ।
भोगमोक्षप्रदे ! मातस्तिष्ठस्व परमेश्वरि ! ॥ ५ ॥

अनेनैवासनं देव्यै यो दद्याद् विहितं शिवे ! ।
[4]भुक्तिमुक्ती करे तस्य सर्वत्र स्थानवान् भवेत् ॥ ६ ॥

पाद्यार्थमुदकं पाद्यं चन्दनागुरुसंयुतम् ।
सुशीतलं मया देवि ! सुखाय तव पादयोः ॥ ७ ॥

तत् तैजसेन पात्रेण शङ्खेनाथ प्रदापयेत् ।
धर्मार्थकाममोक्षाणां संस्थानं पादमिष्यते ॥ ८ ॥

---

१. यैः साम्यात् तुष्यते देवी विधानैरिडितैर्विदुः–ख० ।

२. वास्त्रः–ख० ।

३. सुमेरुः पाद–ग० ।

४. भुवि–ग० ।

पाद्यमन्त्रं मया प्रोक्तमनेनैव निवेदयेत् ।
अर्घ्येण लभते कामान् अर्घ्येण [1]लभते धनम् ॥ ९ ॥
पुत्रायुःसुखमोक्षाणि दानादर्घ्यस्य वै लभेत् ।
पूर्वसंस्थापितेनैव शङ्खेन विधिना स्वयम् ॥ १० ॥
श्वेतसर्षपमुद्गाभ्यां तिलक्षीरैस्तथा यवैः ।
[2]रक्तचन्दनपुष्पैश्च त्रिपुरायै महेश्वरि ! ॥ ११ ॥
निधाय पुरतो दद्यादर्घ्यमन्त्रेण साधकः ।
अर्घ्यमर्घ्यमिदं देवि ! मया भक्त्या निवेदितम् ॥ १२ ॥
सजलं शङ्खपात्रस्थं गृहीत्वा मूर्ध्नि योजय ।
उदकं दीयते यत् तु सगन्धं[3] फेनवर्जितम् ॥ १३ ॥
[4]आचमनार्थं देवाय तदाऽऽचमनमुच्यते ।
कर्पूरैर्वासितैर्वापि कालागुरुप्रधूपितैः ॥ १४ ॥
यथा तथा सुगन्धैर्वा प्रसन्नैः [5]फेनवर्जितैः ।
दद्यादाचमनीयं तु सुगन्धसलिलैः शुभैः ॥ १५ ॥
तैजसेन तु पात्रेण शङ्खेनाऽप्यथवा प्रिये ! ।
आयुर्बलं यशो वृद्धिं प्रदायाऽऽचमनीयकम् ॥ १६ ॥
लभते साधको नित्यं [6]कामांश्चैव यथेप्सितान् ।
सुगन्धाचमनं देवि ! मया भक्त्या निवेदितम् ॥ १७ ॥
आयुर्बलयशोवृद्ध्यै तदिदं प्रतिगृह्यताम् ।
दधि सर्पिर्जलं क्षौद्रं सिताभिश्चापि पञ्चभिः ॥ १८ ॥

---

१. लभ्यते–ख० ।
२. अयं–ग० ।
३. यस्तु–ख० ।
४. आचमनाद्यं–ख० ।
५. फेण–ख० ।
६. समाश्चैव–ख० ।

प्रोच्यते मधुपर्कस्तु देवीप्रीतिप्रदायकः ।
जलं च नारिकेलोत्थं सितादधिघृतं समम् ॥ १९ ॥

सर्वेषामधिकं चौद्रं मधुपर्के प्रयोजयेत् ।
तद् दद्यात् कांस्यपात्रेण रौक्मपात्रेण[1] वा पुनः ॥ २० ॥

ज्योतिष्टोमाश्वमेधादौ यत् पुण्यं लभते नरः ।
सर्वं तत् परमेशानि ! मधुपर्के प्रतिष्ठितम् ॥ २१ ॥

आज्यं दधिमधून्मिश्रं जलं चापि सशर्करम् ।
मधुपर्कं रौक्मपात्रे गृहीत्वा भुङ्क्ष्व सुन्दरि ! ॥ २२ ॥

मधुपर्कं विना पूजा साधकक्षयकारिणी ।
मधुपर्कमदृष्ट्वैव[2] साधकं भक्षयेत् [3]पुरा ॥ २३ ॥

कर्पूराऽगुरुकस्तूरीरोचनाकुङ्कुमं तथा ।
नारिकेलजलं क्षौद्रं तथेक्षुरसमुत्तमम् ॥ २४ ॥

सितां च पञ्चगव्यं च सर्वौषधिगणं तथा ।
प्रान्ते तोयमिति प्रोक्तं स्थानीयं त्रिपुराप्रियम् ॥ २५ ॥

भृङ्गारेणाऽथवा शङ्खैस्त्रिपुरायै निवेदयेत् ।
साधकः स्नानदानात् तु हयमेधफलं लभेत् ॥ २६ ॥

दीर्घायुः कामभोगी च महापातकता भवेत् ।
प्रत्येकं सर्ववस्तूनां सहस्रपलमानतः ॥ २७ ॥

महास्नानं भवेद् देवि ! मध्यमपलशतेन तु ।
कनिष्ठं वै भवेत् स्नानं पलानां दशभिरीरितम् ॥ २८ ॥

---

१. रौक्य–ख० ।
२. असृष्ट्वैव–क० ।
३. परा–ख० ।

मिश्रीकृतैस्तु सर्वेषां स्नाने मानं[1] न विद्यते।
स्नापयेत् प्रथमं देवीं त्रिपादिति ऋचा पुनः ॥ २९ ॥

मूलेनापि ततः पश्चादमुना च निवेदयेत्।
त्वमापः पृथिवी चैव ज्योतिस्त्वं वायुरेव च ॥ ३० ॥

केवलं भक्तिभावेन देवि! त्वां स्नापयाम्यहम्।
स्नापयित्वा महादेवीं वस्त्रं यदि न दापयेत् ॥ ३१ ॥

स निर्ल्लज्जः परः[2] पापः प्रपतेद् वृजिनार्णवे।
वस्त्राभावे ततो दद्याद् रक्तपद्मं तथा जवाः ॥ ३२ ॥

स्नापयित्वा महादेवीं वस्त्रयुग्मं प्रदापयेत्।
वस्त्रेण [3]ह्रियते लज्जा वस्त्रेण ह्रियते त्वघम् ॥ ३३ ॥

सर्वभूषणवर्गेषु वस्त्रमुत्तममुच्यते।
देवीप्रीतिकरं वस्त्रं चतुर्वर्गप्रदं शुभम् ॥ ३४ ॥

निर्दशं मलिनं जीर्णं छिन्नं गात्रावलिङ्गितम्।
[4]परकीयं ह्याखुदष्टं सूचीविद्धं तथोषितम् ॥ ३५ ॥

सत्पताकावितानादौ[6] सूचीविद्धं प्रयोजयेत्।
केशान्वितमधौतं च श्लेष्ममूत्रादिदूषितम् ॥ ३६ ॥

वह्निदग्धं[5] कुचेलं च महादेव्यै न दापयेत्।
चित्रवस्त्रं दुकूलं च देवीप्रीतिकरं परम् ॥ ३७ ॥

---

१. म्लानं–ख।
२. वरं–ख०।
३. क्रियते–ख०।
४. परकायं–ख०।
५. दग्धं–ख०।
६. रितामादौ–ख०।

सर्वसिद्धिप्रदं वस्त्रं वह्निहोमफलप्रदम् ।
विद्यातन्तुसमायुक्ते मन्त्रवर्णसमन्विते ॥ ३८ ॥
विद्याविद्ये जपाशोणवाससी तव सुन्दरि ! ।
उद्यदादित्यसङ्काशं वासोयुग्मं सुनिर्मलम् ॥ ३९ ॥
नूतनं गात्रसुखदं परिधत्स्व सुरेश्वरि ! ।
किरीटं च शिरोरत्नं कुण्डलं च ललाटिका ॥ ४० ॥
तालपत्रं च हारं च ग्रैवेयकमथोर्मिका ।
सूत्रावलीकेशपाशे [1]ताटङ्कवलयाङ्गदौ ॥ ४१ ॥
पादाङ्गुलीयकं सूत्रं नूपुरं क्षुद्रघण्टिका ।
अलङ्काराः समाख्यातास्त्वलङ्कारेषु षोडश ॥ ४२ ॥
चतुर्वर्गप्रदं नित्यं भूषणं सर्वसौख्यदम् ।
तुष्टिपुष्टिप्रदं नित्यं यथाशक्त्या निवेदयेत् ॥ ४३ ॥
नवरत्नसमायुक्ता द्रुतहाटककल्पिताः ।
गात्राणि शोभयन्त्वेते अलङ्कारास्तु[2] सुन्दरि ! ॥ ४४ ॥
[3]कामेशि ! कामरूपे त्वं सर्वकामफलप्रदे ।
भूषणं गृहाण चार्वङ्गि ! मया भक्त्या निवेदितम् ॥ ४५ ॥
चूर्णीकृतो वा घृष्टो वा दाहाकर्षित एव वा ।
रसः सम्मर्दजो वापि प्राण्यङ्गोद्भव एव वा ॥ ४६ ॥
गन्धः पञ्चविधः प्रोक्तो देवीप्रीतिप्रदायकः ।
प्रशस्तगन्धयुक्ता तु गन्धचूर्णानि यानि च ॥ ४७ ॥
तानि गन्धाह्वयानि स्युः स गन्धः प्रथमः स्मृतः ।
घृष्टो मलयजो गन्धः [4]सरलश्च नमेरुणा ॥ ४८ ॥

---

१. ताडङ्क–ख० ।
२ अवलयान्ददौ–ख० ।
३. कामेशे–ग० ।
४. सबलश्च–ख० ।

अगुरुप्रभृतिश्चापि यस्य पङ्कः प्रदीयते ।
अगुरुर्देवदार्वादि यो दग्ध्वा गृह्यते रसः ॥ ४९ ॥

स दाहाकर्षितो गन्धस्तृतीयः परिकीर्तितः ।
सुगन्धगन्धिनीं बिल्वतिलकं शतपत्रिकाम् ॥ ५० ॥

निष्पीड्य गृह्यते योऽसौ सम्मर्दजः स उच्यते ।
मृगनाभिसमुद्भूतस्तत्कोषोद्भव एव वा ॥ ५१ ॥

गन्धः प्राण्यङ्गजः प्रोक्तः पञ्चमस्तु स उच्यते ।
गन्धस्य विस्तरो भेदो [1]दिङ्मात्रं समुदाहृतम् ॥ ५२ ॥

सर्वेषु गन्धजातेषु प्रशस्तो मलयोद्भवः ।
तस्मात् सर्वप्रयत्नेन दद्यान्मलयजं सदा ॥ ५३ ॥

कुङ्कुमागुरुकस्तूरीक[2]र्पूरैर्मलयोद्भवैः ।
समीकृतैस्तु यो गन्धस्त्रिपुराप्रीतिदायकः ॥ ५४ ॥

कुचन्दनं शितं चैव कालीयकसमन्वितम् ।
अनुलेपनमुख्यं तु देव्याः प्रीतिकरं परम् ॥ ५५ ॥

अलक्तं नखरागेषु[3] देवीप्रीतिकरं तथा ।
गन्धेन लभते कामान् गन्धो धर्मप्रदः सदा ॥ ५६ ॥

[4]अर्थानां साधको गन्धो मोक्षे चापि प्रतिष्ठितः ।
शरीरं तेन जानामि चेष्टां चैव महेश्वरि ! ॥ ५७ ॥

मया निवेदितान् गन्धान् प्रतिगृह्य विलिप्यताम् ।
गन्धैः सुतोषिता देवी चतुर्वर्गप्रदा भवेत् ॥ ५८ ॥

---

१. दिङ्मात्र–ख० ।
२. कर्पूरमलयजे–ग० ।
३. रागेषु–ख० ।
४. अन्वानां–ख० ।

अनेनैव महेशानि ! गन्धान् देव्यै निवेदयेत् ।
घृततैलादियोगेन स्वर्णादौ दीपवह्निना ॥ ५९ ॥

यदञ्जनं प्रजायेत कृत्वा कर्पूरमिश्रितम् ।
धर्मार्थकाममोक्षार्थं त्रिपुरायै निवेदयेत् ॥ ६० ॥

[1]विधवा नाञ्जनं कुर्यान्महामायार्थमद्रिजे ! ।
न [2]मृत्पात्रगतं कुर्यात् साधको नेत्ररञ्जनम् ॥ ६१ ॥

न पूजाफलमाप्नोति मृत्पात्रविहिताञ्जनैः ।
परकीयांस्तथाघ्रातांस्तेषां[3] कृत्याभिमर्दितान् ॥ ६२ ॥

पुष्पं धूपं च गन्धं च नोपचारांस्तथापरान् ।
घ्रातान् निवेद्य देवेशि ! नरो नरकमाप्नुयात् ॥ ६३ ॥

नैव पर्युषितैः पुष्पैः पत्रैश्चापि महेश्वरीम् ।
पूजयेत् परमेशानि ! महात्रिपुरसुन्दरीम् ॥ ६४ ॥

सर्वं पर्युषितं वर्ज्यं पत्रं पुष्पं फलं तथा ।
पद्मानि सितरक्तानि कुमुदान्युत्पलानि च ॥ ६५ ॥

एषां पर्युषिताऽऽशङ्का कार्या पञ्चदिनोर्ध्वतः ।
अन्येषां कुसुमानां च यावद् गन्धविपर्ययः ॥ ६६ ॥

बिल्वपत्रे महेशानि ! नास्ति पर्युषितात्मता ।
बकुलं केशरं वज्रं माल्यं कुन्दं च शाल्मलम् ॥ ६७ ॥

करवीरं चार्कपुष्पं बन्धूककमले तथा ।
मालती मल्लिका जाती यूथिका माधवी तथा ॥ ६८ ॥

---

१. विधिवन्नाञ्छनं–ख० ।
२. मृतपात्रे–ख० ।
३. स्तेयी–ग० ।

तगरः कर्णिकारश्च द्रोणश्चोत्पल[1]चम्पकौ ।
अशोकः कुमुदश्चैव शेफालिकाकदम्बकौ ॥ ६९ ॥

केतकी वनमाला च कुसुम्भकिंशुकौ तथा ।
कह्लारबकुले चैव लवङ्गनागकेशरौ ॥ ७० ॥

सर्वेषु पुष्पजातेषु त्रिपुरायाः सदैव हि ।
एतान्येव प्रियाणि स्युर्न पत्रैरर्चयेच्छिवाम् ॥ ७१ ॥

पत्रेषु बिल्वपत्रं च तथा [2]दमनपल्लवम् ।
दूर्वाङ्कुरं तथा प्रोक्तं नान्यत् पत्रं प्रयोजयेत् ॥ ७२ ॥

मल्लिका मालती कुन्दो द्रोणश्चाथ सिताम्बुजम् ।
शुक्लपक्षे[3] महादेवि ! त्रिपुरायै निवेदयेत् ॥ ७३ ॥

सर्वेषां पुष्पजातीनां रक्तपद्मं तथा जपा ।
देवीप्रीतिकरं प्राज्ञे सर्वकामफलप्रदम् ॥ ७४ ॥

रत्नपुष्पं च देवेशि ! तथा स्वर्णादिनिर्मितम् ।
रक्तपद्मेन वज्रेण तुलां नायाति कर्हिचित् ॥ ७५ ॥

एतेषां पुष्पजातानां येन केन विनिर्मिताम् ।
मालां कृत्वा महादेव्यै यत् फलं लभते नरः ॥ ७६ ॥

अपि वक्त्रसहस्रैस्तु वक्तुं नालं [4]ततः प्रभुः ।
पुष्पमूले वसेद् ब्रह्मा पुष्पमध्ये तु केशवः ॥ ७७ ॥

---

१. चपल–ख० ।
२. मदन–ख० ।
३. पद्मे–ग० ।
४. तदिह नो प्रभुः–ग० ।

पुष्पाग्रेऽहं[1] स्थितो नित्यं सर्वे देवाः स्थिता दले ।
चराचराश्च सकलाः सदा पुष्परसाः स्मृताः ॥ ७८ ॥

परं ज्योतिः पुष्पगतं पुष्पेनैव प्रसीदति ।
भोगमोक्षप्रदं पुष्पं तुष्टिश्रीपुष्टिमोददम् ॥ ७९ ॥

पुष्पैर्देवी प्रसन्ना स्याद् धर्मकामार्थदायिनी ।
तस्मात् पुष्पैर्यजेद् देवीं नित्यं भक्तियुतो नरः ॥ ८० ॥

ब्रह्मविष्णुशिवादीनां पुष्पमेव सदा प्रियम् ।
तत् ते मातः ! प्रयच्छामि पवित्रं प्रतिगृह्यताम् ॥ ८१ ॥

उग्रगन्धमगन्धं च कृमिकेशादिदूषितम् ।
अशुद्धपात्रपाणिस्थं वासोभिः कुत्सितात्मभिः ॥ ८२ ॥

आनीतं नार्पयेद् देव्यै प्रमादादपि दोषकृत् ।
स्नात्वाऽऽनीतैः पर्युषितैर्याचितैः कृष्णवर्णकैः ॥ ८३ ॥

स्वयं विकसितैर्मुक्तैः स्वयं च पतितैर्भुवि ।
नार्चयेत् कलिकाभिश्च विना चम्पकपङ्कजैः ॥ ८४ ॥

पुष्पं वा यदि वा पत्रं फलं नेष्टमधोमुखम् ।
दुःखदं तत् समाख्यातं यथोत्पन्नं तथार्पणम् ॥ ८५ ॥

चित्रपूजासु सर्वासु न विरुद्धं न दूषणम् ।
अधोमुखार्पणं नेष्टं पुष्पाञ्जलिविधिं विना ॥ ८६ ॥

किं चातिबहुनोक्तेन सामान्येनेदमुच्यते ।
उक्तान्मुक्तैस्तथा पुष्पैर्जलजैः स्थलजैरपि ॥ ८७ ॥

पत्रैः सर्वैर्यथालाभं भक्तिमान् सततं यजेत् ।
पुष्पाभावे यजेत् पत्रैः पत्रालाभे च तत्फलैः ॥ ८८ ॥

---

१. ऽयं–ख० ।

अक्षतैर्वा जलैर्वापि न पूजां व्यतिलङ्घयेत् ।
एतेषामप्यलाभे तु मानसीं भक्तिमाश्रयेत् ॥ ८९ ॥

दह्यमानस्य काष्ठादेर्निस्तापो यस्य जायते ।
नासादिरन्ध्रसुखदः सुगन्धोऽतिमनोहरः ॥ ९० ॥

स धूप इति विज्ञेयो देवीप्रीतिप्रदायकः ।
पत्रं मुस्तं नखं कुष्ठं जटामासीं च शैलजम् ॥ ९१ ॥

सरलं देवकाष्ठं च जतुसर्जसचन्दनम् ।
कपिलाघृत-कर्पूरशर्करा-पुरमिश्रितम् ॥ ९२ ॥

षोडशाङ्गो महाधूपः षोडशीप्रीतिदायकः ।
न भूमौ वितरेद् धूपं नासने कलशे न तु ॥ ९३ ॥

यथा तथाऽऽधारगतं कृत्वा तं तु निवेदयेत् ।
वनस्पतिरसोत्पन्नो गन्धाढ्यो गन्ध उत्तमः ॥ ९४ ॥

आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ।
अथ दीपं प्रवक्ष्यामि ज्योतिष्टोमफलप्रदम् ॥ ९५ ॥

घृतदीपस्तु प्रथमस्तिलतैलोद्भवस्तथा ।
सार्षपश्चाधमः प्रोक्तस्तदन्यो निन्दितः स्मृतः ॥ ९६ ॥

पद्मसूत्रभवा चाद्या कार्पाससम्भवा परा ।
दर्भगर्भभवा चापि वर्तिका परिकीर्तिता ॥ ९७ ॥

कोषजं रोमजं वास्त्रं मलिनं पर्युषितं तथा ।
वर्तिकार्थं न चाद्यात् साधको भूतिमिच्छुकः ॥ ९८ ॥

तैजसं पार्थिवं लोहं दीपपात्रं प्रशस्यते ।
दीपवृक्षाश्च कर्तव्यास्तैजसाद्याः पृथक् पृथक् ॥ ९९ ॥

वृक्षे दीपः प्रदातव्यो न तु भूमौ कदाचन ।
कुर्वन्तं पृथिवीतापं यो दीपमुत्सृजेन्नरः ॥१००॥

तामिस्रं नरकं घोरमाप्नोत्येव न संशयः।
नेत्राह्लादकरः स्वर्चिर्दूरतापविवर्जितः ॥१०१॥

[1]सुशिखः शब्दरहितो निर्धूमो नातिह्रस्वकः।
दीपवृक्षस्थिते पात्रे शुद्धस्नेहप्रपूरिते ॥१०२॥

दक्षिणावर्तवर्त्या वै चारुदीप्तः प्रदीपकः।
उत्तमः प्रोच्यते सोऽत्र त्रिपुराप्रीतिदायकः ॥१०३॥

वृक्षेण वर्जितो दीपो मध्यमः परिकीर्तितः।
विहीनः पात्रतैलाभ्यां मध्यमः परिकीर्तितः ॥१०४॥

दीपमाला प्रकर्तव्या नैकदीपः कदाचन।
त्रयो दीपाः प्रदातव्याः पञ्च वा परमेश्वरि ! ॥१०५॥

इतो न्यूनं न दातव्यं त्रिपुरायै कदाचन।
नैव दीपः प्रदातव्यो विधूतः श्रीविवृद्धये ॥१०६॥

न मिश्रीकृत्य दद्यात् तु दीपस्नेहान् घृतादिकान्।
कृत्वा मिश्रीकृतं स्नेहं रौरवं नरकं व्रजेत् ॥१०७॥

नैव निर्वापयेद् दीपं देवार्थमपि कल्पितम्।
दीपहर्ता भवेदन्धः काणो निर्वापको भवेत् ॥१०८॥

न तेन व्यवहारोऽपि कर्तव्यः साधकोत्तमैः।
सूर्याचन्द्रमसोर्ज्योतिर्विद्युदग्नेस्तथैव च ॥१०९॥

त्वमेव ज्योतिषां ज्योतिर्दीपोऽयं प्रतिगृह्यताम्।
दीपं दक्षिणतो देव्याः पुरतो न तु वामतः ॥११०॥

वामतस्तु तथा धूपमग्रे वा न तु दक्षिणे।
निवेदयेत् पुरोभागे गन्धं पुष्पं च भूषणम् ॥१११॥

---

१. सशिखः–ख०

नैवेद्यं दक्षिणे वामे पुरतो वा न पृष्ठतः ।
गात्रे दातुं च यद् योग्यं यन्त्रेष्वेव निवेदयेत् ॥११२॥

दद्यादयोग्यं पुरतो नैवेद्यं भोजनादिकम् ।
मदिरां पृष्ठतो दद्यादन्यपानं तु वामतः ॥११३॥

या विद्या चेह देवेशि ! श्रीविद्यायामनासवी ।
फलहीना समाख्याता साभिचाराय कल्पते ॥११४॥

॥ इति गन्धर्वतन्त्रे पञ्चदशः पटलः ॥ १५ ॥



## षोडशः पटलः

इक्षुरसं समादाय पर्युषितं सुसंस्कृतम् ।
सहकाररसं तत्र निक्षिपेन्मधुना सह ॥ १ ॥

बादरं जाम्बरं चैव रसं खार्जूरमेव च ।
नारिकेलोद्भवं तत्र द्राक्षारसमनुत्तमम् ॥ २ ॥

मोहिनीफलजं चूर्णं जातीकोषरजस्तथा ।
[1]कणकाबीजचूर्णं च जातीफलसमुद्भवम् ॥ ३ ॥

त्रिजातं त्रिसुगन्धि च त्रिकटुं त्रिफलान्वितम् ।
तथान्येषां च द्रव्याणां सुगन्धीनां रजः शिवे ! ॥ ४ ॥

किञ्चित् किञ्चिच्च निक्षिप्य कर्पूरैश्चाधिवासयेत् ।
स्वर्णे वा राजते पात्रे काचपुटेऽथवा प्रिये ! ॥ ५ ॥

स्थापयित्वा सितां तत्र निक्षिपेत् परमेश्वरि ! ।
निक्षिप्य लोहितैर्देवि ! वस्त्रैराच्छाद्य यत्नतः ॥ ६ ॥

सप्तरात्रोषितं तत् तु जायते ह्यमृतोपमम् ।
चन्दनागुरुकर्पूरैर्धूपयित्वा निवेदयेत् ॥ ७ ॥

एषा सर्वोत्तमा प्रोक्ता देवीप्रियतमा सदा ।
मदिरेति समाख्याता परमानन्ददायिनी ॥ ८ ॥

एनां निवेद्य सुन्दर्यै सर्वसिद्धिमुपालभेत् ।
देवीलोके चिरं स्थित्वा ततो राजा क्षितौ भवेत् ॥ ९ ॥

तत्रापि चानयाऽऽराध्या कैवल्यं मुक्तिमाप्नुयात् ।
सविकल्पस्य देवेशि ! विहितैषा न चान्यथा ॥ १० ॥

---

१. कलका—ग० ।

निर्विकल्पस्य देवेशि ! सुरैरविहितागमे ।
अमृतं च तदेव स्यान्मद्यं चापि तदेव हि ॥ ११ ॥

नाऽऽपद्यपि द्विजो मद्यं दद्याद् देव्यै कदाचन ।
मोहाद् यदि ददेन्मद्यं ब्राह्मण्यादेव हीयते ॥ १२ ॥

ब्रह्मघाती स एव स्यात् तस्मान्मद्यं विवर्जयेत् ।
मद्यमेव पुरा सेव्यमासीत् कमललोचने ! ॥ १३ ॥

पीत्वा मद्यं पुरा शुक्र आत्मानं चापि विस्मृतः ।
पीत्वा मत्तो निशानाथः पत्नीं तां जगृहे गुरोः ॥ १४ ॥

अतस्तेनापि मुनिना शापो दत्तः सुदारुणः ।
ब्रह्मा च मुनिभिः सार्द्धमिदमेव पुरा जगौ ॥ १५ ॥

महादेव्यै द्विजो मद्यं यो दद्याज्ज्ञानविह्वलः ।
पशुभावे स्थितो यश्च स महापातकी भवेत् ॥ १६ ॥

शेषयोर्विहितं मद्यं निर्विकल्पकयोः पुनः ।
नाद्यस्य विहितं तेन ब्रह्मघाती भवेच्च सः ॥ १७ ॥

तेनेदं पृथिवीक्षेत्रे वर्ज्यमासीत् सुलोचने ! ।
ज्ञानिनां सिद्धिदा चेयममृतत्वप्रदायिनी ॥ १८ ॥

ज्ञानेन संस्कृता चेयं महापातकनाशिनी ।
ब्रह्महत्या-सुरापान-स्वर्णस्तेयादि-पातकान् ॥ १९ ॥

नाशयेत् पूजनाद् [1]देवि! निर्विकल्पो भवेद् यदि ।
निर्विकल्पो यदा मद्यं महादेव्यै निवेदयेत् ॥ २० ॥

अश्वमेधसहस्रस्य वह्निष्टोमशतस्य च ।
राजसूयशतस्यापि फलमाप्नोत्यसंशयम् ॥ २१ ॥

---

१. देवी- क० ।

अणिमाद्यष्टसिद्धीनां नायको जायतेऽचिरात् ।
सविकल्पो यदा देवि पापभाङ् नात्र संशयः ॥ २२ ॥
[1]स्वरे चाऽनघधामासि [2]स्वाहा त्वं च दिवौकसाम् ।
स्वधा त्वं पितृमुख्यानां मनुष्याणां च सिद्धिदा ॥ २३ ॥
[3]क्षीराब्धिमथने पूर्वमुद्भूता[4] देवसंसदि ।
आनन्दभैरवी सार्द्धमानन्दभैरवेण तु ॥ २४ ॥
त्वयि प्रसन्नभूतायां सिद्धिरेव न संशयः ।
विमुखी चेत् तदा तस्य कुलज्ञान[5]विनाशिनी ॥ २५ ॥
प्रसन्ना खलु देवानां गन्धर्वाणां तथैव च ।
विमुखी त्वं च दैत्यानामसकृत् सर्वनाशिनी ॥ २६ ॥
त्वामद्याहं ददे देव्यै मयि चित्स्फुरणं कुरु ।
एवं स्तुत्वा सुरा देव्यै पूर्वोक्तेन च संस्कृताम् ॥ २७ ॥
त्रिपुरायै निवेद्यैव निग्रहानुग्रहक्षमः ।
चर्व्यं चोष्यं तथा लेह्यं पेयं चेति चतुर्विधम् ॥ २८ ॥
सर्वयज्ञमयं नित्यं नैवेद्यं सर्वतुष्टिदम् ।
ज्ञानदं कामदं पुण्यं बलारोग्यमयं तथा ॥ २९ ॥
नैवेद्येन लभेत् स्वर्णं नैवेद्येनामृतं भवेत् ।
धर्मकामार्थमोक्षश्च नैवेद्येषु प्रतिष्ठितः ॥ ३० ॥
तस्मात् सर्वप्रयत्नेन नैवेद्यं खलु दापयेत् ।
हविः सुसंस्कृतं दिव्यमाज्ययुक्तं सशर्करम् ॥ ३१ ॥

१. सुरे–ग० ।
२. सुधा–ग० ।
३. क्षीरोद–ग० ।
४. उदधृता–ग० ।
५. स्थान–ग० ।

शुद्धस्फटिकसङ्काशं चन्द्रबिम्बसमप्रभम् ।
लसत्तण्डुलजं देवि ! चारुगन्धवहं मृदु ॥ ३२ ॥

सुगन्धि शालिजं चान्नं मधुमांससमन्वितम् ।
अपूपपायसं क्षीरमन्नं देव्याः प्रशस्यते ॥ ३३ ॥

बलिदानेषु विहिता य एव मृगपक्षिणः ।
तेषां मांसानि मत्स्यानि देयानि विविधानि च ॥ ३४ ॥

सर्वं सुरभिगन्धाढ्यं व्यञ्जनं सुमनोहरम् ।
यथा यथा भवेद् भक्ष्यं यद् यद् द्रव्यं तथा तथा ॥ ३५ ॥

संस्कृत्य वेशवाराद्यैर्महादेव्यै निवेदयेत् ।
यत् पूतिगन्धसंयुक्तं दुग्धं भोगबहिष्कृतम् ॥ ३६ ॥

तदुक्तमपि नो दद्यात् त्रिपुरायै कदाचन ।
कालशाकं कलायं च पालकं चापि पोतिकाम् ॥ ३७ ॥

सार्षपं मूलकं चैव वास्तूकं च कलम्बिकाम् ।
शाकानेतान् महादेव्यै यो दद्याद् भक्तिसंयुतः ॥ ३८ ॥

सोऽतुलां श्रियमाप्नोति देवीलोके महीयते ।
माषमुद्गमसूराद्यैर्व्यञ्जनं लवणान्वितम् ॥ ३९ ॥

हिङ्गुजीरमरीचाद्यैरार्द्रकैश्चापि संस्कृतम् ।
तिन्तिडीखण्डसंयुक्तं भक्तियुक्तो निवेद्य च ॥ ४० ॥

ज्योतिष्टोमफलं लब्ध्वा देवीलोकमवाप्नुयात् ।
नानाविधानि पेयानि व्यञ्जनानि बहून्यपि ॥ ४१ ॥

---

१. सहं-ख० ।
२. शाद्विजश्चात्वं-ख० ।
३. यन्न-ख० ।

क्षीरादीन्यथ गव्यानि माहिषाणि[1] च सर्वशः ।
आमिक्षां परमेशान्यै दधि चापि सशर्करम् ॥ ४२ ॥

पायसं शर्करापूपं कपिलाघृतसंयुतम् ।
पक्वान्नमतिमिष्टं च सिताकर्पूरसाधितम् ॥ ४३ ॥

शर्करालोलितान् कृत्वा वटकान् कुङ्कुमारुणान् ।
सशर्करं पक्वदुग्धं कदल्यादिफलान्वितम् ॥ ४४ ॥

सितोपदंशमन्नं[2] च स्वर्णपात्रे निवेदयेत् ।
अथवा रौप्यपात्रे च ताम्रपात्रेऽथवा पुनः ॥ ४५ ॥

अभावात् पद्मपत्रे वा अन्यथा नरकं व्रजेत् ।
आममन्नं महादेव्यै नैव दद्यात् कदाचन ॥ ४६ ॥

मन्त्रकालाविशुद्धानि[3] नैवेद्यानि कदाचन ।
देवेभ्यो नोपयुञ्जीत गुरोरात्महिते[4] रतः ॥ ४७ ॥

सितासन्मिश्रितां दत्त्वा सुरां मधुसमन्विताम् ।
देवीलोके चिरं स्थित्वा कैवल्यमुक्तिमाप्नुयात् ॥ ४८ ॥

आमिक्षया समं दत्त्वा सलिलं नारिकेलजम् ।
क्षीराज्य[5]मधुकर्पूरसितादधिसमन्वितम् ॥ ४९ ॥

त्रिजातत्रिकटूनां च लवङ्गेन [6]कयोरपि ।
तथान्येषां च वस्तूनां चूर्णैर्गन्धवतीं शिवे ! ॥ ५० ॥

---

१. माहिष्याणि–ग० ।
२. मद्यञ्च–ख० ।
३. विशुद्धानि–ख० ।
४. वामे–ख० ।
५. क्षीराद्य–ख० ।
६. द्वयोरपि–ख० ।

साधयित्वा प्रकारेण वासितं गन्धरेणुभिः ।
[1]यस्तैजसेन पात्रेण पेयं देव्यै निवेदयेत् ॥ ५१ ॥

भक्तिप्रवणचित्तेन तस्य पुण्यफलं शृणु ।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥ ५२ ॥

स्थित्वा देवीपुरे श्रीमान् सार्वभौमो भवेत् क्षितौ ।
ततः परं तु कैवल्यमाप्नोति च यथेच्छया ॥ ५३ ॥

केवलं नारिकेलाम्बु दत्वा देव्यै महेश्वरि ! ।
वह्निष्टोमफलं लब्ध्वा नरलोके महीयते ॥ ५४ ॥

ग्रामारण्यैः फलैर्देवीं सकलैः परिपूजयेत् ।
बलिप्रियं च नैवेद्यं कशेरुकविषादिकम् ॥ ५५ ॥

ऋते श्लेष्मातकं बिल्वं शौनकं च[2] विशेषतः ।
फलान्ययत्नपक्वानि निसर्गमधुराणि च ॥ ५६ ॥

सुपक्वातिसुगन्धीनि मनोहराणि यानि च ।
एवमेतानि शस्तानि नान्यानि[3] शुभदानि च ॥ ५७ ॥

सौवर्णे राजते वापि ताम्रे वा प्रस्तरेऽपि च ।
पद्मपत्रेऽथवा दद्यान्नैवेद्यं त्रिपुराप्रियम् ॥ ५८ ॥

निराच्छादं[4] समालोक्य भक्तिश्रद्धासमन्वितः ।
वायुबीजेन संशोष्य सन्दहेद् वह्निना तथा ॥ ५९ ॥

वारुणेन स्वधावृत्त्या प्लावयेद् धेनुमुद्रया ।
अस्त्रमन्त्रेण संरक्ष्य मूलेनैवाभिषिच्य तु ॥ ६० ॥

---

१. स्वस्तैजसेन–ग० ।
२. शौनकांश्च–ग० ।
३. नान्यादि–ख० ।
४. निरोच्छोद–ग० ।

मूलदेव्याः स्वनामान्ते नैवेद्यमिति चोच्चरेत् ।
गृहाण वह्निजायान्तो नैवेद्यमनुरीरितः ॥ ६१ ॥
अन्नं चतुर्विधं देवि ! रसैः षड्भिः समन्वितम् ।
मया निवेदितं भक्त्या तदिदं प्रतिगृह्यताम् ॥ ६२ ॥
लेह्यचोष्यानुपानादिभक्ष्यभोज्यानि यानि च ।
मया हृतानि यत्नेन कृपया देवि ! भुज्यताम् ॥ ६३ ॥
जातीलवङ्गकक्कोलवासितं स्वर्धुनीजलम् ।
मुखवासकरं पुण्यं गृहीत्वा चात्र[1] सुन्दरि ! ॥ ६४ ॥
मूलमन्त्रेण देवेशि ! हुनेत् पञ्चाहुतीः क्रमात् ।
प्राणापानौ तथा व्यानमुदानं च समानकम् ॥ ६५ ॥
एतत् स्वरूपं जानीयादाहुतीनां च पञ्चकम् ।
पञ्चाङ्गुलीभिरेव स्यात् क्रमात् पञ्चाहुतीः प्रिये ! ॥ ६६ ॥
पुनराचमनं दत्वा मुखवासं निवेदयेत् ।
ताम्बूलं गन्धसंयुक्तं कर्पूरादिसुवासितम् ॥ ६७ ॥
संस्कृत्य विविधैर्द्रव्यैर्गन्धवह्निर्निवेदयेत् ।
स्तुवन्नानाविधैः स्तोत्रैर्भक्तिभावसमन्वितः ॥ ६८ ॥
प्रणमेत् परमेशानीं[2] विधिना साधकोत्तमः ।
देवमानुषगन्धर्वा यक्षराक्षसपन्नगाः ॥ ६९ ॥
नमस्कारेण तुष्यन्ति महात्मानः समन्ततः ।
नमस्कारेण लभते चतुर्वर्गं महोदयम् ॥ ७० ॥
सर्वत्र सर्वसिद्धयर्थं नतिरेव प्रशस्यते ।
नत्या[3] विजयते लोकान् नत्या धर्मः प्रवर्तते ॥ ७१ ॥

---

१. आचम—ख० ।
२. परमेशानि—ख० ।
३. नत्वा—ख० ।

नमस्कारेण दीर्घायुरच्छिन्ना लभते प्रजाः ।
चतुर्वर्गं लभेद् भक्तो नचिरादेव साधकः ॥ ७२ ॥
नमस्कारो महायज्ञः प्रीतिदः सर्वतः सदा ।
नमस्कुरु महादेवीं प्रदक्षिणं च भक्तितः ॥ ७३ ॥
कायिको वाग्भवश्चैव मानसस्त्रिविधः स्मृतः ।
नमस्कारश्च विज्ञेय उत्तमाधममध्यमः ॥ ७४ ॥
कायिकैस्तु नमस्कारैर्देवास्तुष्यन्ति सर्वतः ।
नमस्कारेषु सर्वेषु कायिकः प्रथमः स्मृतः ॥ ७५ ॥
जानुभ्यामवनीं गत्वा संस्पृश्य शिरसा क्षितिम् ।
क्रियते यो नमस्कारः स एव कायिकः स्मृतः ॥ ७६ ॥
पुटीकृत्य करौ शीर्षे नमस्कारः प्रदीयते ।
अस्पृष्ट्वा जानुशीर्षाभ्यां क्षितिं सोऽधम उच्यते ॥ ७७ ॥
जानुभ्यां क्षितिमस्पृष्ट्वा शिरसा स्पृश्य मेदिनीम् ।
क्रियते यो नमस्कारो मध्यमः कायिकस्तु सः ॥ ७८ ॥
पौराणिकैस्तान्त्रिकैर्वा[1] मूलमन्त्रेण वा पुनः ।
प्रदक्षिणप्रणामं[2] च कुर्याद् धर्मार्थसाधनम् ॥ ७९ ॥
प्रसार्य दक्षिणं हस्तं स्वयं [3]नम्रशिराः पुनः ।
दक्षिणं दर्शयन् पार्श्वं भक्तिश्रद्धासमन्वितः ॥ ८० ॥
सकृत् प्रदक्षिणं कृत्वा वर्तुलाकृति साधकः ।
स च प्रदक्षिणो ज्ञेयः सर्वदेवौघतुष्टिदः ॥ ८१ ॥
अष्टोत्तरशतं यस्तु देव्याः कुर्यात् प्रदक्षिणम् ।
स सर्वकाममासाद्य पश्चान्मोक्षमवाप्नुयात् ॥ ८२ ॥

---

१. तान्त्रिकैः–ख ।
२. प्रमाणं–ख० ।
३. नम्रःशिरः–ग० ।

त्रिकोणमथ षट्कोणमर्द्धचन्द्रं प्रदक्षिणम् ।
दण्डमष्टाङ्गमुग्रं च सप्तधा नतिलक्षणम् ॥ ८३ ॥

दक्षिणाद् वायवीं गत्वा दिशं तस्माच्च शाम्भवीम् ।
[1]ततोऽपि दक्षिणां गत्वा नमस्कारस्त्रिकोणवत् ॥ ८४ ॥

त्रिकोणाख्यो नमस्कारस्त्रिपुराप्रीतिदायकः ।
दक्षिणाद् वायवीं गत्वा वायव्याः शाम्भवीं तथा ॥ ८५ ॥

ततोऽपि दक्षिणां गत्वा तां त्यक्त्वाऽग्नौ प्रविश्य च ।
अग्नितो राक्षसीं गत्वा कौबेरीं च ततो विशेत् ॥ ८६ ॥

आग्नेयीं च ततो गत्वा नमस्कारः प्रकीर्तितः ।
षट्कोणाख्यो नमस्कारो दुर्गायाः प्रीतिदायकः ॥ ८७ ॥

दक्षिणाद् वायवीं गत्वा तस्माद् व्यावृत्त्य[2] दक्षिणम् ।
गत्वा योऽसौ नमस्कारः सोऽर्द्धचन्द्रो मम प्रियः ॥ ८८ ॥

नमस्कारेषु जानीयादासां प्राक्तमद्रिजे ! ।
त्यक्त्वा स्वमासनस्थानं पश्चाद् गत्वा नमस्कृतः ॥ ८९ ॥

निपत्य दण्डवद् भूमौ दण्ड इत्युच्यते बुधैः ।
तथैव दण्डवद् भूमौ निपत्य हृदयेन च ॥ ९० ॥

चिबुकेन मुखेनाऽथ नासया हनुकेन च ।
चक्षुषा चाथ कर्णाभ्यां ब्रह्मरन्ध्रेण चैव हि ॥ ९१ ॥

तदष्टाङ्गमिति प्रोक्तं यद्भूमिं स्पृशते क्रमात् ।
ब्रह्मरन्ध्रेण संस्पर्शः क्षितेर्यस्या नमस्कृतेः ॥ ९२ ॥

स उग्र इति विज्ञेयो विष्णोस्तुष्टिप्रदायकः ।
यत् स्वयं गद्यपद्याभ्यां [3]घटिताभ्यां नमस्कृतिः ॥ ९३ ॥

---

१. 'ततोऽपि दक्षिणाम्' इत्यारभ्य 'शाम्भवीं तथा' इत्यन्तं नास्ति–ग० ।

२. व्यावृत्त–ख० ।

३. गठिताभ्यां–ख० ।

क्रियते भक्तियुक्तेन वाचिकस्तूत्तमः स्मृतः ।
पौराणिकैर्वैदिकैर्वा तान्त्रिकैः क्रियते नतिः ॥ ९४ ॥
स मध्यमो नमस्कारो भवेद् [1]वाचनिकः सदा ।
परेषां गद्यपद्याभ्यां नमस्कारो यदा भवेत् ॥ ९५ ॥
स वाचिकोऽधमो यो नमस्कारेषु सर्वतः ।
[2]इष्टमध्यानिष्टगतैर्मनोभिस्त्रिविधं भवेत् ॥ ९६ ॥
नमनं मानसं प्रोक्तमुत्तमाधममध्यमम् ।
त्रिविधे च नमस्कारे कायिकश्चोत्तमः स्मृतः ॥ ९७ ॥

इति गन्धर्वतन्त्रे षोडशः पटलः ॥ १६ ॥



१. धाचा यतः–ग० ।
२. धामा–ख० ।

# सप्तदशः पटलः

श्रीदेव्युवाच[1]

प्रकटाद्याः कथं देव ! पूज्यन्ते परमेश्वर ! ।
तत्सर्वं कथयेशान ! मुद्राविरचनं तथा ॥ १ ॥

ईश्वर उवाच

तास्तु प्रपूजयेद् भक्त्या सृष्टिस्थितिलयक्रमैः ।
मोहनं [2]क्षोभणं चक्रं दक्षावर्तक्रमाद् यजेत् ॥ २ ॥
वामावर्तक्रमेणैव शेषचक्राणि पूजयेत् ।
आरभ्य पश्चिमाद् देवि ! वायव्यान्तं समापयेत् ॥ ३ ॥
रश्मिवृन्दानि ते देवि ! पूजयामि विधानतः ।
आज्ञापय जगन्मातर्यतस्त्वमेव[3] तानि च[4] ॥ ४ ॥
कृताञ्जलिर्महेशानि ! देव्याज्ञां साधकोत्तमः ।
गृहीत्वा पूजयेत् तुष्टः प्रागुक्तक्रमयोगतः ॥ ५ ॥
पूजावरणशक्तीनां [5]गन्धपुष्पाद्भिरक्षतैः ।
ज्ञानमुद्रान्वितैर्देवि ! तर्पणं तत्त्वमुद्रया ॥ ६ ॥
महायोगेश्वरं देवं योगिनं करुणामयम् ।
[6]करुणं पूर्वमुद्धृत्य दक्षकर्णेन्दुभूषितम् ॥ ७ ॥

---

१. पार्वती–ग० ।
२. क्षोभतं–ख० ।
३. तमेव–ख० ।
४. वै–ख० ।
५. गन्धैः–ख० ।
६. वारणं–ख० ।

बुद्धाय नम इत्युक्त्वा पूजयेज्जगदीश्वरम् ।
पश्चिमादिचतुर्दिक्षु पूजयेदणिमादिकाः ॥ ८ ॥

वायव्यादिषु कोणेषु वशित्वप्रमुखा[1] यजेत् ।
प्राप्तिसिद्धिमधोभागे [2]सर्वकामां तथोर्ध्वके ॥ ९ ॥

मायालक्ष्मीसमायोगं कृत्वा पूर्वं महेश्वरि ! ।
तथैव सिद्धिशब्दान्ते श्रीपादुकां ततो वदेत् ॥ १० ॥

पूजयामीति मनुना पूजयेदुक्तमार्गतः ।
तथा द्वितीयरेखाया ब्रह्माण्याद्याः प्रपूजयेत् ॥ ११ ॥

असिताङ्गं रुरुं चैव चण्डं क्रोधं तथैव च ।
उन्मत्तं च तथा देवि ! भैरवं च कपालिनम् ॥ १२ ॥

भीषणं चैव संहारं ताभिः सह प्रपूजयेत् ।
सर्वसंक्षोमिणीमुख्यास्तथा तृतीयरेखगाः ॥ १३ ॥

करशुद्धिकरीं पूर्वां पूजयेच्चक्रनायिकाम् ।
दक्षिणे पूजयेद् देव्या मुद्रां संक्षोभकारिणीम् ॥ १४ ॥

अणिमां पूजयेद् वामे बुद्धं तस्याः [3]पुरः पुनः ।
मध्यमे मध्यतः कृत्वा कनिष्ठाङ्गुष्ठबोधिते ॥ १५ ॥

तर्जन्यौ दण्डवत् कृत्वा मध्यमोपर्यनामिके ।
एषा तु प्रथमा मुद्रा सर्वसंक्षोभकारिणी ॥ १६ ॥

खान्तं वह्निसमारूढं द्वितीयस्वरभूषितम् ।
नादबिन्दुकलायुक्तं बीजं तस्याः प्रकीर्तितम् ॥ १७ ॥

---

१. प्रमुखात्–ख० ।
२. सर्वकामात्–थ० ।
३. पुनः–ख० ।

आदाय दक्षहस्तेन विशेषार्घ्योदकं ततः ।
बीजद्वयं समाभाष्य तथैताः प्रकटास्ततः ॥ १८ ॥

योगिन्यश्च समुद्राश्च ससिद्धयश्च सायुधाः ।
तथा सपरिवाराश्च सर्वोपचारकैस्तथा ॥ १९ ॥

त्रैलोक्यमोहने चक्रे त्रिपुराधिष्ठिते तथा ।
पूजितास्तर्पिताः सन्तु देव्या हस्ते निवेदयेत् ॥ २० ॥

एवमाखिलचक्रस्य योगिनीनां महौजसाम् ।
यथावदूहवाक्येन[1] चक्रपूजां निवेदयेत् ॥ २१ ॥

मायालक्ष्मीकलाभिस्ता नित्या कलाः प्रपूजयेत् ।
ब्रह्मा कमण्डलुधरश्चतुर्वक्त्रश्चतुर्भुजः ॥ २२ ॥

राजहंससमासीनः प्रांशुस्तुङ्गांश उन्नतः ।
सावित्री वामपार्श्वस्था दक्षिणे च सरस्वती ॥ २३ ॥

सर्वे देवाः स्थितास्त्वग्रे वेदाः[2] सर्वेऽग्रतः स्थिताः ।
वर्णेन रक्तगौराङ्गो जपमालालसत्करः[3] ॥ २४ ॥

वराभयप्रदो देवः सर्वलोकपितामहः ।
प्रणवं पूर्वमुद्धृत्य ब्रह्मणे नम आलिखेत् ॥ २५ ॥

अनेन मनुना देवि ! ब्रह्माणं परिपूजयेत् ।
बालया योजितां कृत्वा पूजयेच्चक्रनायिकाम् ॥ २६ ॥

दर्शयेद् द्राविणीं मुद्रां तत्तद्बीजपुरस्कृताम् ।
खान्तं वह्निसमारूढं तूर्यस्वरविभूषितम् ॥ २७ ॥

---

१. यथावदहवाक्येन–ख० ।
२. देवाः–ख० ।
३. जपमान–ख० ।

नादबिन्दुकलायुक्तं द्राविणीबीजमुत्तमम् ।
सर्वसंक्षोभमुद्राया मध्यमे सरले यदा ॥ २८ ॥
[1]क्रियते परमेशानि ! सर्वविद्राविणी तदा ।
शुद्धस्फटिकसङ्काशं पञ्चवक्त्रं त्रिलोचनम् ॥ २९ ॥
व्याघ्रचर्मस्थिते पद्मे पद्मासनगतं सदा ।
संश्लिष्टं तु पुमान् देवीं चामरोत्पलधारिणीम् ॥ ३० ॥
द्विभुजां स्वर्णगौराङ्गीं सौम्यातिसौम्यरूपिणीम् ।
लीलारविन्दं वामेन पाणिना बिभ्रतीं सदा ॥ ३१ ॥
शुक्लं तु चामरं दत्वा शिवस्याङ्केऽथ दक्षिणे ।
विन्यस्य दक्षिणं हस्तं तिष्ठन्तीं परिचिन्तयेत् ॥ ३२ ॥
त्रैलोक्यजननीं देवीं त्रैलोक्यजनकं शिवम् ।
उमां महेश्वरं ध्यात्वा मोहयेज्जगतीमिमाम् ॥ ३३ ॥
कामं शक्रं तथाऽऽकाशं तुरीयमनुभूषितम् ।
नादबिन्दुकलायुक्तं द्वयं बीजं तयोः क्रमात् ॥ ३४ ॥
उमा ङेन्तो तथा ङेन्तो महेश्वरो हृदन्वितः ।
मन्त्रराजः समाख्यातश्चतुर्वर्गफलप्रदः ॥ ३५ ॥
अनेन तौ समभ्यर्च्य सर्वसंक्षोभके ततः ।
अनङ्गकुसुमां पूर्वे कवर्गेणैव पूजयेत् ॥ ३६ ॥
चवर्गेण च देवेशि ! दक्षिणेऽनङ्गमेखलाम्[2] ।
अनङ्गमदनां देवि ! टवर्गेण च पश्चिमे ॥ ३७ ॥
तवर्गेणोत्तरे भागे पूजयेन्मदनातुराम् ।
तथैवानङ्गरेखां[3] च पवर्गेण हुताशने ॥ ३८ ॥

---

१. भ्रियते ।
२. मेखलम्–ख० ।
३. रेखासु–ख० ।

यवर्गेण च देवेशि ! नैर्ऋतेऽनङ्गवेगिनीम् ।
शवर्गेण च वायव्येऽनङ्गाङ्कुशां च पूजयेत् ॥ ३९ ॥

लक्षाभ्यां परमेशानि ! ईशे चानङ्गमानिनीम् ।
प्रोक्तस्थाने समावाह्य पूजयेच्चक्रनायिकाम् ॥ ४० ॥

कामबीजं पुरस्कृत्य मुद्रां सन्दर्शयेत् ततः ।
मध्यमानामिकाभ्यां तु कनिष्ठानामिके समे ॥ ४१ ॥

अङ्कुशाकाररूपाभ्यां मध्यमे परमेश्वरि ! ।
इयमाकर्षणी मुद्रा त्रैलोक्याकर्षकारिणी ॥ ४२ ॥

सर्वसौभाग्यदे चक्रे भास्करं परिचिन्तयेत् ।
पद्मरागप्रतीकाशं किरीटाङ्गदभूषणम् ॥ ४३ ॥

पद्मासनसमासीनं स्वशक्त्याऽऽलिङ्गितं[1] विभुम् ।
दधानं[2] बाहुभिर्देवं रक्तपद्मे वराभयौ ॥ ४४ ॥

प्रागुक्तेन तु मन्त्रेण भास्करं परिपूजयेत् ।
सम्प्रदायाः प्रपूज्यैव पूजयेच्चक्रनायिकाम् ॥ ४५ ॥

वारुणं चेन्द्रबीजस्थं दक्षकर्णविभूषितम् ।
नादबिन्दुकलायुक्तं बीजं वश्यकरं महत् ॥ ४६ ॥

पुटाकारौ करौ कृत्वा तर्जन्यङ्कुशरूपिणी ।
परिवर्तक्रमेणैव मध्यमे तदधोगते ॥ ४७ ॥

क्रमेण देवि ! तेनैव कनिष्ठानामिके अपि ।
संयोज्य निबिडाः कार्याः सर्वा अङ्गुष्ठदेशतः ॥ ४८ ॥

मुद्रैषा परमेशानि ! सर्ववश्यकरी मता ।
सर्वार्थसाधके चक्रे बाह्ये दशारके ततः ॥ ४९ ॥

---

१. आलिङ्गिताम्–ख० ।
२. दधानां–ग० ।

मणिमयमहद्रत्नपङ्कजेऽतिमनोहरे ।
पीठे तस्मिन् निविष्टस्य प्रद्योतनशतद्युतेः ॥ ५० ॥
तप्तकाञ्चनवर्णाभवैनतेयस्य पार्वति ! ।
आसीनमुन्नतांशे च विष्णुं विद्रुमसन्निभम् ॥ ५१ ॥
स्ववामोरुगतां पद्मां श्लिष्यन्तमरुणेक्षणम् ।
पीतवस्त्रपरीधानं सस्मितं चारुभूषणम् ॥ ५२ ॥
शङ्खचक्रगदापद्मं दधानं बाहुभिः सदा ।
चिन्तयित्वा महेशानि ! पूजयेज्जगदीश्वरम्[1] ॥ ५३ ॥
मन्त्रमस्य[2] प्रवक्ष्यामि चतुर्वर्गप्रदायकम् ।
कामबीजं समुद्धृत्य हृषीकेशमतः परम् ॥ ५४ ॥
ङेऽन्तं च नतिसंयुक्तमनेन तं प्रपूजयेत् ।
कुलकौलान् प्रपूज्यैव पूजयेच्चक्रनायिकाम् ॥ ५५ ॥
सर्वोन्मादकरीं मुद्रां दर्शयेद् बीजपूर्विकाम् ।
ससर्गो भृगुरेतस्या बीजमेतदुदाहृतम् ॥ ५६ ॥
सम्मुखौ तु करौ कृत्वा मध्यमे मध्यमे [3]यजेत् ।
अनामिके तु सरले तद्बहिस्तर्जनीद्वयम् ॥ ५७ ॥
दण्डाकारौ ततोऽङ्गुष्ठौ मध्यमानखदेशगौ ।
मुद्रैषोन्मादिनी नाम्ना क्लेदिनी सर्वयोषिताम् ॥ ५८ ॥
सर्वरक्षाकरे चक्रे तथान्तर्दशकोणके ।
त्रैलोक्यमोहनं विष्णुं ध्यायेद् बन्धूकसन्निभम् ॥ ५९ ॥
जपाकुसुमसङ्काशं दाडिमीकुसुमप्रभम् ।
उद्यदादित्यसङ्काशं रत्नसिंहासनेऽम्बुजे ॥ ६० ॥

---

१. जगदीश्वरीम्–ख० ।
२. अस्याः–ख० ।
३. ऽनुजे–ग० ।

पद्मासनसमासीनं भुजैश्चतुर्भिरायतैः ।
पाशाङ्कुशौ च दधतं पुष्पबाणेक्षुकार्मुकम् ॥ ६१ ॥
अरुणायतलोलाक्षियुगलं मदघूर्णितम् ।
सर्वश्रृङ्गारवेषाढ्यं किरीटाङ्गदभूषितम् ॥ ६२ ॥
रक्तमालाम्बरधरं रक्तगन्धानुलेपितम् ।
[1]स्ववामोरुगतां शक्तिं श्लिष्यन्तीं दक्षपाणिना ॥ ६३ ॥
वामेन पाणिना पद्मं धारयन्तीं शुचिस्मिताम् ।
रुचिराङ्गदभूषाढ्यां शुद्धक्षौमविराजिताम् ॥ ६४ ॥
मदनोत्तप्तहृदयां क्लिद्यद्योनिं परेश्वरीम् ।
कलाकलितमधुरां तरुणीं यौवना[2]श्रिताम् ॥ ६५ ॥
सकार्मुकभुजेनैव[3] श्लिष्यन्तं सुदृढं तथा ।
तज्जनितपरानन्दनन्दितं परमेश्वरम् ॥ ६६ ॥
नागगन्धर्वदेवानाम[4]ङ्गनाभिः समावृतम् ।
मदनोल्लसिताङ्गाभिर्भूषिताभिर्विभूषणैः ॥ ६७ ॥
आत्मा[5]भेदेन यो ध्यायेद् देवदेवं जगद्गुरुम् ।
त्रैलोक्यमोहनं विष्णुं त्रैलोक्यमोहनो भवेत् ॥ ६८ ॥
बीजमस्य प्रवक्ष्यामि लक्ष्मीनारायणात्मकम् ।
ब्रह्मा पुरन्दरः पश्चान्मायास्व[6]रमतः परम् ।
नादबिन्दुकलायुक्तं बीजं त्रैलोक्यपूजितम् ॥ ६९ ॥

---

१. स्वधाभो–ख० ।
२. ऽन्विताम्–ख० ।
३. कुजेनैन–ग० ।
४. मङ्गलाभिः–ख० ।
५. आत्मभेदेन–ख० ।
६. सुर–ग० ।

श्रुतिषु मथितसारं देवताकण्ठहारं[1]
त्रिभुवनवशकारि[2] श्रीधनामर्त्यकारि[3] ।
शमनभयविनाशं सर्वशङ्काप्रणाशं
भवजलधिविशोषं मानसान्ध[4]प्रकाशम् ॥ ७० ॥

अनेन तं समभ्यर्च्य निगर्भयोगिनीं यजेत् ।
नायिकां तत्र सम्पूज्य मुद्रां सन्दर्शयेत् तथा ॥ ७१ ॥

तस्मादनामिकायुग्ममधः कृत्वाऽङ्कुशाकृती[5] ।
तर्जन्यावपि तेनैव क्रमेण विनियोजयेत् ॥ ७२ ॥

इयं महाङ्कुशामुद्रा सर्वकार्यार्थसाधिका ।
कामदेवाग्निमारूढो बिन्दुनादकलान्वितः ॥ ७३ ॥

त्रयोदशस्वरोपेतो मुद्राबीजमितीरितम् ।
अष्टकोणे महेशानि ! रहस्ययोगिनीर्यजेत् ॥ ७४ ॥

वशिनीप्रमुखाः सर्वाः पूर्ववद् बीजसंयुताः ।
पादुकां पूजयामीति न्यासादेव विशेषतः ॥ ७५ ॥

ज्ञानात्मिकां यजेच्छक्तिं भक्तिं सिद्धिं च वामतः ।
[6]तद्दक्षे खेचरीमुद्रां तां च सन्दर्शयेत् ततः ॥ ७६ ॥

सव्यं दक्षिणदेशे तु दक्षिणं वामदेशतः ।
बाहुं कृत्वा महेशानि ! हस्तौ सम्परिवर्त्य च ॥ ७७ ॥

---

१. हारकम्–ख० ।
२. वशङ्करी–ख० ।
३. श्रीधनाद्यर्थकारकम्–ख० ।
४. मानसानु–ग० ।
५. कृताङ्कुशाकृतिः–ख० ।
६. तदङ्के–ख० ।

कनिष्ठानामिके देवि! युक्ता तेन क्रमेण तु।
तर्जनीभ्यां समाक्रान्ते सर्वोर्ध्वमपि मध्यमे ॥ ७८ ॥
अङ्गुष्ठौ च महेशानि! कारयेत् सरलाविह।
इयं सा खेचरी मुद्रा नाम्ना सर्वोत्तमा प्रिये! ॥ ७९ ॥
रचितेयं महामुद्रा सर्वतेजोपहारिणी।
शिवं चन्द्रं तथा कान्तं पान्तं वह्निसमन्वितम् ॥ ८० ॥
एकादशस्वरोपेतं बीजं तस्याः प्रकीर्तितम्।
मध्यत्रिकोणचक्रे च अग्रदक्षोत्तरे शिवे ॥ ८१ ॥
ता एव पूजयेद् देवि! विन्यासोक्तविधानतः।
पादुकां पूजयामीति विशेषोऽत्र प्रकाशितः ॥ ८२ ॥
[1]त्रिपुराम्बार्णचक्रेशीमिच्छासिद्धिं च वामतः।
परिवर्त्य करौ स्पष्टावर्द्धचक्राकृती प्रिये! ॥ ८३ ॥
तर्जन्यङ्गुष्ठयुगलं युगपत् कारयेत् ततः।
अधः कनिष्ठावष्टब्धे मध्यमे विनियोजयेत् ॥ ८४ ॥
तथैव कुटिले योज्ये सर्वाधस्ता[2]दनामिके।
बीजमुद्रेयमाख्याता परा त्रैलोक्यमातृका ॥ ८५ ॥
सदाशिवस्य बीजाढ्यां दर्शयित्वा विधानतः।
सर्वानन्दमये चक्रे ब्रह्मविष्णुस्वरूपिणीम् ॥ ८६ ॥
पूजयित्वा विधानेन चक्रेशीमपि भैरवीम्।
ज्ञानेच्छादिक्रियारूपां मोक्षसिद्धिं च वामतः ॥ ८७ ॥
सिंहं च पुरतो देव्या जगदाधारमर्चितम्।
पूजयेत् सततं भक्त्या पश्यन्तमम्बि[3]कामुखम् ॥ ८८ ॥

---

१. त्रिपुरा पान्तु चक्रेशीं–ख० ।
२. अधः छादनामिके–ख० ।
३. अन्विला–ख० ।

वाग्बीजं पूर्वमुद्धृत्य योनिमुद्रां प्रदर्शयेत् ।
अनामिकायुगं देवि ! परिवर्तनयोगतः ॥ ८९ ॥

अङ्कुशाकाररूपाभ्यां तर्जनीभ्यां तु धारयेत् ।
मध्यमे कुरु तन्मध्ये कनिष्ठिके तथाविधे ॥ ९० ॥

दण्डाकारौ ततोऽङ्गुष्ठौ कनिष्ठोपरि संस्थितौ ।
योनिमुद्रेयमाख्याता परा त्रैलोक्यमातृका ॥ ९१ ॥

अत्र पदं समाभाष्य सर्वानन्दमयात् ततः ।
चक्रराजपदस्यान्ते ब्रह्मस्वरूपमालिखेत् ॥ ९२ ॥

[1]संविद्वेद्यपदं ब्रूयाद् बिन्दुचक्रे ततः परम् ।
एषा परापराशब्दाद् रहस्ययोगिनी ततः ॥ ९३ ॥

ब्रह्मस्वरूपिणी पश्चान्महात्रिपुरसुन्दरी ।
समुद्रा सायुधा चैव सवाहना तथैव च ॥ ९४ ॥

तथा सपरिवारान्ते सर्वोपचारकैस्तथा ।
पूजितास्तु तथा देवी तर्पितास्त्विति[2] पूर्ववत् ।
पुष्पाञ्जलिभिरभ्यर्च्य तर्पयेद् विधिना ततः ॥ ९५ ॥

॥ इति श्रीगन्धर्वतन्त्रे सप्तदशः पटलः ॥ १७ ॥



---

१. सम्विदेत्य-ख० ।
२. तर्पितमीति-ख० ।

# अष्टादशः पटलः

ईश्वर उवाच

प्रसादसुमुखीं देवीं भावयन् प्रजपेन्मनुम् ।
सर्वयज्ञेषु सर्वत्र जपयज्ञः प्रशस्यते ॥ १ ॥

जपात् तुष्यन्ति देवाश्च जपात् सिध्यन्ति साधकाः ।
तस्मात् सर्वप्रयत्नेन जपनिष्ठापरो भवेत् ॥ २ ॥

जपः स्यादक्षरावृत्तिरद्रुतं न विलम्बितम् ।
पूजा ध्यानं जपो होम इति कर्मचतुष्टयम् ॥ ३ ॥

प्रत्यहं साधकः कुर्यात् स्वयं चेत् सिद्धिमिच्छति ।
जपस्यान्ते शिवं ध्यायेद् ध्यानस्यान्ते पुनर्जपेत् ॥ ४ ॥

जपध्यानसमायुक्तः शीघ्रं सिध्यति मन्त्रवित् ।
जपरूपा शिवा शक्तिर्ध्यानरूपः सदाशिवः ॥ ५ ॥

तयोर्योगाद् भवेत् सिद्धिर्नान्यथा खलु पार्वति ! ।
संयुक्तं संयुतं कृत्वा यद् युक्तं न च योजयेत् ॥ ६ ॥

यथा सिद्धिस्तथा माला मालाङ्गं जपकर्मणि ।
मालया जपतो नित्यं सिद्धिरेव न संशयः ॥ ७ ॥

आशुसिद्धिकरी माला वर्णमयी समीरिता ।
अनुलोम-विलोमार्णैर्मातृकायाः सबिन्दुकैः ॥ ८ ॥

सुमेरुकैः सदा कार्या माला सर्वसमृद्धिदा[1] ।
अष्टाधिकेऽष्टवर्गैस्तु पुनरेव समापयेत् ॥ ९ ॥

---

१. ना–ख० ।

वर्णेनान्तरितं मन्त्रं कृत्वा जपेत् साधकः ।
मालाभावे ततः स्वासु अङ्गुलीषु जपेद् बुधः ॥ १० ॥

नित्यं जपं करे कुर्यान्न तु काम्यं कदाचन ।
आरभ्याऽनामिकामध्यात् प्रदक्षिणेन वै क्रमात् ॥ ११ ॥

तर्जनीमूलपर्यन्तं जपेन्नवसु पर्वसु ।
तर्जन्यग्रे तथा मध्ये योजयेत् तन्त्रभाङ् नरः ॥ १२ ॥

चत्वारि तस्य नश्यन्ति आयुर्विद्या यशो बलम् ।
अनामामध्यपूर्वं तु मेरुं कृत्वा न लङ्घयेत् ॥ १३ ॥

मेरुं प्रदक्षिणं कुर्वन्ननामामूलपर्वतः ।
अङ्गुलीपर्वभिर्मन्त्रं जपन् रेखां न संस्पृशेत् ॥ १४ ॥

अङ्गुलिर्नापयुञ्जीत किञ्चिदाकुञ्चिता तले ।
अङ्गुलीनां वियोगे तु छिद्रेण स्रवते जपः ॥ १५ ॥

स्फाटिकादिभिरप्यत्र माला जपसमृद्धिदा ।
निधाय पुरतो मालां सव्यहस्तगतां च वा ॥ १६ ॥

जपादौ पूजयेन्मालां तोयैरभ्युक्ष्य यत्नतः ।
इष्टमन्त्रेण मालायाः प्रोक्षणं परिकीर्तितम् ॥ १७ ॥

ऐं मां माले महामाले सर्वशक्तिस्वरूपिणि ।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥ १८ ॥
चन्द्र-चन्दन-कस्तूरी-रोचनाऽगुरु-कुङ्कुमैः ।
पूजयित्वा ततो मालां गृह्णीयाद् दक्षपाणिना ॥ १९ ॥

बीजं गणपतेः पूर्वमुच्चार्य तदनन्तरम् ।
अविघ्नं कुरु माले ! त्वं गृह्णीयादित्यनेन तु ॥ २० ॥

यथा हस्तान्न च्यवते जपतः स्रक् तथा चरेत् ।
हस्तच्युतायां विघ्नः स्याच्छिन्नायां मरणं भवेत् ॥ २१ ॥

यत्नात् संगोपयेदेनां भ्रमयेन्न विधूनयेत्[1] ।
गुरुं प्रकाशयेन्नैव यन्त्रं मन्त्रं कदाचन ॥ २२ ॥

अक्षमालां च मुद्रां च गुरवेऽपि न दर्शयेत् ।
भूतराक्षसवेतालाः सिद्धगन्धर्वचारणाः ॥ २३ ॥
हरन्ति प्रकटं यस्मात् तस्माद् गुप्तं जपेत् सदा ।
मालां स्वहृदयासन्नां दक्षिणस्य करस्य च ॥ २४ ॥
मध्यमाया मध्यभागे वर्जयित्वा तु तर्जनीम् ।
अनामिकाकनिष्ठाभ्यां [2]युताया नम्रभागतः ॥ २५ ॥
स्थापयित्वा तत्र मालामङ्गुष्ठाग्रेण तद्गतम् ।
प्रत्येकं बीजमादाय कुर्याद् वामेन न स्पृशेत् ॥ २६ ॥
प्रतिवारं पठेन्मन्त्रं शनैरोष्ठं न चालयेत् ।
तर्जन्या न स्पृशेन्मालां मुक्तितो गणनाक्रमः ॥ २७ ॥
अङ्गुष्ठपर्वमध्यस्था परिवर्तुं समाचरेत् ।
अङ्गुष्ठेन विना कर्म कृतं भवति निष्फलम् ॥ २८ ॥
अङ्गुष्ठं मोक्षदं देवि ! तर्जनी शत्रुनाशिनी ।
मध्यमा धनसिद्धौ स्याच्छान्तिकर्मण्यनामिका ॥ २९ ॥
कनिष्ठाकर्षणे ज्ञेया जपकर्मणि सिद्धिदा ।
मालाबीजं तु जप्तव्यं स्पृशेन्नहि परस्परम् ॥ ३० ॥
पूर्वबीजं जपन् यस्तु परबीजं तु संस्पृशेत् ।
अङ्गुष्ठेन भवेद् यस्य निष्फलं तस्य तज्जपः ॥ ३१ ॥
किटिशब्दान्विता माला छिन्ना भिन्नापि वा भवेत् ।
[3]वामोरौ दक्षपादं च विन्यस्य परमेश्वरि ! ॥ ३२ ॥

---

१. विधानयेत्–ख० ।
२. युतया–ख० ।
३. वामारो–ख० ।

बद्धवीरासनो मन्त्री दिशश्चानवलोकयन् ।
गुरुदैवतमन्त्राणामैक्यं[1] सम्भावयन् धिया ॥ ३३ ॥

अथवा चिन्तयेन्मूर्ध्नि गुरुं वर्णादिभेदतः ।
मन्त्रं च कण्ठतो ध्यात्वा चिन्तयन् हृदि देवताम् ॥ ३४ ॥

निगदेनोपांशुना वापि मानसेनाथवा प्रिये ! ।
जपारम्भं सुधीः कुर्याद् देवताभावतत्परः ॥ ३५ ॥

[2]निगदः परमेशानि ! स्पष्टवाचा निगद्यते ।
अव्यक्तः प्रस्फुरद्वक्त्र उपांशुः परिकीर्तितः ॥ ३६ ॥

धिया यदक्षरे श्रेणीं वर्णस्वरपदा[3]त्मिकाम् ।
उच्चरेदनुसंस्मृत्य स उक्तो मानसो जपः ॥ ३७ ॥

सौषुम्[4]नाध्वन्युच्चरितं ध्वनिमात्रं विभावयेत् ।
मन्त्राक्षराणि चिच्छक्तौ प्रोतानि च विभावयन् ॥ ३८ ॥

तामेव परमे व्योम्नि परमामृतबृंहितः ।
दर्शयत्यात्मसद्भावं पूजाहोमादिभिर्विना ॥ ३९ ॥

मनः संहृत्य विषयान् मन्त्रार्थगतमानसः ।
न द्रुतं न विलम्बं च जपेन्मौक्तिकपङ्क्तिवत् ॥ ४० ॥

निगदेन तु यज्जप्तं लक्षमात्रं वरानने ! ।
उपांशूच्चारणेनैव तुल्यं भवति शैलजे ! ॥ ४१ ॥

उपांशुलक्षमात्रं तु यज्जप्तं कमलेक्षणे ! ।
मानसोच्चारणात् तुल्यमेकेन वरवर्णिनि ! ॥ ४२ ॥

---

१. एकम्–ख० ।
२. निःशङ्कः–ख० ।
३. वर्णाद्युपपदात्मिकाम्–ख० ।
४. सौषुम्न–क० ।

विशेषात् त्रिपुरातन्त्रे प्रशस्तो मानसो जपः ।
मनसा च स्मरेत् स्तोत्रं वचसा वा जपेन्मनुम् ॥ ४३ ॥
उभयं निष्फलं तस्य भिन्नभाण्डोदकं यथा ।
उत्तमो दशसाहस्रः साहस्रो मध्यमः स्मृतः ॥ ४४ ॥
अधमस्तु विजानीयादष्टोत्तरशतं शिवे ! ।
इतो न्यूनं महेशानि ! न शस्तं जपकर्मणि ॥ ४५ ॥
यथाशक्ति जपं कुर्यात् संख्ययैव प्रयत्नतः ।
असंख्यातं च यज्जप्तं तत् सर्वं निष्फलं भवेत् ॥ ४६ ॥
गृह्णन्ति राक्षसा येन गणयेत् सर्वथा बुधः ।
नैकवासा जपेन्मन्त्रं बहुवस्त्राकुलोऽपि वा ॥ ४७ ॥
अप्रावृतकरो वापि शिरसा प्रावृतोऽपि वा ।
चिन्ताव्याकुलचित्तो वा क्रुद्धो वापि त्वरान्वितः ॥ ४८ ॥
निर्बोधप्रीति[1]चित्तो न न रुग्णो न क्षुधान्वितः ।
तथा चान्यमना भूत्वा प्रलपन्न जपेन्मनुम् ॥ ४९ ॥
अनासीनः शयानो वा गच्छन् भुञ्जान एव च ।
यथाविधि जपं कृत्वा मन्त्रेणाऽर्घ्योदकेन च ॥ ५० ॥
जपं तं च महादेव्या वामहस्ते समर्पयेत् ।
तेजोरूपं जपफलं शिवया स्वीकृतं स्मरेत् ॥ ५१ ॥
श्रीबीजेनैव पाणिभ्यामवतारार्णशीर्षतः ।
सारस्वतेन बीजेन हस्ताभ्यां स्थापयेत् ततः ॥ ५२ ॥
जपकर्मणि मालायाः प्रतिपत्तिरियं प्रिये ! ।
एवं यः कुरुते मालां जाप्यं च साधकः प्रिये ! ॥ ५३ ॥
सम्प्राप्नोतीप्सितं देवि ! हीनस्यायुर्विपर्ययः ।
निःसेतुं च यथा तोयं क्षणान्निम्नं प्रसर्पति ॥ ५४ ॥

---

१. प्रीत–क० ।

मन्त्रस्तथैव निःसेतुः क्षणात् क्षरति मन्त्रिणाम् ।
तस्मात् सर्वेषु मन्त्रेषु सर्वे वर्णा द्विजादयः ॥ ५५ ॥

पार्श्वयोः सेतुमादध्याज्जपकर्मणि साधकः ।
अकारं चाप्युकारं च मकारं च प्रजापतिः ॥ ५६ ॥

वेदत्रयात् समुद्धृत्य प्रणवं निर्ममे पुरा ।
जपादौ जपकर्मान्ते प्रणवं सेतुरूपकम् ॥ ५७ ॥

नियोजयेन्महेशानि ! सर्वकार्यार्थसिद्धये ।
जपान्ते जुहुयादग्निं दशांशं जपमानतः ॥ ५८ ॥

तत् तु देव्याः पुरोभागे साधकः परमेश्वरीम् ।
होमयेत् संस्कृते वह्नौ तत्र देवीं धिया स्मरन् ॥ ५९ ॥

इदं तस्यै समाभाष्य मूलमन्त्रेण सुन्दरि ! ।
स्वाहान्तेन च होतव्यं पायसैर्मधुराप्लुतैः ॥ ६० ॥

व्यस्ताव्यस्तं ततो हुत्वा सम्भवे चान्यदेवताः ।
षडाहुतीः षडङ्गेन नित्यहोमोऽयमीरितः ॥ ६१ ॥

एकतः सर्वकर्माणि एकतो जप हेऽनघे ! ।
सर्वाधिकं होमकर्म होमात् किंवा न साध्यते ॥ ६२ ॥

अनया दीक्षितो मन्त्री यदि होमविवर्जितः ।
त्रिविधं दुःखमाप्नोति नित्यं होमपरो भवेत् ॥ ६३ ॥

अकुर्वतामग्निहोत्रमग्निर्भूत्वा महेश्वरीम् ।
धनानि शीघ्रं ग्रसति गृहक्षेत्रपशूनपि ॥ ६४ ॥

बहुदुःखेनार्जितानि सञ्चितानि चिरेण तु ।
आत्मप्राणाधिकान्याशु भूत्वाग्निर्ग्रसतीश्वरी ॥ ६५ ॥

अग्निहोत्रं सदा कुर्यात् तस्मादग्निमयीश्वरी ।
अग्निहोत्रविधानेन सम्पदां भाजनं भवेत् ॥ ६६ ॥

अग्निहोत्रपरस्येह वह्निर्भवति शीतलः ।
गृहे क्षेत्रादिवित्तेषु वर्धते जाठरः परः ॥ ६७ ॥

अग्निरेव मुखं देव्यास्तस्मादग्नौ हुनेत् सदा ।
पक्षतो मासतो वापि वर्षतो वा यथाविधि ॥ ६८ ॥

होमाशक्तौ जपेद् विद्यां होमद्विगुणसंख्यया ।
स्तुवन् नानाविधैः स्तोत्रैः प्रणमेत् सप्रदक्षिणम् ॥ ६९ ॥

एवं नानाविधैर्देवीं सम्भाष्य साधकोत्तमः ।
भक्तिप्रवणचित्तेन निवेद्यानि निवेदयेत् ॥ ७० ॥

अनुलेपं च सिन्दूरं नेत्राञ्जनमनुत्तमम् ।
धूपामोदं प्रदीपांश्च दर्पणं व्यञ्जनं तथा ॥ ७१ ॥

छत्रं च चामरं चैव घण्टानादमनुत्तमम् ।
वाद्यं गीतं तथा नृत्यं क्रीडाकौतुकमङ्गले ॥ ७२ ॥

निर्मञ्छनं च सिद्धार्थैर्दीपावलिभिरेव च ।
दूर्वार्पणं शिरोदेशे साक्षतं च शनैः शनैः ॥ ७३ ॥

भक्तिप्रवणचित्तं च दास्याम्यात्मनिवेदनम् ।
एवं निवेदयेद् देव्यै निवेद्यानि तथा बुधः ॥ ७४ ॥

स धन्यः सर्वलोकानां नान्यः पूज्यश्च भूतले ।
देवतानामृषीणां च दैत्यानामथ रक्षसाम् ॥ ७५ ॥

गन्धर्वाणामशेषाणां नागादीनां महात्मनाम् ।
अस्माकं चापि सर्वेषां माननीयः सुरासुरैः ॥ ७६ ॥

सार्वभौमपदं लब्ध्वा कैवल्यं लभते ततः ।
अनुलिप्य महादेवीं वासयेज्जगतीमिमाम् ॥ ७७ ॥

सिन्दूरैस्तिलकं देव्यै वश्याः सर्वाश्च योषितः ।
दिव्यज्ञानं भवेत् तस्य दिव्याञ्जनमनुत्तमम् ॥ ७८ ॥

माल्यादीनां प्रदानेन महालक्ष्मीः स्थिरा गृहे ।
ताम्बूलस्य प्रदानेन पानीयस्यापि शोभने ॥ ७९ ॥

सदानन्दमयो भूयात् सुखदुःखविवर्जितः ।
धूपैः प्रधूपिता देवी दीपैश्चापि नीराजिता ॥ ८० ॥

ददाति वित्तं पुत्रांश्च धरां भूतिमरोगिताम् ।
धान्यं चाप्यखिलान् कामान् मतिं धर्मे तथा शुभाम् ॥ ८१ ॥

दर्पणं दर्शयित्वैव सारूप्यं लभते विभोः ।
व्यजनैश्चामरैर्वापि वीजयित्वा महेश्वरीम् ॥ ८२ ॥

तं वीजयेन्महालक्ष्मीश्चामरद्वयधारिणी ।
निमेषार्धं महादेव्याश्छत्रं चोपरि धारयेत् ॥ ८३ ॥

तस्योपरि महच्छत्रं परिपूर्णेन्दुसोदरम् ।
लोकपालैः सहागत्य सर्वजित् त्रिदशां पतिः ॥ ८४ ॥

घण्टाशङ्खनिनादेन तोषयेद् वा महेश्वरीम् ।
भेरीदुन्दुभिवाद्यैश्च मरुत्वांस्तमनुव्रजेत् ॥ ८५ ॥

अपानो वादयेद् घण्टां शङ्खं वा स्वयमेव हि ।
स निर्लज्जः कथं ब्रूते पूजयामि महेश्वरीम् ॥ ८६ ॥

ब्रह्मा विष्णुर्हरश्चान्ये सर्वे शङ्खादिवादिनः ।
शङ्खघण्टामयस्तस्माद् वादयेद् देवसन्निधौ ॥ ८७ ॥

वाद्यं यः कारयेद् देव्यै गीतं नृत्यं तथैव च ।
तुम्बुरुर्नारदश्चैव हाहा हूहूस्तथैव च ॥ ८८ ॥

प्रसादयन्ति तं नित्यं विद्याधराप्सरादयः ।
सुवासिन्यो मदप्रौढा वेशयित्वा यथाविधि ॥ ८९ ॥

वेश्यास्त्वलङ्कृताः सर्वाः क्रीडयेयुरलं यदि ।
देवीमुद्दिश्य पुरतस्तस्य पुण्यफलं शृणु ॥ ९० ॥

उर्वशीप्रमुखा वेश्याः क्रीडयेयुरलं मुदा ।
कौतुकं कारयेद् देव्यै हास्यानन्दाय यद् भवेत् ॥ ९१ ॥

तेन प्रमुदितो नित्यं देवीलोके महीयते ।
मङ्गलानि महादेव्यै कारयित्वा यथाविधि ॥ ९२ ॥

विमानवरमारुह्य ब्रह्मविष्णुपुरःसरम् ।
सर्वकामसुखं दिव्यं सर्वरत्नसमन्वितम् ॥ ९३ ॥

अनुव्रजन्तमिन्द्राद्यैः सपत्नीकैः सवाहनैः ।
देवीलोके समायान्तं समागत्य सुराङ्गनाः ॥ ९४ ॥

अरुन्धत्यथ सावित्री तमहल्या शची तथा ।
अनसूयाऽदितिश्चैव मातरश्च सहानुगाः ॥ ९५ ॥

निर्मञ्छ्य मौक्तिकैर्दिव्यै रत्नदीपैर्निवेद्य च ।
अक्षयं मङ्गलं शीर्षे अर्पयन्ति मुदान्विताः ॥ ९६ ॥

गोशृङ्गोपरि यत् कालं तिष्ठेत् सर्षपमर्पितम् ।
तावच्चित्ते महादेव्यै भक्तिं कृत्वा नरः प्रिये ॥ ९७ ॥

पुनाति सर्वपापेभ्यः पापात्मा पापकृद् यदि ।
पितृमातृकुलैः सार्धं [1]स्वर्गलोके महीयते ॥ ९८ ॥

ततः पुनरिहागत्य चिरेण भक्तिमान् प्रभुः ।
सार्वभौमपदं लब्ध्वा कैवल्यमाप्नुयात् ततः ॥ ९९ ॥

प्राचुर्यादथ भक्तेस्तु जगन्मातुः पदं प्रति ।
अनुमेयमनेनैव बहुना वचसा च किम् ॥१००॥

भक्तिं पुनर्महेशानि ! यदि ह्यनन्यचित्तदा ।
भजनं सर्वभावेन सेव्यसेवकवर्त्मना ॥१०१॥

---

१. सर्ग–ख० ।

जगन्मातर्महादेव्या दासोऽहमिति भाषते ।
सकृद् यस्य हि भृत्यास्ते पुरन्दरमुखाः सुराः ॥१०२॥
पितृमातृमुखान् विप्रान् गाश्च भृत्याननेकशः ।
हत्वा निवेदयेद् यस्तु आत्मानं तत्पदाम्बुजे ॥१०३॥
शुद्धागुणमयं देहं परं ब्रह्माधिगच्छति ।
अहं पुनरिदं विश्वं ब्रह्माण्डं ब्रह्मणा सह ॥१०४॥
भित्वा छित्वा तथा लोकान् सन्तोष्य परमेश्वरीम् ।
तस्यै निवेद्य चात्मानं यास्यामि ब्रह्म शाश्वतम् ॥१०५॥
तस्माद् यत् क्रियते कर्म ममेति च यदा भवेत् ।
आत्मानं तत्पदाम्भोजे महामन्त्रेण चार्पयेत् ॥१०६॥
तर्पणानि पुनर्दत्त्वा नव मुद्राः प्रदर्शयेत् ।
मुदं रान्ति च ता यस्मात् तेन मुद्राः प्रकीर्तिताः ॥१०७॥
कामं मोक्षं तथा धर्ममर्थं मुद्रान्विता स्वयम् ।
ददाति साधकायाशु देवी गन्तुं समुत्सुका ॥१०८॥
संक्षोभ-द्राविणी-कर्ष-वश्योन्माद-महाङ्कुशाः ।
खेचरी बीजयोन्याख्या नव मुद्रास्तु ताः क्रमात् ॥१०९॥
दर्शितास्वासु मुद्रासु भवेत् पूजासमापनम् ।
स्वस्वबीजेन मुद्राया बन्धनं परिकीर्तितम् ॥११०॥
दर्शनं मूलमन्त्रेण त्यागः क्रोधोद्भवेन च ।
मुद्रानुष्ठानमज्ञात्वा यो मुद्रां धारयेद् बुधः ॥१११॥
विफलं तस्य तत् सर्वं जीवहीनं वपुर्यथा ।
पूजादौ दर्शितास्वासु देव्यास्तु सन्निधिर्भवेत् ॥११२॥
भक्तेः प्राचुर्यमत्रैव श्रद्धयाऽभ्यर्चनं तथा ।
निर्जनश्चात्मशुद्धिश्च दोषरहितता तथा ॥११३॥

पूजोपकरणस्येह बाहुल्यं च पवित्रता ।
सौरभेनातिसौरभ्यात् चमकारकृतिस्तथा ॥११४॥
संस्थानपौरुषेणैव मनोहारित्वमात्मनः ।
सौमकस्य सुवेशं च यष्टुः काकूक्तिरेव च ॥११५॥
पूजाविधिसुदाक्षं च तथैवानन्यचित्तता ।
स्तुतिर्नतिर्जपश्चैव बलिः पेयं तथैव च ॥११६॥
हेतुरत्र समाख्यातो देवीसान्निध्यकारकः ।
मद्यं श्राव्यं तु सिन्दूरं स्वाङ्गरागेषु कुङ्कुमम् ॥११७॥
इति यो यत्र सम्प्रोक्तो विशेषस्त्रिपुरार्चने ।
एभिर्विशेषैः सहितं त्रिपुरातन्त्रगोचरम् ॥११८॥

॥ इति गन्धर्वतन्त्रे अष्टादशः पटलः ॥ १८ ॥



# एकोनविंशः पटलः

ईश्वर उवाच

अथ वक्ष्ये महेशानि ! बटुकादिविधिं शृणु ।
येनानुष्ठितमात्रेण साधकः सिद्धिमाप्नुयात् ॥ १ ॥
बलिभिस्तर्पिता ह्येते पूजिता यस्य सुव्रते ! ।
सिद्धयः सकलास्तस्य करस्था नात्र संशयः ॥ २ ॥
अन्यथा रुषितैस्तैर्हि सविघ्नैः परिभूयते ।
तस्मात् तेभ्यः प्रयत्नेन बलिं कुर्वीत हेतुना ॥ ३ ॥
मांसेन साधितं भक्तं खण्डं दधि सपिष्टकम् ।
मांसानि विविधान्यत्र सुदग्धं मीनमेव च ॥ ४ ॥

श्रीचक्रमभितो देवि ! मण्डलानां चतुष्टयम् ।
ईशान-वह्नि-नैर्ऋत्य-वायुकोणेषु पार्वति ! ॥ ५ ॥

ध्येयो देवस्तदा विष्णुः पुत्रोऽयं बटुरूपधृक् ।
बटुकः कमलाक्षस्तु स्वर्णगौरश्चतुर्भुजः ॥ ६ ॥

गदां पद्मं च शङ्खं च चक्रं चापि करैर्धृतम् ।
विद्रुतं पुरतो देव्या गजेन्द्रासनसंस्थितम् ॥ ७ ॥

वारुणं शक्रयुक्तं च चतुर्दशस्वरान्वितम् ।
सहितं चन्द्रबिन्दुभ्यां बटुकाय समन्ततः ॥ ८ ॥

अनेन मनुना देवि ! गन्धाद्यैः पूजयेत् ततः ।
तदग्रे परमेशानि ! पात्रं चान्नोदकान्वितम् ॥ ९ ॥

कृत्वा च विधिवत् तत्र बलिं मन्त्रेण दापयेत् ।
एह्येहि देवि ! पुत्रान्ते बटुकान्तेऽथ नाथ च ॥ १० ॥

कपिलान्ते जटाभार भास्ववान्ते त्रिनेत्र च ।
ज्वाला मुख्यं च सर्वान्ते [1]विघ्नं नाशय नाशय ॥ ११ ॥

सर्वोपचारसहितं बलिं गृह्ण द्विधा पदम् ।
वह्निजायान्वितो मन्त्रो बटुकस्य उदाहृतः ॥ १२ ॥

वामाङ्गुष्ठानामिकाभ्यां बलिं तस्मै निवेदयेत् ।
अस्यैवाराधनं कृत्वा मन्दभाग्योऽपि सुव्रते ॥ १३ ॥
सर्वबाधाविनिर्मुक्तः सम्पदां भाजनं भवेत् ।
यजनं चास्य देवस्य साङ्गेन कथितं पुरा ॥ १४ ॥
बलिप्रदानमात्रं तु प्रसङ्गात् कथितं शिवे ! ।
डाकिनीप्रमुखाः पश्चाद् बलिना तर्पयेत् ततः ॥ १५ ॥
तथैव वामतो देव्या मण्डले योगिनीः स्मरेत् ।
अथवा चिन्तयेदेता योगिनीः सर्वसिद्धिदाः ॥ १६ ॥

योगिन्यः कामरूपाश्च तप्तकाञ्चनभास्वराः ।
मत्ताः कङ्कालमालाढ्याः कटीतटभरानताः ॥ १७ ॥

गलद्रुधिरगन्धाढ्या रक्तवस्त्रोत्तरीयकाः ।
लिङ्गं पाशं कपालं च शृणिं चापि धृताः करैः ॥ १८ ॥
अभिमतं सभक्तानां दीयमाना मुदान्विताः ।
गन्धादिभिः समभ्यर्च्य बलिं मन्त्रेण दापयेत् ॥ १९ ॥

यामात्मकं समुच्चार्य योगिनीभ्यस्ततः परम् ।
स्वाहान्ते सर्ववर्णान्ते योगिनीपदमालिखेत् ॥ २० ॥

कवचं चास्त्रमालिख्य वह्निजायां पुनर्लिखेत् ।
अनेन मनुना वापि योगिनीनां बलिं हरेत् ॥ २१ ॥

---

१. विघ्नान्–क० ।

अङ्गुष्ठमध्यमानामा योन्याकारेण योजयेत् ।
कृताञ्जलिस्ततो देवि ! सम्प्रार्थयेदनेन तु ॥ २२ ॥

ऊर्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले निस्तले वा
पाताले वा पवनसलिलयोर्यत्र कुत्र स्थिता वा ।
क्षेत्रे पीठोपपीठादिषु कृतपदा धूपदीपादिकेन
प्रीता देव्यः सदा नः शुभबलिविधिना पान्तु देवेन्द्रवत्यः ॥ २३ ॥

क्षेत्रपालं महादेव्या वामतः परिचिन्तयेत् ।
अपराजितवल्लीभिर्वेष्टितस्य महात्मनः ॥ २४ ॥

आरक्तवर्णः सततं कुसुमैरुपशोभिते ।
तिन्तिडीकल्पवृक्षस्य सच्छाये रत्नभूषिते ॥ २५ ॥

नीलाञ्जनचयप्रख्यं दधानं करपङ्कजैः ।
कृपाणं च कपालं च शूलं डमरुमेव च ॥ २६ ॥

ध्यायेच्च [1]सममत्यर्थं दंष्ट्राभिन्नाधरं परम् ।
पूजयित्वा विधानेन बलिं मन्त्रेण दापयेत् ॥ २७ ॥

षड्दीर्घस्वरसंभिन्नं क्षकारं विलिखेत् प्रिये ! ।
ततः क्षेत्रपदं पात्रधूपदीपादि वा लिखेत् ॥ २८ ॥

सहितं बलिमालिख्य गृह्ण गृह्ण ततो वदेत् ।
वह्निजायान्वितो मन्त्रः क्षेत्रपालस्य पार्वति ! ॥ २९ ॥

वाममुष्टिं विधायादौ तर्जनीं सरलां कुरु ।
अनया मुद्रया देवि ! बलिं तस्मै निवेदयेत् ॥ ३० ॥

चतुर्थमण्डले देव्याः पुरतो यक्षमागतम् ।
नवीननीरदश्यामं सर्वाभरणभूषितम् ॥ ३१ ॥

---

१. सममतर्थम्–ख० ।

तुन्दिलं गजवक्त्रं च चतुर्बाहुं दिगम्बरम् ।
वामदक्षोर्ध्वपाणिभ्यां पाशाङ्कुशधरं विभुम् ॥ ३२ ॥
दक्षिणाधःकरेणैव मधुपूर्णकपालकम् ।
सिन्दूरसदृशाकारामुद्दाममदविह्वलाम् ॥ ३३ ॥
धृतरक्तोत्पलामन्यपाणिना तद्‌ध्वजःस्पृशाम् ।
आलिङ्ग्य वामहस्तेन तस्या मदनमन्दिरम् ॥ ३४ ॥
[1]स्पृशन्तं परमेशानं ध्यात्वा तं परिपूजयेत् ।
गां गीं[2] गूं त्रयमालिख्य ङेन्तं गणपतिं ततः ॥ ३५ ॥
वरान्ते वरदान्ते च सर्वान्ते जनमालिखेत् ।
मे वशं चानय प्रोच्य बलिं गृह्ण द्विधा पदम् ॥ ३६ ॥
वह्निजायान्वितो मन्त्रो गणपस्य उदाहृतः ।
मुष्टिमध्यस्थितां देवि ! अङ्गुलीं दण्डवत् कुरु ॥ ३७ ॥
गजतुण्डा महामुद्रा गणपस्य सदा प्रिया ।
एतदन्ते महेशानि ! सर्वभूतबलिं हरेत् ॥ ३८ ॥
सुरा नराश्च पितरो यक्षरक्षःपिशाचकाः ।
एते भूताः समुद्दिष्टा बलिभिस्तान् प्रतर्पयेत् ॥ ३९ ॥
बलिभिस्तर्पितास्त्वेते यान्ति यज्ञे सहायताम् ।
अतर्पिता यदा तस्मिन् ते वै विघ्नस्वरूपिणः ॥ ४० ॥
आत्मानं च क्रियाः सर्वा महामन्त्रेण पार्वति ! ।
ततो ब्रह्मस्वरूपिण्यै विशेषेण समर्पयेत् ॥ ४१ ॥
वारत्रयमितः पूर्वं प्राणबुद्धिं ततः परम् ।
देहधर्माधिकारान्ते जाग्रत्स्वप्नसुषुप्तिषु ॥ ४२ ॥

---

१. स्पृशन्त–ख० ।
२. गां–ख० ।

मनसा च ततो वाचा कर्मणा च ततः परम् ।
हस्ताभ्यां च ततः पद्भ्यामुदरेण ततः परम् ॥ ४३ ॥

शिश्ना च यत् स्मृतं पश्चाद् यदुक्तं यत् कृतं भवेत् ।
मां मदीयं ततो देवि ! सकलं च ततः परम् ॥ ४४ ॥

तथैव त्वयि शब्दान्ते ब्रह्मण्यर्पितमस्त्विति ।
स्वाहान्तो मनुरित्युक्तो मन्त्रः स्वात्मसमर्पणे ॥ ४५ ॥

एतदन्ते महामन्त्रान् प्रयतः समुदीरयेत् ।
आवाहनं न जानामि न जानामि विसर्जनम् ॥ ४६ ॥

पूजाभागं न जानामि त्वं गतिः परमेश्वरि ! ।
सत्यं सत्यं पुनः सत्यमुत्क्षिप्य भुजमुच्यते ॥ ४७ ॥

कायेन मनसा वाचा त्वत्तो नान्या गतिर्मम ।
अन्तश्चारेण भूतानामन्तस्त्वमेव संस्थिता ॥ ४८ ॥

यद् दत्तं भक्तिमात्रेण पत्रं पुष्पं फलं जलम् ।
आवेदितं च नैवेद्यं तद् गृहाणानुकम्पया ॥ ४९ ॥

विधिहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् ।
यदक्षरं परिभ्रष्टं मात्राहीनं च यद् भवेद् ॥ ५० ॥

अनङ्गव्यवधानादि अपराधशतानि च ।
क्षन्तुमर्हसि मे देवि ! त्वमेव शरणं यतः ॥ ५१ ॥

त्वयि मे हृदयं चास्तु त्वयि चित्तं मनस्त्वयि ।
त्वत्पूजायां महामाये ! संवर्द्धन्तां प्रयोजिताः ॥ ५२ ॥

ये पुनर्विघ्नकर्तारस्ते नश्यन्तु त्वदाज्ञया ।
मन्त्रेषु पठितेष्वेषु स्वयं देवी प्रसीदति ॥ ५३ ॥

दातुं देवी चतुर्वर्गमित्येतन्नात्र संशयः ।
एवं सम्प्रार्थ्य देवेशि ! स्तुत्वा नत्वाऽतिभक्तितः ॥ ५४ ॥

प्रधानदेवतामूर्त्तौ परिवारान् समर्पयेत् ।
तस्या एव महेशान्याः शरीरे सर्वदेवताः ॥ ५५ ॥

विलीनाः सन्तु मूलेन देव्यङ्गे मीलिताः स्मरेत् ।
अथ कामकलारूपमात्मानं परिचिन्तयेत् ॥ ५६ ॥

ततस्तां परमेशानीं विसृजेद् हृदयाम्बुजे ।
ज्ञानतोऽज्ञानतो वापि यन्मया क्रियते शिवे ! ॥ ५७ ॥

तव कृत्यमिदं सर्वमिति मातः ! क्षमस्व मे ।
उद्वास्य परमेशानीं खेचर्यात्मनि योजयेत् ॥ ५८ ॥

अनेनैव तु मन्त्रेण ध्यायंस्तां स्थापयेत् हृदि ।
तिष्ठ देवि ! परे स्थाने स्वस्थाने परमेश्वरि ! ॥ ५९ ॥

विसृज्यैवं महेशानीं ततः पूरकवायुना ।
संहारमुद्रयाऽऽदाय समाघ्राय गुरूक्तया ॥ ६० ॥

तच्चैतन्यं समूलेन मूल एव निवेशयेत् ।
प्राणायामैस्तु सन्तर्प्य यजेन्निर्माल्यधारिणीम् ॥ ६१ ॥

निर्माल्यं निक्षिपेद् भूमौ नीत्वा तां चित्कलां पुरः ।
अस्या जगन्मयी सैव सात्र वा शोषिका परा ॥ ६२ ॥

तत्परं नहि वस्त्वेह तत्त्वज्ञानादहं प्रभुः ।
महापद्मवनान्तःस्थश्रृङ्गाटोदरसंस्थिताम् ॥ ६३ ॥

देवीं परां समालोक्य आत्मानं तु विचिन्तयेत् ।
उन्मन्यते शिवो भूत्वा तिष्ठेदानन्दनिर्भरः ॥ ६४ ॥

शिवेनैक्यं समासाद्य अन्तं यावन्मनोलयः ।
विवर्त्तितसमाधिस्तु गुरवे मूर्द्धवासिने ॥ ६५ ॥

आललाटं नमस्कुर्यान्निवेद्याऽर्घ्यं तदाज्ञया ।
ऐशान्यां मण्डलं कृत्वा द्वारपद्मविवर्जितम् ॥ ६६ ॥

शोषिकां सुन्दरीं तत्र निर्माल्येन प्रपूजयेत् ।
लेह्यचोष्यान्नपानादि ताम्बूलमनुलेपनम् ॥ ६७ ॥
निर्माल्यं भोजनं तुभ्यं ददामि श्रीशिवाज्ञया ।
अनेन मनुना देव्या यजेन्निर्माल्यधारिणीम् ॥ ६८ ॥

॥ इति गन्धर्वतन्त्रे एकोनविंशः पटलः ॥ १९ ॥

# विंशः पटलः

देवी उवाच

कथं सा परमेशानि ! शेषिका पूज्यते शिवे ! ।
कीदृशी सा महादेवी तदशेषं वद प्रभो ! ॥ १ ॥

ईश्वर उवाच

शेषिकां सुन्दरीं वक्ष्ये देवीं गुह्यतमां प्रिये ।
उच्छिष्टपूर्विकां देवीं मातङ्गीं सर्वसिद्धिदाम् ॥ २ ॥
सर्वापत्तारिणीं विद्यां सर्वदोषविवर्जिताम् ।
यया विज्ञातया देवि ! क्षयं गच्छन्ति चापदः ॥ ३ ॥
स्थावरं जङ्गमं चैव कृत्रिमं चाङ्गजं तथा ।
विद्येयं नाशयेद् देवि ! स्वपराङ्गसमाश्रितम् ॥ ४ ॥
इयं विद्या महाविद्या सर्वपापापहारिणी ।
स्वर्गदा मोक्षदा चेयं राज्यसौभाग्यदा तथा ॥ ५ ॥
इयं देवी मया पूर्वं साधिता देवि ! निर्जने ।
सकृदुच्चरिता विद्या ब्रह्महत्याविनाशिनी ॥ ६ ॥
य उच्छिष्टमुखो भूत्वा स्मरेद् देवीं कदाचन ।
तदाचान्तो भवेद् देवि ! विनैवाऽऽचमने कृते ॥ ७ ॥
निर्धनो धनमाप्नोति मूर्खो विद्यामवाप्नुयात् ।
मन्त्रं शृणु महादेव्या यथावत् कथयामि ते ॥ ८ ॥
उच्छिष्टशब्दमुच्चार्य तथा चण्डालिनीति च ।
सुमुखीति ततो देवि ! महापिशाचिनीति च ॥ ९ ॥
मायाबीजं ततः पश्चात् ठकारद्वितयं तथा ।
सविसर्गं महादेवि ! सर्वसिद्धिप्रदायकम् ॥ १० ॥

अथान्यं सम्प्रवक्ष्यामि मन्त्रं परमदुर्लभम् ।
वाङ् माया कमला बीजं नमो भगवतीति च ॥ ११ ॥

मातङ्गेश्वरि सर्वान्ते जनवशङ्करीति च ।
वह्निजायान्वितो मन्त्रः सर्वसिद्धिप्रदायकः ॥ १२ ॥

नारिदोषोऽत्र देवेशि ! न विघ्नो नियमस्तथा ।
अङ्गन्यासकरन्यासौ नाङ्गी चैवास्य देवता ॥ १३ ॥

यस्य तिष्ठति मन्त्रोऽयं स भवेत् सुरपादपः ।
ध्यानमस्याः प्रवक्ष्यामि यथावदखिलेश्वरि ! ॥ १४ ॥

शवोपरि समासीनां रक्ताम्बरपरिच्छदाम् ।
रक्तालङ्कारभूषाढ्यां गुञ्जाहारविराजिताम् ॥ १५ ॥

नवयौवनसम्पन्नां पीनोन्नतपयोधराम् ।
कपालकर्तृकाहस्तां परमज्योतिरूपिणीम् ॥ १६ ॥

विधानं चात्र वक्ष्यामि शृणु देवि ! मनोहरम् ।
भोजनानन्तरं देवि ! विनैवाचमने कृते ॥ १७ ॥

वह्निं कृत्वा प्रथमतो मूलमन्त्रेण साधकः ।
ततो मन्त्रं जपेद् ध्यात्वा जपेदयुतमानतः ॥ १८ ॥

उच्छिष्टेनैव कर्तव्यो जपोऽस्याः सिद्धिमिच्छेता[1] ।
अपरं च प्रवक्ष्यामि शृणु देवि ! फलप्रदम् ॥ १९ ॥

होमसन्तर्पणं चैव सर्वकार्यार्थसिद्धये ।
स्थण्डिले मण्डलं कृत्वा चतुरस्रं सबिन्दुकम् ॥ २० ॥

पूजयेन्मण्डलं देव्या मूलमन्त्रेण साधकः ।
तत्र देवीं समावाह्य बह्निरूपव्यवस्थिताम् ॥ २१ ॥

---

१. इच्छतः-ख० ।

सम्पूज्यैव चरेद् होमं दधिसिद्धार्थतण्डुलैः ।
सहस्रैकविधानेन राजा भवति वश्यगः ॥ २२ ॥

मार्जारस्य तु मांसेन देव्यै होमं समाचरन् ।
स प्राप्नोति परां विद्यां शस्त्रशास्त्रवशीकृताम् ॥ २३ ॥

कुर्याच्छागस्य मांसेन होमं मधुघृतान्वितम् ।
सहस्रैकप्रमाणेन भवन्ति फलसिद्धयः ॥ २४ ॥

विद्याकामश्चरेद् होमं मधुना सह सर्पिषा ।
अयुतैकप्रमाणेन सिद्धिरिष्टा भवेद् ध्रुवम् ॥ २५ ॥

सद्यो मार्जारमांसेन घृतेन मधुना सह ।
चाण्डालकेशयुक्तेन भवेदाकर्षणं महत् ॥ २६ ॥

शशकस्य तु मांसेन मधुनालोडितेन च ।
कृत्वा होममवाप्नोति विद्यावसुवरस्त्रियः ॥ २७ ॥

धत्तूरकाष्ठयोगेन चितावह्नौ तु मन्त्रवित् ।
कोकिलाकाकपक्षैश्च होमैः शत्रून् विनाशयेत् ॥ २८ ॥

उच्चाटनाय शत्रूणां होमं कुर्याच्च मन्त्रवित् ।
पूर्वोक्तेन विधानेन चिताकाष्ठहुताशने ॥ २९ ॥

उलूककाकपक्षाभ्यां कृत्वा होमं निरन्तरम् ।
द्वेषयेद् द्विष्टमन्योन्यकलहाकुलसङ्कुलम् ॥ ३० ॥

उलूकपक्षहोमेन गर्भपातो भवेत् स्त्रियाः ।
बिल्वपत्रैः समभ्यक्तैर्मासमेकं निरन्तरम् ॥ ३१ ॥

सहस्रैकप्रमाणेन कृत्वा होमं समाहितः ।
अपि वन्ध्या लभेत् पुत्रं चिरजीविनमुत्तमम् ॥ ३२ ॥

बन्धूककुसुमं हुत्वा रक्तं मधुसितान्वितम् ।
दुर्भगा चैव या नारी सुभगा सा न संशयः ॥ ३३ ॥

हठादागत्य कामार्ता बलादालिङ्गयन्ति तम् ।
इयं देवी महेशानि ! वामाचारफलप्रदा ॥ ३४ ॥

दक्षिणाचारयोगेन न भवेत् फलदायिनी ।
भोजनानन्तरं चास्या बलिं दद्याद् दिने दिने ॥ ३५ ॥

उच्छिष्टेन जपेन्मन्त्रं शतमष्टोत्तरं शिवे ! ।
उजटे वा श्मशाने वा शून्यागारे चतुष्टयम् ॥ ३६ ॥

बलिप्रदानतो देवी प्रत्यक्षा भवति ध्रुवम् ।
अनयैवाभिसन्मन्त्रा[1] ओषध्यः सर्वसिद्धिदाः ॥ ३७ ॥

चन्द्री चक्री तथा वज्री त्रिशूला मुद्गरी तथा ।
देहस्था समरे पुंसां सर्वायुधविधारिणी ॥ ३८ ॥

गृहीतं पुष्पनक्षत्रे अपामार्गस्य मूलकम् ।
लेपमात्रेण धीराणां सर्वायुधनिवारणम् ॥ ३९ ॥

अर्जुनं च नारजं च चम्पकोन्मत्तकः कुहूः ।
लेपमात्राज्जयी युद्धे वज्रदेहो भवेन्नरः ॥ ४० ॥

खर्जूरी मुखमध्यस्था कटीबद्धा च केतकी ।
भुजदण्डस्थितस्तालः सर्वायुधनिवारणः ॥ ४१ ॥

दयाबाहुस्थितश्चार्को वामे तु हृदयेऽथवा ।
रुद्रः पुष्पगतो युक्ते वज्रदेहो भवेन्नरः ॥ ४२ ॥

त्रिलोहवेष्टितं कृत्वा रसं वज्राभसंयुतम् ।
रणस्थं च करस्थं च सर्वायुधनिवारणम् ॥ ४३ ॥

गिरिकर्णी शमीं दूर्वां गुञ्जां श्वेतां समाहरेत् ।
चन्दनेनान्विताः सर्वास्तिलकाद् विजयी रणे ॥ ४४ ॥

---

१. मन्त्रा—ख० ।

अधःपुष्पा शिखी चैव श्वेता च गिरिकर्णिका ।
गोरोचनासमायुक्ता तिलकं शत्रुमोहनम् ॥ ४५ ॥
कणकार्को वह्निरिन्द्रद्रुः पञ्चमस्तथा ।
करोति तिलकं यस्तु पश्येत् तं पञ्चधा रिपुः ॥ ४६ ॥
कृष्णसर्पकरालं तु रसं मृत्तिकयान्वितम् ।
सितगुञ्जां वपेत् तत्र तस्या मूलं समाहरेत् ॥ ४७ ॥
हरीतक्या समायुक्तं तिलकं शत्रुमोहनम् ।
कृततिलकभटं दृष्ट्वा पश्येत् स्वं [1]श्वावृतं रिपुः ॥ ४८ ॥
[2]श्वगणैर्भक्ष्यमाणस्तु पतत्येव ततो भुवि ।
छाया यस्य जले याति संग्राह्यः कासमर्दकः ॥ ४९ ॥
अनेन तिलकेनारिः कूपवापीं प्रपश्यति ।
ब्रह्मदण्डी च कौमारी ईश्वरी वैष्णवी तथा ॥ ५० ॥
वाराही वज्रिणी चान्द्री महालक्ष्मीस्तथैव च ।
एताश्चोषधयो दिव्यास्तथैता मातरः स्मृताः ॥ ५१ ॥
कृतकोटिं करे बद्ध्वा सर्वशस्त्रनिवारिणी ।
बहुना तु किमुक्तेन संक्षेपात् कथ्यतेऽधुना ॥ ५२ ॥
षट्कर्मशालिनी विद्या प्रयोगात् सर्वसिद्धिदा ।
मूलविद्याप्रयोगेण[3] सिद्धिहानिर्भवेद् ध्रुवम् ॥ ५३ ॥
प्रयोगेच्छा यदा देवि ! तदैनां च प्रयोजयेत् ।
अनयाऽखिलकर्माणि साधयेत् साधकोत्तमः ॥
प्रसङ्गात् कथितं देवि ! गोपनीयं प्रयत्नतः ॥ ५४ ॥

इति गन्धर्वतन्त्रे विंशः पटलः ॥ २० ॥



१. स्वावृतं-ख० ।
२. स्वगणैः-ख० ।
३. प्रयोगेन-ख० ।

# एकविंशः पटलः

ईश्वर उवाच

ततो वै मूलमन्त्रेण महेशानीं[1] धिया स्मरन् ।
अघ्राश्य च हि निर्माल्यं पादोदकपुरःसरम् ॥ १ ॥

शिरसा धारयेद् यस्तु भूमौ वा बिन्दु पातयेत् ।
ब्रह्महा स तु विज्ञेयो यद्भक्त्या चात्मसात्कृतम् ॥ २ ॥

शिवं गन्धं समादाय शङ्खतोये विलोकयेत् ।
सव्यहस्ते समादाय दक्षहस्तेन मन्त्रवित् ॥ ३ ॥

सप्तधा मन्त्रितं कृत्वा सर्वतीर्थमयं स्मरेत् ।
प्रोक्षयेत् तेन चाऽऽत्मानं मूलदेवीं हृदि स्मरन् ॥ ४ ॥

पादोदकं पिबेद् भक्त्या शेषं मूर्द्धनि योजयेत् ।
सर्वाङ्गलेपनं कृत्वा यन्त्रलेपादिकं च यत् ॥ ५ ॥

निर्मञ्छेत् कामबीजेन मूलमन्त्रेण चात्मनः ।
अनामिकोग्रपर्वेण ललाटमपि संस्पृशेत् ॥ ६ ॥

निर्माल्यं शिरसा धार्यं सर्वाङ्गेष्वनुलेपनम् ।
मन्त्रेण भास्करायार्घ्यमच्छिद्रार्थं निवेदयेत् ॥ ७ ॥

जानुभ्यामवनीं गत्वा पठित्वा मन्त्रमीरितम् ।
एकाग्रमनसा वाग्भिरच्छिद्रमवधारयेत् ॥ ८ ॥

यज्ञच्छिद्रं तपश्छिद्रं यच्छिद्रं पूजने मम ।
सर्वं तदच्छिद्रमस्तु मार्तण्डस्य प्रसादतः ॥ ९ ॥

---

१. महेशानि–ख० ।

मार्तण्डभैरवं पश्चात् प्रणम्य च विलोकयेत् ।
आदावन्ते च देवस्य नमस्कारविलोकने ॥ १० ॥
कुर्याच्च सर्वदा भक्त्या धर्मकामार्थसिद्धये ।
यज्ञाधिकारितामादौ पश्चात् सम्पूर्णता विधेः ॥ ११ ॥
विधेर्विपर्ययात् तस्य कृतं हरन्ति राक्षसाः ।
तमुद्यन्तं विलोक्यैव यजेदस्तमितं ततः ॥ १२ ॥
उभयोरेकतां मत्वा तमुद्यन्तं पुनस्ततः ।
स एवादौ स चान्तःस्थः सोऽनस्थो ह्यन्त एव सः ॥ १३ ॥
आद्यमन्तं विदित्वैव सर्वकर्मफलं लभेत् ।
ततस्तु पुष्पनैवेद्यतोयपात्रादिकं च यत् ॥ १४ ॥
मायाबीजेन तत् सर्वं पुनरेव विलोकयेत् ।
हस्तेन चक्षुषा वापि यत्र यश्च कृतः पुरा ॥ १५ ॥
पात्रन्यासस्तस्य तस्य विसृष्टिरमुना भवेत् ।
तोयैरभ्युक्ष्य तत् स्थानं मार्जयेत् तदनन्तरम् ॥ १६ ॥
उदके तरुमूले वा निर्माल्यं तत्र सन्त्यजेत् ।
नैवेद्यादीनि सर्वाणि गुरवे गुरुशक्तये ॥ १७ ॥
समर्प्योपायनं भक्त्या शिवाय गुरुरूपिणे ।
जानुभ्यामवनीं गत्वा प्रणमेद् दण्डमेव च ॥ १८ ॥
आदाय गुरुणा दत्तं स्वीकुर्यात् तु विधानतः ।
तयोरभावतो दद्यात् कुमारीभ्यो यथाविधि ॥ १९ ॥
अमृतं भक्षयेद् देवो भुक्त्वा देवत्वमालभेत् ।
अमृतं तद् विजानीयादुत्सृष्टं दैवतं तु यत् ॥ २० ॥
परदैवतनिर्माल्यं विनाऽन्यं स्वीकृतं नहि ।
अनिवेद्य शिवायैव यत् किञ्चित् स्वीकृतं प्रिये ! ॥ २१ ॥

स च पशुर्मृतं भुङ्क्ते लोकद्वययुतं प्रिये ! ।
पुरा सर्वे मनुष्याद्या भुक्त्वा मृतामिषेण[1] तु ॥ २२ ॥

देवत्वं नो भवेद् यस्मात् शस्तं शस्तं क्वचित् क्वचित् ।
दिव्यभावविशुद्धात्मा भक्षयेदमृतं यदि ॥ २३ ॥

नित्यमभ्यासयोगेन देवगामी भवेन्नरः ।
अमृतोपस्तरं कृत्वा विधानमपि तेन वै ॥ २४ ॥

बलिशेषं समादाय जुहुयाच्चैव पूर्ववत् ।
हुत्वाऽमृतं ततो भक्त्या प्राण(श)येद् भावशुद्धितः ॥ २५ ॥

भुक्त्वाऽमृतं तदा देवि ! हस्तं मूर्द्धनि विन्यसेत् ।
मितत्वेन त्रिधाऽऽचम्य षडङ्गानि प्रविन्यसेत् ॥ २६ ॥

शिवो दाता च भोक्ता च शिवः सर्वमिदं जगत् ।
शिवो जयति सर्वत्र यः शिवः सोऽहमेव च ॥ २७ ॥

[2]शक्त्यैवाऽलङ्कृता वक्त्राः स्ववेशाः स्वमनोहराः ।
पश्येत् तु देवतादृष्ट्या ता एव देवता यतः ॥ २८ ॥

तथैव ब्राह्मणान् पश्येद् भूदेवान् शुद्धमानसान् ।
भक्त्या नत्वा प्रमुदितस्ततः स्वानवलोकयेत् ॥ २९ ॥

अनेन विधिना देवि ! सम्पूज्य परमेश्वरीम् ।
तत्कपालरुधिररहितः सहितस्याहमेव वा ।
भावनावशसम्पन्नो विहरेत् तु तदिच्छया ॥ ३० ॥

देवी उवाच

कस्य वा क्रियते पूजा न गृह्यन्ते निवेदितान् ।
कथं वा प्रत्ययं चेतस्तदुपायं वद प्रभो ! ॥ ३१ ॥

---

१. मियेन-ख० ।

२. शक्तीव-ख० ।

ईश्वर उवाच

साधु पृष्टं त्वया भद्रे ! स्मरणान्मुक्तिदायकम् ।
शवरूपं परं ब्रह्म अनुत्तरपदं महत् ॥ ३२ ॥

तदन्तःस्थं परं ब्रह्म ज्योतीरूपं सनातनम् ।
स्वयं प्रकाशते ह्यात्मा मेघापायेऽशुमानिव ॥ ३३ ॥

अभ्यसेद् बहुशस्तत्र श्रुतिदर्शितवर्त्मना ।
वर्णरूपं तु शब्दस्य तन्मयास्तत्क्रियास्तथा ॥ ३४ ॥

जप्त्वा कृत्वा भवेत् सिद्धे भोगमोक्षमयास्तु ते ।
यावन्मनो लयं याति तस्मिन् स्वात्मनि चिन्मये ॥ ३५ ॥

तावदिष्टमनुं मन्त्री जपहोमैः समाचरेत् ।
अतः परं न किञ्चित् तु कृत्यमस्ति तदात्मनः ॥ ३६ ॥

विदिते परमे तत्त्वे समस्तैर्नियमैरलम् ।
तालवृन्तेन किं कार्यं लब्धे मलयमारुते ॥ ३७ ॥

अवश्यं च भावि फलं तदाप्तौ तत् करोति यः ।
आस्तिकः स तु विज्ञेयः क्रमान्मोक्षे प्रतिष्ठितः ॥ ३८ ॥

प्राप्य न्यसेत् तदा तस्मिन् कृत्वा तद्रहितं न्यसेत् ।
उभयात्मकं तु विन्यस्य स संन्यासी सुनिर्मलः ॥ ३९ ॥

यन्त्रं शरीरमात्रोक्तं विदित्वा कमलेक्षणे ।
कृत्वावहभरं तत्र यजेद् भक्त्या समाहितः ॥ ४० ॥

यद्रूपं परमेशान्या निष्फलं सकलार्णवा ।
आत्माभेदेन सम्पूज्य आत्मानं प्रियमीश्वरीम् ॥ ४१ ॥

तदानन्दमयं धाम याति पश्चान्न संशयः ।
एवं सा पञ्चमी प्रोक्ता पञ्चधा [1]ख्यातविग्रहा ॥ ४२ ॥

---

१. प्रथित–ख० ।

पञ्चतत्त्वात्मके देहे प्रत्यक्षीक्रियते हि तैः ।
नान्यत्र वै भवेद् व्यक्तो विनाऽऽत्मनि विचिन्तनम् ॥ ४३ ॥

अनुमानं महेशान्या आत्मन्येव न च क्वचित् ।
अनुमाय परं चैव सर्वमात्मवदाचरेत् ॥ ४४ ॥

वस्तूनां गन्धमात्रेण सौरूप्यदर्शनात् तथा ।
तुष्यन्ति देवताः श्रेष्ठाः स्तुत्या लभ्याश्च पार्वति ! ॥ ४५ ॥

भूतप्रेतपिशाचाश्च यक्षराक्षसपन्नगाः ।
उपभोगेन तुष्यन्ति मनुष्याद्याश्च जन्तवः ॥ ४६ ॥

गुरोः शरीरमास्थाय कुमारीणां विशेषतः ।
ब्राह्मणानां गवां चैव भुञ्जन्ते देवताः पराः ॥ ४७ ॥

तस्मात् तास्तु प्रयत्नेन भोजयेत् तोषयेत् सदा ।
तुष्टेष्वेषु महादेवी परितुष्टा जगन्मयी ॥ ४८ ॥

ब्राह्मणानां शरीरस्था भुञ्जते पितरस्तथा ।
अनङ्गव्यवधानं स्यादङ्गहीनं तु यद् भवेत् ॥
साङ्गं भवति तत् सर्वं मिष्टान्नैर्विप्रभोजनम् ॥ ४९ ॥

॥ इति गन्धर्वतन्त्रे एकविंशः पटलः ॥ २१ ॥



# द्वाविंशः पटलः

[1]श्रीईश्वर उवाच

हृदिस्थं परमात्मानं विहायाऽन्यत् समीहते ।
अहो मूढा वरारोहे ! बहिर्यन्मृग्यतेऽन्धवत् ॥ १ ॥

विज्ञाय हृदयान्तःस्थं परं च ब्रूहि गोचरम् ।
तन्निष्ठकर्मणि चैनमात्मन्येवं प्रलीयते ॥ २ ॥

तत्प्रतीतौ भवेत् सिद्धो नाऽन्यथा खलु पार्वति ! ।
अहं विष्णुः स्वयम्भूश्च स्वायम्भुश्च इमे वयम् ॥ ३ ॥

तदनुभूय देहेऽस्मिन् तदेव समुपास्महे ।
तदन्तःस्थं समाहूय तदेवं तु यजामहे ॥ ४ ॥

उद्वास्य च तदात्मानं स्थापयित्वा निजे हृदि ।
निवेदितं तु तत् प्रीत्यै तस्मिन्नेव निवेदयेत् ॥ ५ ॥

विनाऽमृतं न चान्यत्तु काङ्क्षन्ते देवतागणाः ।
अमृतेनैव तत्पूजा अमृतं तु निवेदयेत् ॥ ६ ॥

अमृतत्वं लभेद् वीरः स्वीकृत्याऽऽत्मनिवेदितम् ।
इति ते कथितो देवि ! शेषिकामनुरुत्तमः ॥ ७ ॥

स्थूलसूक्ष्मविभेदेन ज्ञायते कृपया गुरोः ।
नित्यं नैमित्तिकं कर्म इति तेषां पृथक् पृथक् ॥ ८ ॥

त्रिविधं त्रैपुरं कर्म क्रमतस्तत् समाचरेत् ।
यदुक्तं तामसं त्यक्त्वा तत् सर्वं यत्नतश्चरेत् ॥ ९ ॥

---

१. ईश्वर–क० ।

दैनन्दिनमतो नित्यं पातकं यद् विधानतः ।
मासिकं तिथिकृत्यं च वार्षिकं फलदायकम् ॥ १० ॥

लङ्घनान्निरयं यस्य नित्यश्रद्धाविधानतः ।
नैमित्तिकं [1]तज्ज्ञानीयाच्छ्रद्धया तत् समाचरेत् ॥ ११ ॥

फलमात्रश्रुतिर्यस्य श्रुतिस्मृतिप्रचोदितम् ।
काम्यं तत्तु विजानीयात् पूजितं तत्र गोचरे ॥ १२ ॥

विदध्यात् तत् प्रयत्नेन यत् पुनर्लोकपूजितम् ।
धर्ममपि त्यजेत् साधुर्यत् पुनर्लोकगर्हितम् ॥ १३ ॥

नित्यं सात्त्विकमेवात्र नैमित्तिकं तु राजसम् ।
तामसं काम्यमेवात्र कुर्यात् फलवितृष्णया ॥ १४ ॥

तृष्णां तां दूरतस्त्यक्त्वा मनः पूर्णं विचिन्तयेत् ।
पूर्णे मनसि तृष्णे ? च पूर्णं सर्वमिदं जगत् ॥ १५ ॥

उपानद्गूढपादस्य ननु चर्मावृतैव[2] भूः ।
फलविरहितं काम्यं नित्यं नैमित्तिकं तथा ॥ १६ ॥

क्रियते त्रिपुराप्रीत्यै कृत्वा तस्मै निवेदनम् ।
सात्त्विकं [3]तद् विजानीयाद् भोगमोक्षफलप्रदम् ॥ १७ ॥

यस्य यद् विहितं कर्म त्रिविधं तत्र गोचरे ।
श्रुतिस्मृत्युदितं चापि मनसापि न हारयेत् ॥ १८ ॥

कर्मलोपादधो योनौ जायते साधकाधमः ।
शिवशक्तिमयं विश्वं विदित्वा सद्गुरोः प्रिये ! ॥ १९ ॥

---

१. विजानीयात्–क० ।
२. चर्मावृतं वपुः–ख० ।
३. द्विजाद्मीयात्–ख० ।

स्थूलसूक्ष्मविभेदेन पितृमातृस्वरूपतः ।
कर्मभिस्तोषयेत् तौ तु तद्भावमाश्रितः सदा ॥ २० ॥

उभयात्मा भवेत् सिद्ध्यै नैकात्मा ज्ञानवर्जितः ।
ज्ञानचक्षुस्तयोरैक्यं विदित्वा श्रीगुरोः क्रमात् ॥ २१ ॥

अनुभूय तदानन्दं तदात्मा तत्र संविशेत् ।
मातुः पितुर्यथा बालो व्युत्पत्तिं लभते क्रमात् ॥ २२ ॥

तयोः समत्वसन्धानाद् व्युत्पन्नो ज्ञानमालभेत् ।
देवताः शक्तिरित्याहुः पितरः शिव एव च ॥ २३ ॥

एतावुभौ तांस्तु सर्वान् सुहृदः पूर्वसूचितान् ।
बलिभिस्तर्पयेत् तांस्तु सुहृद्भिश्च हतोऽन्यथा ॥ २४ ॥

तेषां बलिं पुरस्कृत्य तावुभौ परितोषयेत् ।
पश्चात् तेभ्यो निवेद्यैव सुहृद्भिर्विहरेन्मुदा ॥ २५ ॥

स्वाहान्तेन च देवेभ्यो मनुष्येभ्योऽन्त एव च ।
स्वधान्तेन पितृभ्यस्तु तेभ्यो लभ्यं नरेण तु ॥ २६ ॥

निराशाः पितरो यस्य ··· पार्वति ! ।
सुहृदो ज्ञातयश्चापि वाङ्मात्रेणापि नार्चिताः ॥ २७ ॥

सुहृदो वर्ष्म खादन्ति ज्ञातयः कर्म सञ्चितम् ।
ऐहिकं स्वपिता हन्ति स्वमाता पारलौकिकम् ॥ २८ ॥

लोकद्वयविहीनस्तु नैव सिद्धिं प्रयच्छति ।
अयष्ट्वा पितरं यज्ञे यजेन्मातरमम्बिकाम् ॥ २९ ॥

विधिशतैरपि यज्ञत्वं तनुं गृह्णाति शाश्वतीम् ।
आदावन्ते पितुस्तस्मात् कुर्यात् तर्पणमादरात् ॥ ३० ॥

अदत्तं नोपतिष्ठेत[1] दद्यात् तस्मादतः परम् ।
गोभूहिरण्यवस्त्रादिभक्ष्यभोज्यानि यानि च ॥ ३१ ॥

वासिनीभ्यो द्विजेभ्यश्च दीनान्धकृपणाय च ।
त्यक्त्वा आवश्यकं कर्म लौकिकं भावतत्परः ॥ ३२ ॥

यो गन्धे मोहितं यत्तु कुर्यात् तदनुशासनात् ।
समर्थं जीवयेत् स्नेहात् स्वकीया ननु जीविनः ॥ ३३ ॥

दुष्टेभ्यो दुष्टचित्तेभ्यो हिंस्रेभ्यः साहसिकात् तथा ।
बलिभ्यो धनमत्तेभ्यः कायस्थेभ्यो विशेषतः ॥ ३४ ॥

रक्षयेत् पालयेत् साधुः पुत्रानिव निजौरसान् ।
लोकांश्च त्रिविधान् मत्वा लालयेत् पालयेत सदा ॥ ३५ ॥

वध्यान् वध्यात् तथा दण्ड्यान् दण्डयेत् शास्त्रदर्शनात् ।
अवध्यस्य वधे यावानदण्ड्यस्य तु दण्डने ॥ ३६ ॥

दण्ड्यस्यादण्डने पापस्तावान् वध्यस्य रक्षणे ।
इति विज्ञाय योगात्मा योगक्षेमं समाचरेत् ॥ ३७ ॥

विभूतीरात्मनः पश्येत् तत् प्रीत्या तान्निवेदयेत् ।
विभूतीरात्मनो यस्तु महादेव्यै प्रदर्शयेत् ॥ ३८ ॥

ताभिरेव युतो भूयादणिमादिविभूतिभिः ।
मुहूर्त्तत्रयमात्रं तु कुर्यादनु विचिन्तयेत् ॥ ३९ ॥

चिन्तयेत् परमं ब्रह्म मध्याह्ने समुपागते ।
मुहूर्त्तत्रयमात्रं तु निद्रया समुपासयेत् ॥ ४० ॥

ततो [2]बुद्ध्या यथाकाले तामेव समुपासयेत् ।
ललितानि च नृत्यानि गीतानि मधुराणि च ॥ ४१ ॥

१. तिष्ठते—ख० ।
२. बुद्ध्वा—ख० ।

दर्शयेच्छ्रावयेद् देव्यै भावात्मा[1] तद् विलोकयेत् ।
नृत्येषु गीतनियता देव्यः स्रक्चन्दनार्चिताः ॥ ४२ ॥

भूषिताश्चारुभूषाभिर्विदुरेनोभिरेव[2] च ।
ततो मध्ये स्वयं देवः कामेश्वर इवापरः ॥ ४३ ॥

कामेश्वरीभिर्युतो भूत्वा यजेत् कामेश्वरीं ततः ।
ब्रह्मा चिन्तापरामोदमुदितो राज्यचिन्तकः ॥ ४४ ॥

मुहूर्त्तत्रयमात्रं तु निद्रया समुपासयेत् ।
दिवा दद्यात् पितृभ्यस्तु मातृभ्यो निशि तत्परः ॥ ४५ ॥

माता रात्रिः समाख्याता पिता दिवस एव च ।
उभयोरेकतां मत्वा सिद्धो भवति नान्यथा ॥ ४६ ॥

सोमः शक्तिः शिवः सूर्यो निशा शक्तिर्दिवा शिवः ।
यदा स भगवान् देवो महात्रिपुरभैरवः ॥ ४७ ॥

परापरायणोऽनन्तः परमानन्दनिर्भरः ।
परापररहस्याख्यां योगिनीं ब्रह्मरूपिणीम् ॥ ४८ ॥

शिवानन्दानन्दमयीं महात्रिपुरसुन्दरीम् ।
आकृष्योर्ध्वं यदा तिष्ठेत् तदहः परिकीर्त्यते ॥ ४९ ॥

शक्तिभैरवसंयोगादानन्दानन्दनिर्भरात् ।
भैरवानन्दनम्रान्तर्लीला सा परमा कला ॥ ५० ॥

मध्याह्नेऽन्तर्विजानीयान्मुहूर्तत्रयलक्षितम् ।
तौ तदा समभागेन तिष्ठेतां शक्तिभैरवौ ॥ ५१ ॥

पूर्वापरौ तदा ज्ञेयौ एतद्धि गुणलक्षितौ ।
परस्पराद्वैतेप्सन्तौ प्राप्ताऽद्वैतौ तु मध्यतः ॥ ५२ ॥

---

१. भाव त्वा—ख० ।
२. वेद वेत्रीभिरेव च—ख० ।

अभिजिन्नाम जानीयात् तत् कालं सुरवन्दिते ! ।
तत्तत्तेजोभिराकीर्णा तयोरैक्यं भवेत् तदा ॥ ५३ ॥

सूर्यकोटिप्रतीकाशं चन्द्रकोट्ययुतप्रभम् ।
तदा दशभुजो देवः पञ्चवक्त्रस्त्रिलोचनः ॥ ५४ ॥

शुक्लाम्बरधरः शुक्लः शुक्लमाल्यानुलेपनः ।
तस्योत्सङ्गे महादेवी चन्द्रकोट्ययुतप्रभा ॥ ५५ ॥

प्रहसन्ती विशालाक्षी परमानन्दनन्दिता ।
तद्रूपतामभीप्सन्ती तद्रूपेक्षणलालसा ॥ ५६ ॥

शुक्लवेशं विना देवि ! नान्यत् तत्प्रीतये सदा ।
तत्रान्यद्रूपमापन्ने साधके दैवचोदिते ॥ ५७ ॥

क्रुद्धा भगवती तस्य शापं दद्यात् सुदारुणम् ।
सर्वैः शुक्लमयैर्द्रव्यैः शुक्लवेशैर्यजेत् तदा ॥ ५८ ॥

दिवि··· दृश्याः शरच्चन्द्रनिभोपमाः ।
तत्र पूजा सदा कार्या विशेषेण वरानने ! ॥ ५९ ॥

पेयं चोष्यं तथा लेह्यं चर्व्यं भक्ष्यं च तर्पणैः ।
निवेदयेत् सदा भक्त्या यत् पुनः सुमनोहरम् ॥ ६० ॥

उपचारैर्यजेत् प्रातर्मध्ये रसान्नपानकैः ।
गीतनृत्यादिना सायं रात्रौ यागपुरःसरम् ॥ ६१ ॥

प्राङ्मुखो हि यजेत् प्रातर्मध्याह्ने दक्षिणामुखः ।
सायं प्रत्यङ्मुखो भूत्वा रात्रावुदङ्मुखः सदा ॥ ६२ ॥

तत्र शाम्भवभेदेन जपेद् विद्यामनन्यधीः ।
वर्जयेच्छक्तिभेदं तु यदीच्छेदात्मनो हितम् ॥ ६३ ॥

---

१. प्रति–क० ख० ।

अरुणकिरणच्छन्नं यत्पूर्वं भैरवोदयात् ।
अर्द्धनारीश्वरं ज्ञेयं तत्र पूजा त्रयः समाः ॥ ६४ ॥

उपचारैस्तदा कार्या सपर्याविधिना तथा ।
वरिवस्यां गृही (?) समभागेन संस्थितौ यदि ॥ ६५ ॥

आनन्दपारमिच्छन्तौ सदाऽऽनन्दविवर्द्धिनौ ।
पूर्वापरौ महापुण्यौ यदा तौ समरूपिणौ ॥ ६६ ॥

चिन्तयेत् सततं भक्त्या तौ तत्कालविधानतः ।
शक्तिशाम्भवभेदेन जपेद् विद्यामनन्यधीः ॥ ६७ ॥

शुक्लाम्बरो भवेत् तत्र शुक्लमाल्यानुलेपनः ।
रक्ताम्बरधरः पश्येद् रक्तमाल्यानुलेपनः ॥ ६८ ॥

दिशश्च विदिशश्चैव रक्ता दृश्या मनीषिभिः ।
लाक्षारुणमयं विश्वं स्वयं तत्र तद् भवेत् ॥ ६९ ॥

पद्मरागप्रतीकाशः सुरराजसमन्वितः[1] ।
नाथः कामेश्वरस्तत्र ह्येकवक्त्रश्चतुर्भुजः ॥ ७० ॥

रक्तपद्मनिभां देवीं बालार्ककिरणारुणाम् ।
इच्छन् तद्रूपतां प्राप्तुं तद्रूपान्तां विशन्त्यतः ॥ ७१ ॥

अनुभूय तदा बन्धं भैरवानन्दसङ्कुलम् ।
विपरीतमभीप्सन्ती तदाक्रमणलालसा ॥ ७२ ॥

तदासवै[2]र्भवेत् कालः सायंसन्ध्येति गीयते ।
शोणितेन समाक्रान्तां प्रतीचीमवलोकयन् ॥ ७३ ॥

पूजयेत् साधको भक्त्या उपचारैर्यथाविधि ।
यदा सा परमा शक्तिः स्वेच्छया विश्वरूपिणी ॥ ७४ ॥

---

१. समन्निभः–ख० ।
२. सरो–ख० ।

अधः कृत्वा तु पुरुषं वर्णमिच्छा (?) भवेद् यदा ।
तदाक्रम्य स्वयं देवी भैरवोपरि संस्थिता ॥ ७५ ॥

सहजानन्दसन्दोहैर्निजानन्दप्रवर्द्धिनी ।
तदा नैजं भवेद् विश्वं तत्र पूजा महोदया ॥ ७६ ॥

तत्तद्दृष्टि[1]मयैर्दीपैर्भोगैश्च विविधैः सदा ।
लाक्षारुणमयं सर्वं स्वयं तावत् तथा भवेत् ॥ ७७ ॥

शक्तिभेदात्मिकां विद्यां हंसबीजपुटीकृताम् ।
प्रणवान्तरितां शुद्धां नादलीलां तदात्मिकाम् ॥ ७८ ॥

मूलादिब्रह्मरन्ध्रान्तां बिसतन्तुतनीयसीम् ।
अदूराम्बुवहाद्धंसां (?) सुस्थिरानिलचञ्चलाम् ॥ ७९ ॥

संस्रवन्तीं सुधाधारां शुद्धलाक्षारसोपमाम् ।
आवाह्य पूजयित्वा स्वं कमलाङ्कपुरान्तरे ॥ ८० ॥

विनिर्जितेन्द्रियमनो जपेदानन्दरूपिणीम् ।
मध्यं सुखं विजानीयात् पूर्वापरौ स्तनद्वयौ ॥ ८१ ॥

अर्द्धमात्रापरं रूपं निशामध्यं तयोरधः ।
आनन्दफलदं [2]पुण्यं भोगमोक्षफलप्रदम् ॥ ८२ ॥

सन्ध्याचतुष्टयं भद्रे ! कथितं भुवि दुर्लभम् ।
चतुर्भुजं महादेव्या ज्ञेयं कालचतुष्टयम् ॥ ८३ ॥

आत्मा सा परमेशानि ! परमेश्वर एव च ।
यदङ्गं तु विहीयेत तदङ्गच्छेदनं तयोः ॥ ८४ ॥

तत्र यत् क्रियते कर्म मङ्गल्यं मङ्गलं परम् ।
ध्यानं पूजा जपश्चैव होमो न्यासश्च तर्पणम् ॥ ८५ ॥

---

१. दृष्ट–ख० ।
२. पुण्यात्–ख० ।

अत्र वै पूजिता देवी पूजयेत् तन्मनोरथान् ।
अत्र यत् पुण्यमनघे भक्तिश्रद्धासमन्विते ॥ ८६ ॥

विधिना विहिते यज्ञे परमानन्दसङ्कुले ।
वक्त्रकोटिसहस्रैस्तु ह्यनन्तो वक्तुमक्षमः ॥ ८७ ॥

अमृताञ्जलिमप्यत्र सुधासागरतुलनाम् ।
अत्र यो नार्चयेद् देवीं जलेनापीह पार्वति ! ॥ ८८ ॥

न नमेद् वा गुरून् भक्त्या ब्रह्महा स निगद्यते ।
अत्र निद्रापरा यान्ति महाकालपुरं प्रिये ! ॥ ८९ ॥

दम्भं मोहं तथा निद्रामालस्यं बाह्यचिन्तनम् ।
कामं क्रोधं तथा लोभं हिंसां मात्सर्यमेव च ॥ ९० ॥

वर्जयित्वा प्रधानेन विद्यामेव समभ्यसेत् ।
दुर्वासनां परित्यज्य कोटिजन्मसमुद्भवाम् ॥ ९१ ॥

एकेन जन्मना मुक्तिं याति योगी न संशयः ।
शक्तेर्मुखं विना नान्यं पश्येद् वै कर्हिचित् तदा ॥ ९२ ॥

पशवो दूरतस्त्याज्याः पुरुषाश्चान्यपूजकाः ।
अत्राऽन्यचिन्तनाद् यान्ति म्लेच्छयोनिं पतन्त्यधः ॥ ९३ ॥

यान्ति चोर्ध्वं परं धाम चिन्तनाद् ब्रह्म शाश्वतम् ।
नास्ति पुरस्क्रिया तेषां कायक्लेशपुरःसरा ॥ ९४ ॥

नित्यपुरस्क्रियायुक्तास्त एव परिकीर्तिताः ।
तं तु देवा नमस्यन्ति किं पुनर्नरमर्कटाः ॥ ९५ ॥

[1]दैवी कला भवेत् तत्र सर्वलोकवशङ्करी ।
अमर्त्या अर्पितमन्यमीहन्ते कुलवल्लभम् ॥ ९६ ॥

---

१. देवी-ख० ।

तं दृष्ट्वा युवतयः सर्वाः क्लिद्यान्मान्या मुदान्विताः ।
शरदिन्दुप्रभं देवं पूर्णेन्दुप्रतिमाननम् ॥ ९७ ॥

नानावैदग्धिचातुर्यं स्निग्धपीयूषभाषिणम् ।
अपि चेत् तत्समा नारी तत्समः पुरुषोऽस्ति चेत् ॥ ९८ ॥

नरेन्द्रं नरशार्दूलं दृष्ट्वा क्षुब्धमना भवेत् ।
पूर्वे यद् दीयते वस्तु परे तस्माच्चतुर्गुणम् ॥ ९९ ॥

नानाविधोपहाराणि महादेव्यै निवेदयेत् ।
राजोपचारं दत्त्वाऽन्ते स्तुत्वा नत्वा विसर्जयेत् ॥१००॥

कालत्रयेऽप्यशक्तश्चेच्चतुर्थे सर्वथा प्रिये ! ।
अनश्नन् पूजयेद् रात्रौ भयनिद्रापराङ्मुखः ॥१०१॥

प्रातर्होमं प्रकुर्वीत तथा मध्यन्दिनेऽथवा ।
निद्राकालं प्रवक्ष्यामि साधकानां हिताय च ॥१०२॥

दिवानिशोर्महादेवि ! नवमुहूर्तस्ततः परम् ।
मुहूर्तत्रयमानं तु निद्रादेव्याः समीरिताः ॥१०३॥

अत्र निद्रापरा देवी निद्रया समुपासयेत् ।
निद्राकाले जपेद् यस्तु पूजयेद् वा विमोहितः ॥१०४॥

स्वापकालं विना देवि ! स्वपेदन्यत्र यो बुधः ।
चत्वारि तस्य नश्यन्ति आयुर्विद्या यशो बलम् ॥१०५॥

तस्मात् सर्वप्रयत्नेन बोधकाले प्रबोधयेत् ।
दर्शनं चाऽवलोकं च संभाषं चान्यलोकनम् ॥१०६॥

स्वयमावेशनं चैव मन्त्राणां पञ्चलक्षणम् ।
विदित्वा प्रजपेन्मन्त्रं सर्वसिद्धिमुपालभेत् ॥१०७॥

वेदसन्ध्यं त्रिसन्ध्यं वा द्विसन्ध्यं वाऽथ सुव्रते ! ।
योगात्मा योगविज्ञानी योगमुद्रासमन्वितः ॥१०८॥

अब्दमेकं जपेद् यस्तु ब्रह्मचर्यव्रते स्थितः ।
सहस्रं प्रजपेदादावन्ते चापि सहस्रकम् ॥१०९॥

मध्ययोः पूजयेद् विद्यां शेषं यच्छमभागतः ।
लक्षमेकं भवेद् देवि ! त्रिंशदभ्यन्तरे तथा ॥११०॥

अस्तब्धाकुञ्चितं कार्यं न द्रुतं न विलम्बितम् ।
अक्षराक्षरसञ्चारि ध्वनिमात्रं विभावयेत् ॥१११॥

मयाऽप्येतद् व्रतस्थेन जप्यतेऽद्यापि सुन्दरि ! ।
त्रिसन्ध्यं जप्यते ब्रह्म तत्पदप्राप्तिसिद्धये ॥११२॥

एवं क्रमाद् भवेत् सिद्धो भोगी भोगपरायणः ।
एवं मासमृतुं चैव वासरं युगमेव च ॥११३॥

गमयेत् परमेशानि यद्वा मन्वन्तरादिकम् ।
एतद् रहस्यं परमं न प्रकाश्यं कदाचन ।
समयाचारसङ्केतं भोगमोक्षफलप्रदम् ॥११४॥

॥ इति श्रीगन्धर्वतन्त्रे द्वाविंशतितमः पटलः ॥ २२ ॥



# अथ त्रयोविंशः पटलः

ईश्वर उवाच—

होमादिकं तु विफलं कुमारीपूजनं विना ।
कुमारी पूजिता येन त्रैलोक्यं तेन पूजितम् ॥ १ ॥

ब्रह्मा विष्णुश्च रुद्रश्च ऋषयो [1]वासवस्तथा ।
पितरश्चैव दिक्पाला गन्धर्वाऽप्सरसोऽसुराः ॥ २ ॥

देवपत्न्यस्तथा नागा मातरः सिद्धचारणाः ।
विश्वेदेवाः सयक्षाश्च राक्षसाश्चैव देवताः ॥ ३ ॥

स्थावरा जङ्गमाश्चैव सर्वभूतानि जन्तवः ।
सर्वे ते तृप्तिमायान्ति कुमार्यो यत्र पूजिताः ॥ ४ ॥

बह्वीनामप्यलाभे तु एकैकं वरवर्णिनी ।
प्रमदा यौवनोन्मत्ता सा भवेत् सुन्दरी परा ॥ ५ ॥

अष्टाब्दावधि पञ्चाब्दा पूजितव्या विधानतः ।
कुमार्यै यज्जलं दत्तं तज्जलं सागरोपमम् ॥ ६ ॥

यदन्नं दीयते तस्यै कुलाचलसमं प्रिये ! ।
कुमारीपूजनं देवि ! कुमारीमनुना भवेत् ॥ ७ ॥

यथा वा पूज्यते देवी पूजितव्या तथा तथा ।
हेतुना भोजितव्यास्ताः पायसैर्मधुरान्वितैः ॥ ८ ॥

बालाप्रियैश्च नैवेद्यैः त्रिपुरसुन्दरीधिया ।
स्तुत्या नत्याऽथ सन्तोष्य अभीष्टं प्रार्थयेत् ततः ॥ ९ ॥

पूजितायाश्च तुष्टाया हस्ताद् भक्तियुतो नरः ।
शिरसा प्रतिगृह्णीयादाशीर्वादयुताक्षतान् ॥ १० ॥

---

१. वासवोस्तथा-ख० ।

यद् यद् वदति सन्तुष्टा तत् तद् भवति निश्चयम् ।
इति ते कथितं देवि ! रहस्यं परमाद्भुतम् ॥ ११ ॥

विनाऽनेन महेशानि ! न पूजाफलभाग् भवेत् ।
नित्यार्चायां च दीक्षायां पुरश्चर्यादिकेषु च ॥ १२ ॥

आदौ पूर्णे च मध्ये च लक्षे पूर्णे विशेषतः ।
कुमार्यः पूजितव्याश्च कुमारी नार्चयेद् यदि ॥ १३ ॥

तस्य पूजाफलं सर्वं नीयते यक्षराक्षसैः ।
न पूजयति चेत् कान्तां तदा विघ्नैः प्रभूयते ॥ १४ ॥

पूर्वार्जितफलं नश्येत् का कथा परजन्मनि ।
तस्मात् सर्वप्रयत्नेन यदीच्छेदात्मनो हितम् ॥ १५ ॥

पूजितव्या महाभागाः कुमार्यः परमेश्वरि ! ।
प्रातरुत्थाय पूजायां स्नानकालेऽथवा पुनः १६ ॥

संस्कृतासंस्कृते वापि हीनजात्युद्भवास्तथा ।
नमस्याः साधकेन्द्राणां कुलीनानां परार्चने ॥ १७ ॥

ब्रह्मण्यर्पितचित्तानां नास्तीह भिन्नता क्वचित् ।
कुलपूजां विना देवि ! कुलदेवी पराङ्मुखी ॥ १८ ॥

परयोषा यदा भद्रे ! स्वयं तासां गुरुर्भवेत् ।
ब्राह्मणी क्षत्रिया वैश्या शूद्रा च कुलभूषणा ॥ १९ ॥

वेश्या नापितकन्या च रजकी योगिनी तथा ।
नानावैदग्ध्यकुशलाः कलारूपगुणान्विताः ॥ २० ॥

तासां रूपं च भावं च विलोक्याऽमर्षचेष्टितम् ।
ब्राह्मण्याद्यष्टशक्तीनां नामभिः कृतशब्दिताः ॥ २१ ॥

आसनं प्रथमं ताभ्यः स्वागतं च पुनः पुनः ।
अर्घ्यं पाद्यं च पानीयं मधुपर्काऽऽचमनीयकम् ॥ २२ ॥

स्नापयेद् गन्धपुष्पाद्भिः केशसंस्कारमेव च ।
धूपयित्वा ततः केशान् कौषेयकं निवेदयेत् ॥ २३ ॥

ततः स्थानान्तरे नीत्वा पीठमास्तीर्य भक्तितः ।
संवेशयेद् विधानेन पूर्वादिक्रमयोगतः ॥ २४ ॥

नानालङ्कारभूषाद्यैर्भूषयित्वाऽन्नलेपनैः ।
गन्धं पुष्पं तथा धूपं दीपं नैवेद्यमेव च ॥ २५ ॥

दुग्धं दधि घृतं तक्रं नवनीतं सशर्करम् ।
नारिकेलं कपित्थं च नागरङ्गकमुत्तमम् ॥ २६ ॥

पिष्टकं पायसं चैव नानारससमन्वितम् ।
दत्त्वा सम्पूज्य विधिवत् स्तुतिभिस्तोषयेत् ततः ॥ २७ ॥

मातङ्गेशि ! नमस्तुभ्यं ब्रह्मरूपधरेऽनघे ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ २८ ॥

माहेशि ! वरदे देवि परमानन्दरूपिणि ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ २९ ॥

कौमारि ! सर्वविद्येशि कुमारक्रीडने परे ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ ३० ॥

वैष्णवी विष्णुरूपासि सर्वविघ्नविनाशिनि ! ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ ३१ ॥

वाराहि ! वरदे देवि परमानन्दरूपिणि ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ ३२ ॥

इन्द्राणि ! वरदे देवि गजस्कन्धस्थिता ह्यसि ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ ३३ ॥

चामुण्डे ! मुण्डमालास्रक्चर्चिते भयनाशिनि ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ ३४ ॥

महालक्ष्मि ! महामोहक्षोभसन्तापहारिणि ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥३५॥
इति मातृमये ! देवि सति मातृबहिष्कृते ।
एके बहुतरे देवि विश्वरूपे नमोऽस्तु ते ॥३६॥
एतत् स्तोत्रं पठेद् यस्तु कर्मारम्भेषु संयतः ।
विदग्[1]धाश्च समालोक्य तस्य विघ्नं न जायते ॥३७॥
आचम्य मुखवासेन ताम्बूलं च निवेदयेत् ।
ततो दद्यात् पुनर्माल्यं गन्धचन्दनपङ्किलम् ॥३८॥
यदि क्रीडापरास्तास्तु भवन्ति भाग्ययोगतः ।
क्रीडा यत्क्रीडनैः सर्वाः क्रीडारसपरायणाः ॥३९॥
तस्मात् सर्वप्रयत्नेन रक्षितव्याः सदा प्रिये ! ।
यथा तु नमिता प्राज्ञे भक्तिभावपरायणैः ॥४०॥
स्वेच्छा ऋतुमती या स्याद् गृहीत्वा रक्तमुत्तमम् ।
रोचना[2]चन्द्रकाश्मीरकस्तूर्यागुरुसंयुतम् ॥४१॥
स्वयम्भूकुसुमं दिव्यं फलं वा दिव्यमेव च ।
गृहीत्वा पूजयेद् देवीं महात्रिपुरसुन्दरीम् ॥४२॥
कुण्डगोलोद्भवं[3] वापि नान्यत्र कुसुमं भवेत् ।
मद्यं मांसं मुद्रा शक्तिः स्वयम्भूकुसुमं तथा ॥४३॥
[4]एभिरेव महेशानि ! प्रत्यक्षीक्रियते परा ।
द्रव्यसंशोधनं कृत्वा शक्तिशोधनसम्भवैः ॥४४॥
संपूज्य त्रिपुरां देवीमसाध्यमपि साधयेत् ।
अन्या यदि न गच्छन्ति निजकन्यात्मजात्मनः ॥४५॥

१. दगग्धाश्च–ख० ।
२. चन्द–ख० ।
३. कुण्डगोलोदभवां–ख० ।
४. एविरेव–ख० ।

अग्रजा मातुलानी तु माता वा तत्सपत्निका ।
वयसा जातितो वापि हीनरज्जुश्च सा यथा ॥४६॥

पूज्याः कुलवरैः सर्वैर्निजाहङ्कारवर्जितैः ।
स्वयमक्षोभितो भूत्वा मूलयोगं न चाचरेत् ॥४७॥

मूलयोगकृतामायुः सिद्धोऽपि नश्यति ध्रुवम् ।
सर्वाभावे एकतरा पूजनीया प्रयत्नतः ॥४८॥

संस्कृताऽसंस्कृता वापि बन्धकी वाथ निष्पती ।
पूर्वाभावे परा पूज्या तदंशा योषितो यतः ॥४९॥

एका चेत् कुलशास्त्रज्ञा लभ्यते [1]कुलवित्तमैः ।
पूजार्हा सा तारा देवि ! भोगमोक्षप्रसाधिका ॥५०॥

एका च युवती यत्र पूजिता चावलोकिता ।
तदा देव्यश्च सर्वाश्च पूजितं सर्वदैवतम् ।
इति ते कथितं देवि ! न प्रकाश्यं कदाचन ॥५१॥

॥ इति गन्धर्वतन्त्रे त्रयोविंशतितमः पटलः ॥ २३ ॥



---

१. कुलविशारदैः-क० ।

# अथ चतुर्विंशः पटलः

[1]श्री ईश्वर उवाच

एवं यः कुरुते पूजां नित्यं भक्तियुतो बुधः ।
कन्दर्पसदृशः स्त्रीषु गौरीपतिरिवापरः ॥ १ ॥

स एव सुकृती लोके स एव कुलभूषणः ।
धन्या च जननी तस्य धन्यस्तस्य पिता खलु ॥ २ ॥

दैवी कला भवेत् तत्र मम तुल्यो महामतिः ।
अणिमाद्यष्टसिद्धीशो जायते नात्र संशयः ॥ ३ ॥

वह्निरिव रिपोर्हन्ता इन्दुरिव सुखप्रदः ।
पितृदेवसमः शास्ता शुचौ शुचिसमः खलु ॥ ४ ॥

बृहस्पतिसमो वक्ता धरणीसदृशः क्षमी ।
वक्त्रे सरस्वती तस्य लक्ष्मीस्तस्य सदा गृहे ॥ ५ ॥

तीर्थानि तस्य देहे वै न च तस्य पुनर्भवः ।
धनेन धननाथः स्यात् तेजसा भास्करोपमः ॥ ६ ॥

बलेन पवनो ह्येष दानेन वासवोपमः ।
गानेन तुम्बुरुः साक्षान्नित्यं येन समर्चिता ॥ ७ ॥

एकाहं यदि देवेशि ! महात्रिपुरसुन्दरी ।
न पूजयेत् तथा न स्यात् प्रायश्चित्तं समाचरेत् ॥ ८ ॥

उपोष्यैव चाधिवासं कृत्वा पूजां परेऽहनि ।
गुरुं सम्पूज्य विधिवत् तदा पूजां समापयेत् ॥ ९ ॥

---

१. 'श्री' नास्ति—क० ।

कुमार्यै भोजनं दत्त्वा विप्रानपि च भोजयेत् ।
अत ऊर्ध्वं पुनर्दीक्षां लक्षजापं समाचरेत् ॥ १० ॥

महात्रिपुरसुन्दर्या योगिनीनां तथैव च ।
द्व्यहं वाथ त्र्यहं वापि पूजाशून्यं करोति यः ॥ ११ ॥

सिद्धिहानिर्भवेत् तस्य योगिनीशापमालभेत् ।
चत्वारि तस्य नश्यन्ति आयुर्विद्या यशो बलम् ॥ १२ ॥

तस्य मांसं च शुक्रं च रूपं शोणितमेव च ।
अभीष्टानपि कामांश्च हिंसन्ति योगिनीगणाः ॥ १३ ॥

बन्धुभिः कलहो घोरः कलत्रैश्च विशेषतः ।
शस्यशून्या भवेदुर्वी विघ्नस्तस्य पदे पदे ॥ १४ ॥

सत्यं सत्यं भवेद् रोगी दरिद्रश्चोपजायते ।
इहैव दुःखमाप्नोति त्रिविधं लोमहर्षणम् ॥ १५ ॥

परे स्वर्गात् परिभ्रष्टः क्षितौ क्षितिपनायकः ।
अतुलां भक्तिमासाद्य कैवल्यं लभते ततः ॥ १६ ॥

ब्रह्मचिन्ताप्रवृत्तो यः सोपहाय च दैवतम् ।
विनानया प्रवर्त्तेत ब्रह्मघाती स एव तु ॥ १७ ॥

जपध्यानपरो मन्त्री योगक्षेमपरायणः ।
स्वयं यदि भवेन्मूढो गुरुं तत्र नियोजयेत् ॥ १८ ॥

ज्ञानकर्मपरः शुद्धः सर्वदेवमयः प्रभुः ।
सिद्धयः सकलास्तस्य गुरुर्यस्य हिते रतः ॥ १९ ॥

मासतो वर्षतो वापि स्वयं पुण्याहयोगतः ।
कुर्याद् वै महतीं पूजां सम्पन्नाङ्गविभूषिताम् ॥ २० ॥

उपहारैर्बहुविधैरलङ्कृतसुविग्रहाम् ।
नित्यमेवार्चनं देव्या नित्यमेव समाचरेत् ॥ २१ ॥

नित्याचारपरो मन्त्री नैमित्तिकविधिं चरेत् ।
नित्यनैमित्तिकपरः साधुः काम्यं विचिन्तयेत् ॥ २२ ॥
कामान्नैमित्तिकं नित्यं नित्यं नैमित्तिकात् परम् ।
नित्याचारविलोपी यः काम्यं नैमित्तिकमेव वा ॥ २३ ॥
करोति स च दुर्मेधा नाप्नोति तस्य तत् फलम् ।
नित्याचारमनादृत्य यदन्यत्तु समीहते ॥ २४ ॥
निष्फलं तस्य तत् कर्म वन्ध्यास्त्रीमैथुनं यथा ।
अपि पुष्पफलैर्वापि पूजयेच्चक्रदेवताः ॥ २५ ॥
अङ्गहीनं तु पुरुषो न सम्यग् याज्ञिको भवेत् ।
अङ्गहीना तथा पूजा न सम्यग् फलदायिनी ॥ २६ ॥
ध्यानं पूजा जपो होम इति हस्तचतुष्टयम् ।
शरीरं न्यासजालं तु आत्मा तज्ज्ञानमेव च ॥ २७ ॥
भक्तिः शिरोऽत्र हृत् श्रद्धा कौशलं नेत्रमीरितम् ।
एवं यज्ञशरीरं तु मत्वा साधकसत्तमः ॥ २८ ॥
यज्ञं समापयेन्नित्यं साङ्गेनैव खलु प्रिये ! ।
अङ्गहीने महान् दोषस्ततोऽङ्गं नावधारयेत् ॥ २९ ॥
सर्वाङ्गपूर्णपुरुषो यज्ञाख्यः सर्वसिद्धिदः ।
तत्तदीहापरा शक्तिः सिद्धिः संयोगतस्तयोः ॥ ३० ॥
श्रीमत्त्रिपुरसुन्दर्याः पूर्णयज्ञः शरीरके ।
अङ्गबाधे यथा दोषो नान्यस्य हि तथा भवेत् ॥ ३१ ॥
स्वविभवान्नरूपा वै पूजा कार्या विभूतये ।
व्यतिक्रमात्तु हीनः स्याद् ब्रह्महत्यामवाप्नुयात् ॥ ३२ ॥
नाधिकं[1] नैव च न्यूनमुभयं पापदायकम् ।
चतुर्दश्यामथाष्टम्यां पूर्णायां मासमध्यतः ॥ ३३ ॥

---

१. नाधिकां—ख० ।

महाभूतदिने वापि यजेद् विभवविस्तरम् ।
कृष्णयाऽथ चतुर्दश्या युक्तं कुजदिनं यदा ॥ ३४ ॥

महाभूतदिनं तत्तु सर्वभूतवशङ्करम् ।
यदि पुष्या भवेत् तत्र तदाऽनन्तफलप्रदम् ॥ ३५ ॥

मन्त्रं यदि श्मशाने तु शवोपरि यथाविधि ।
अथवा प्रजपेद् देवीं मातृकां नीलरूपिणीम् ॥ ३६ ॥

कृत्वा जप्त्वा तदा कुर्याद् भूतप्रेतपिशाचकान् ।
तान् वशीकृत्य तल्लोकं तथेह तैः [1]सहासते ॥ ३७ ॥

वशीकृत्य श्रिया युक्तो मोदते पुत्रपौत्रकैः ।
यथा तथा गृहे बाह्ये कृत्वा जप्त्वा नरो बुधः ॥ ३८ ॥

राक्षसान् किन्नरान् कृत्वा तल्लोके च तथेह च ।
तैश्च प्रमुदितो भोगी भोगान् भुङ्क्ते यथेच्छया ॥ ३९ ॥

निजगेहे सदा यस्तु पवित्रे सुमनोहरे ।
कृत्वा जप्त्वा नरः प्राज्ञो यक्षान् सर्वान् वशं नयेत् ॥ ४० ॥

भुक्त्वा च मुदितो लोके धनी धनविशारदः ।
धनप्राणो धनात्मा च सुखं तदनुचिन्तनात् ॥ ४१ ॥

अनुभूय तदानन्दं तदिहापि विराजते ।
नदीनदसमीपे च पितृपीठेऽथवा प्रिये! ॥ ४२ ॥

कृत्वा जप्त्वा च तल्लोके तथेह तैः प्रमोदितः ।
कामात्मा कामरूपी च कामी काममनोहरः ॥ ४३ ॥

कामयित्वाऽखिलान् कामान् कामराज इवाऽपरः ।
राजते सततं राजा राजभिश्चैव राजिभिः ॥ ४४ ॥

---

१. समासते–ख० ।

पुण्यक्षेत्रे महापीठे पुण्यवृक्षसमीपके ।
कृत्वा जप्त्वा नरो मानी मान्योऽयं यमलोकराट् ॥ ४५ ॥

सर्वदा युञ्ज(ज्य)ते लोके राजते सिद्धभूमिषु ।
मानुषत्वं विना सिद्धिः पुनः परमदुर्लभा ॥ ४६ ॥

यस्मात् तत् सर्वलोकानां भोगप्रत्यक्षदायकम् ।
प्रफुल्लकुसुमाकीर्णे उद्यानेऽतिमनोहरे ॥ ४७ ॥

प्रफुल्लकुन्दसंमोदप्रपूरितदिगन्तरे ।
वृक्षमूलेऽथवा जप्त्वा कृत्वा हस्तं स्वमस्तके ॥ ४८ ॥

गन्धर्वरूपवान् भूत्वा गीतनृत्यविशारदः ।
गन्धर्वान् किन्नरान् कृत्वा तल्लोके च तथेह तैः ॥ ४९ ॥

आनन्दं परमं लब्ध्वा गीतनृत्यादिगोचरम् ।
तदानन्दमये रम्ये मोदते तत्प्रसादतः ॥ ५० ॥

नागलोकसन्धिभूमौ वने गिरिगुहासु च ।
कृत्वा जप्त्वा सदा देवीं नागान् सर्वान् वशं नयेत् ॥ ५१ ॥

तैः प्रमुदितः[1] प्राज्ञस्तल्लोके च तथेह च ।
भुङ्क्ते बहुविधान् भोगान् नागलोकप्रतिष्ठितान् ॥ ५२ ॥

परकीये यदा यत्र पशुच्छन्ने विलोकिते ।
कृत्वा जप्त्वा नरो धर्मादक्षरं लोकमाप्नुयात् ॥ ५३ ॥

तानेव[2] वशगान् कृत्वा तल्लोके च तथेह च ।
मोदते सततं वीरः सुरासुरविचेष्टितः ॥ ५४ ॥

यत्र कुत्र महापीठे शौरिसूर्यविलोकने ।
कृत्वा जप्त्वा महातेजा भवरोगतमोपहा ॥ ५५ ॥

---

१. प्रमुदिता–क० ।
२. तामेव–ख० ।

उदेति सविता सूर्यः [1]सूर्यलोके तथेह च ।
वने सर्वान् वशे कृत्वा वशी वशं नयेज्जगत् ॥ ५६ ॥

पुण्यानदीजलान्ते यस्तदन्ते वा निरन्तरम् ।
सदा पुण्यजलस्नायी तत्पायी तद्विहारवान् ॥ ५७ ॥

कृत्वा जप्त्वा नरः प्राज्ञो ब्रह्मर्षिलोकसंज्ञके ।
ब्रह्मर्षिभिर्मुदा तत्र तथेह [2]तत्प्रसादतः ॥ ५८ ॥

भुङ्क्ते स विपुलान्[3] भोगान् ब्रह्मघोषपुरःसरान् ।
महत्या च प्रियायुक्तो ब्राद्ध्या (?) चातिश्रद्धया ॥ ५९ ॥

राजते सततं राजा राजिराजविहारवान् ।
देवतायतने धन्ये नित्यपूजागृहे तथा ॥ ६० ॥

देवताः प्रतिगृह्णन्ति देवतायतने कृतम् ।
उद्याने सुसमापन्ने गृहे चातिमनोहरे ॥ ६१ ॥

नित्यमावाहयेत् तत्र मधुपर्कादिभिर्यजेत् ।
देवांस्तत्र विजानीयात् तेषां सान्निध्ययोगतः ॥ ६२ ॥

देवताभवनैस्तुल्ये शोभिते देवशोभया ।
निर्जने चातिशुद्धे च गन्धधूपोत्करे शुभे ॥ ६३ ॥

दीपदर्शनघण्टादिकुसुमोत्करभूषिते ।
[4]देवीपीठे महापुण्ये महदुच्चगृहे तथा ॥ ६४ ॥

कृत्वा जप्त्वा नरो देवि! कारयेद् वशगान् सदा ।
भावनावशसम्पन्नो नरो दिव्यस्तथेह च ॥ ६५ ॥

---

१. सूर्यालोके–ख० ।
२. तैः–क० ।
३ विधान्–ख० ।
४. देवपीठे–क० ।

दीव्यते देववद् देवो देवभोगी विहारवान् ।
दिव्यदर्शी दिव्यरूपी दिव्यभोगविहारवान् ॥ ६६ ॥

देवैः सम्मानितो मानी देववद् विहरेत् क्षितौ ।
विमानगामिभिर्यानैर्गजवाजिपुरःसरैः ॥ ६७ ॥

शिवालये शिवक्षेत्रे शिवलिङ्गसमीपके ।
कृत्वा जप्त्वा शिवामोदी शिवलोके तथेह च ॥ ६८ ॥

मोदते सततं योगी युक्तः शिवदकिङ्करैः ।
विष्णुक्षेत्रे महापुण्ये विष्णुगेहे तदन्तिके ॥ ६९ ॥

वैष्णवं भावमाश्रित्य कृत्वा जप्त्वाऽथ साधकः ।
वैष्णवान् वशगान् कृत्वा विष्णुलोके तथेह च ॥ ७० ॥

मोदते सततं शुद्धः स्वयं विष्णुरिवाऽपरः ।
विष्णुपीठे परा सिद्धिः सद्यो देवत्वदायिनी ॥ ७१ ॥

॥ इति गन्धर्वतन्त्रे चतुर्विंशतितमः पटलः ॥ २४ ॥



# पञ्चविंशः पटलः

ईश्वर उवाच

पुण्यक्षेत्राणि वक्ष्यन्ते शृणु प्राधान्यतो मम।
पुण्यक्षेत्रं नदीतीरं गुहा पर्वतमस्तकम् ॥ १ ॥
तीर्थप्रदेशाः सिन्धूनां सङ्गमः पावनं वनम्।
उद्यानानि विविक्तानि बिल्वमूलं तटं गिरेः ॥ २ ॥
तुलसीकाननं गोष्ठं वृषशून्यं शिवालयम्।
अश्वत्थाऽऽमलकीमूलं गोशाला जलमध्यतः ॥ ३ ॥
देवतायतनं कूलं समुद्रस्य निजं गृहम्।
गुरूणां सन्निधानं च चित्तैकाग्रस्थलं[1] तथा ॥ ४ ॥
सर्वेषामुत्तमं प्रोक्तं निर्जनं पशुवर्जितम्।
यत्र तत्र नरः पूजां निर्जने कुरुते तु यः ॥ ५ ॥
तस्यै दत्ते शुभं देवि! पत्रं पुष्पं फलं जलम्।
शुद्धा भक्ताश्च बाहुल्यात् प्रजाद्रव्यस्य विस्तरात् ॥ ६ ॥
देव्याः सन्निधिरत्र स्यान्निर्जने पूजनात् तथा।
वाराणस्यां सदा पूजा सम्पूर्णफलदायिनी ॥ ७ ॥
ततस्तु त्रिगुणा प्रोक्ता पुरुषोत्तमसन्निधौ।
ततोऽपि द्विगुणा प्रोक्ता द्वारवत्यां विशेषतः ॥ ८ ॥
सर्वक्षेत्रेषु पीठेषु पूजा द्वारवतीसमा।
विन्ध्ये शतगुणा प्रोक्ता गङ्गायामपि तत्समा ॥ ९ ॥
आर्यावर्ते मध्यदेशे ब्रह्मावर्ते तथैव च।
विन्ध्यवत् फलदा पूजा प्रयागे पुष्करे तथा ॥ १० ॥

---

१. स्थलस्तथा–ख०।

ततश्चतुर्गुणा प्रोक्ता करतोयानदीजले ।
तस्माच्चतुर्गुणफला नन्दिकुण्डे च पार्वति ! ॥ ११ ॥
ततश्चतुर्गुणा प्रोक्ता जल्पीशेश्वरसन्निधौ ।
तत्र सिद्धेश्वरीयोनौ ततोऽपि द्विगुणा मता ॥ १२ ॥
ततश्चतुर्गुणा प्रोक्ता लौहित्यनदपार्थसि ।
तत्समा कामरूपे च सर्वत्रैव जले स्थले ॥ १३ ॥
सर्वश्रेष्ठो यथा विष्णुर्लक्ष्मीः सर्वोत्तमा यथा ।
देवीपूजा तथा शस्ता कामरूपे सुरालये ॥ १४ ॥
देवीक्षेत्रं कामरूपं विद्यतेऽन्यत्[1] न तत्समम् ।
अन्यत्र विरला देवी कामरूपे गृहे गृहे ॥ १५ ॥
ततः शतगुणा प्रोक्ता नीलकूटस्य मस्तके ।
ततोऽपि द्विगुणा प्रोक्ता हारके शिवलिङ्गके ॥ १६ ॥
ततोऽपि द्विगुणा प्रोक्ता दाक्षायण्याः स्वयोनिषु ।
ततः शतगुणं प्रोक्तं कामाख्यायोनिमण्डले ॥ १७ ॥
कामाख्यायां महादेवीपूजां यः कृतवान् सकृत् ।
स चेह लभते कामान् परत्र शिवरूपताम् ॥ १८ ॥
न तस्य सदृशोऽन्योऽस्ति रिपुस्तस्य न विद्यते ।
वाञ्छितान् समवाप्नोति चिरायुरभिजायते ॥ १९ ॥
वायोरिव गतिस्तस्य भवेदन्यैरबाधिता ।
सङ्ग्रामे शास्त्रवादे च दुर्जयः स हि जायते ॥ २० ॥
मूलमूर्तिर्महादेव्या योनिरूपा निगद्यते ।
तत्र संपूज्य तां देवीं पुनर्जन्म न विद्यते ।
पुण्यक्षेत्रमिति प्रोक्तं न प्रकाश्यं कदाचन ॥ २१ ॥

१. अन्यं-क० ।

देवी उवाच

सङ्ग्रामे सूतके चैव रोगभीतौ तथापदि ।
तदा किं स्यान्महादेव ! तदिह कथयस्व मे ॥ २२ ॥

ईश्वर उवाच

अशौचं साधकेन्द्राणां नास्ति रोगभयं तथा ।
शुचीनां धर्मचर्याणामापदामुद्भवः कुतः ॥ २३ ॥

यदि विघ्नो भवेद् देवि ! पूर्वकर्मनिबन्धनात् ।
तदैवं परमेशानि ! विधिं कुर्याद् विचक्षणः ॥ २४ ॥

गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च ।
एतैर्हीना तु या पूजा न सा कल्याणदायिनी ॥ २५ ॥

पुष्पाञ्जलिं विधायाऽथ पूजयेच्चक्रदेवताः ।
अष्टकोणं त्रिकोणं वा बैन्दवं परिपूजयेत् ॥ २६ ॥

एवं कृत्वा जपेद् विद्यां समर्प्य च विसर्जयेत् ।
कुमार्यै भोजनं दत्त्वा सम्पूर्णफलभाग् भवेत् ॥ २७ ॥

अथवाऽद्वैतभावेन आत्मानं तन्मयं स्मरेत् ।
अद्वैतभावसम्पन्नस्त्रिपुरीकृतविग्रहे ॥ २८ ॥

[1]आत्मन्येव यजेद् देवीमुपचारैर्यथाविधि ।
निजदेहाख्ययन्त्रं तु सर्वयन्त्रात् परं शिवम् ॥ २९ ॥

आनन्दहृदयं कृत्वा सदोल्लासेन[2] मानवः ।
गुरून् नत्वा विधानेन जपेद् विद्यामनन्यधीः ॥ ३० ॥

सुगन्धिपुष्पमालाभिः सर्वालङ्कारभूषणैः ।
स्निग्धं सुमधुरं यन्त्रं कामरूपं मनोहरम् ॥ ३१ ॥

---

१. आत्मन्नेव–ख० ।
२. सद्योन्नासेन–क० ।

कृत्वा सुमङ्गलं देहं मृदुभाषणसस्मितम् ।
अहिंसावृत्तिमाश्रित्य सर्वप्राणिहिते रतः ॥ ३२ ॥

निजभावे सदा तिष्ठेद् देववद् विहरेत् क्षितौ ।
दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ॥ ३३ ॥

वीतरागभयक्रोधो मनोऽहङ्कारवर्जितः ।
योषिदन्ते पुरश्चर्या कार्या रात्रौ न चान्यथा ॥ ३४ ॥

मनस्तुष्टौ समुत्पन्ने सिंहव्याघ्रसमाकुले ।
परसैन्यागमे वापि कुर्यान्मानसपूजनम् ॥ ३५ ॥

कारागारनिबद्धो वा पूजाद्रव्यविहीनकः ।
इदं रहस्यं परममिदं स्वस्त्ययनं महत् ॥ ३६ ॥

मन्त्रवेदमयं शुद्धं पूजाक्रममनुत्तमम् ।
गोपयेद् यत्नतो दिव्यं सर्वसिद्धिप्रदायकम् ॥ ३७ ॥

ज्ञानदं कामदं श्रेष्ठं सद्यःप्रत्ययकारकम् ।
यस्मै कस्मै न दातव्यं नास्तिकाय कदाचन ॥

एतज्ज्ञानात् परं ज्ञानी सद्यो भवति तत्क्षणात् ॥ ३८ ॥

श्रीदेवी उवाच

कथं तन्मानुषे लोके लोकानां दर्शनं भवेत् ।
तत् कथय महादेव ! लोकदेशविभेदतः ॥ ३९ ॥

ईश्वर उवाच

मानुषं भारतं श्रेष्ठं तत्रापि पुण्यदेशकम् ।
लोकाः पुण्यपराः श्रेष्ठास्तेषां ज्ञानी विशिष्यते ॥ ४० ॥

ज्ञानपुण्यविहीनास्तु पिशाचा भोगतत्पराः ।
पशुप्रायजना म्लेच्छाः प्रेतलोकनिवासिनः ॥ ४१ ॥

तदस्तीति प्रमाणेन जानन्ति न समीहते ।
भुङ्क्ते बहुविधान् भोगान् भूतालोकप्रमाणकः ॥ ४२ ॥
भक्ष्याभक्ष्यं न जानन्ति कार्याकार्यमथापि वा ।
वर्तन्ते विधिना यज्ञे भोगैर्मधुपुरस्कृतैः ॥ ४३ ॥
ते पुनरिह देवेशि ! निशाचरप्रमाणकाः ।
जीवनं धनमेवात्र धनचिन्तापरायणाः ॥ ४४ ॥
धनसञ्चयकारी च दानभोगबहिष्कृतः ।
शिश्नोदरमुखो यस्तु केवलं वर्तते जनः ॥ ४५ ॥
यक्षलोकप्रमाणी च यक्षलोके महीयते ।
सदाचारमये देशे सदाचारविहारवान् ॥ ४६ ॥
अरोगी रूपवान् भोगी पितृलोके महीयते ।
मध्यदेशे महापुण्ये देवनदीसमन्विते ॥ ४७ ॥
पूज्यपूजकभावेन यज्ञायज्ञविशारदः ।
शुद्धान्तःकरणो विज्ञो मानुषो लोकसूचकः ॥ ४८ ॥
भोगमोक्षप्रदे शुद्धे कृष्णमृगविचेष्टिते ।
कर्तव्यमिति सर्वाणि श्रुतिस्मृतिमयानि च ॥ ४९ ॥
कुरुते सततं भोगी दानभोगपरायणः ।
देववद् विहरेल्लोके [1]देवलोकप्रमाणकः ॥ ५० ॥
अथ त्रिगुणरूपिण्याः पीठे निस्त्रैगुण्यदायके ।
महादेव्या महापुण्ये गुह्ये वा प्रकटेऽपि च ॥ ५१ ॥
निरानन्दैरथानन्दैर्दक्षिणोत्तररूपकैः ।
अतदात्मा तदात्मा वा योगी वा भोगसंयुतः ।
निस्त्रैगुण्यो भवेद् देवि ! महादेवीप्रसादतः ॥ ५२ ॥

इति गन्धर्वतन्त्रे पञ्चविंशतितमः पटलः ॥ २५ ॥

१. देवलोके-क० ।

# षड्विंशः पटलः

देवी उवाच

कीदृशो वा भवेच्छिष्यः कीदृशो वा भवेद् गुरुः ।
कीदृशी वा भवेद् दीक्षा कथं कुर्याद् वद प्रभो ! ॥ १ ॥

ईश्वर उवाच

अथ दीक्षां प्रवक्ष्यामि मन्त्रिणां हितकाम्यया ।
विनानया न चैव स्यात् सर्वमन्त्रफलं यतः ॥ २ ॥
ज्ञानं दिव्यं यतो दद्यात् कुर्यात् पापक्षयं यतः ।
अतो दीक्षेति सा प्रोक्ता गुरुशिष्यौ वदामि ते ॥ ३ ॥
आदौ विद्यावता बाह्यं दक्षिणामूर्त्तिरव्ययः ।
गुरुर्भूत्वैव भगवान् महाविद्यां [1]ददाति वै ॥ ४ ॥
दिव्यो गुरुर्ऋषिः सोऽथ दिव्यां विद्यां प्रकाश्य च ।
दिव्यौघानकरोच्छिष्यान् वक्ष्येऽथ शृणु पार्वति ! ॥ ५ ॥
प्रकाशोऽथ विमर्शोऽन्यस्त्वानन्दोऽपर इत्यपि ।
नामभेदादहं लोके कल्पयन् दिव्यरूपतः ॥ ६ ॥
त्रयस्तेभ्यः समुत्पन्नाः सिद्धाश्च त्रय एव ते ।
ज्ञानं सत्यं पूर्ण इति श्रीमुखास्ते समीरिताः ॥ ७ ॥
दिव्या मदन्तिके दिव्यसिद्धाभूमाविहापि च ।
निवसन्ति ततस्तेभ्यः समभूवंस्त्रयस्तथा ॥ ८ ॥
स्वभावः प्रतिभस्तद्वत् [2]सुभगश्चेति नामतः ।
ते भूमावेव सततं निवसन्ति मदात्मकाः ॥ ९ ॥

---

१. ददति–क० ख० ।
२. स्वभग–क० ।

प्रसन्नवदनाः सर्वे वराभयकरान्विताः ।
द्विनेत्रा द्विभुजा एते ललिताकारसंयुताः ॥ १० ॥

मायालक्ष्म्यादिकास्तद्वदाख्या आनन्दनाथगाः ।
नवानां नवनामानि नवार्णानि पृथक् पृथक् ॥ ११ ॥

तानि सप्ताक्षरीयोगात् प्रत्येकं षोडशाक्षरम् ।
नित्याषोडशरूपाणि तानि ज्ञेयान्यनुक्रमात् ॥ १२ ॥

विमला जयिनीमध्ये पूज्या एवं वरानने ।
नामपर्यायतः प्राप्तं कालावाप्तमिति द्वयम् ॥ १३ ॥

प्रसिद्धं बाह्यतो यच्च त्रीणि नामानि साधके ।
मनुष्यरूपसम्प्राप्तः सर्वतन्त्रार्थतत्त्ववित् ॥ १४ ॥

मन्त्रतन्त्रावतारोऽथ विचराम्यहमेव सः ।
गुरुः शाक्तो भवेद् ऋद्ध्यै तदन्यो विपरीतदः ॥ १५ ॥

गुरुः सर्वगुणोपेतो दोषैरस्पृष्टमानसः ।
अरोगी नातिवृद्धश्च [1]सुरुचिर्मितभाषणः ॥ १६ ॥

सुन्दरः सुमुखः स्वच्छस्त्वलोभी बहुमन्त्रवित् ।
असंशयः संशयच्छिन्निग्रहानुग्रहे प्रभुः ॥ १७ ॥

निर्द्वन्द्वो निरहङ्कारः सत्यवादी दृढव्रतः ।
आश्रम्याऽश्रमधर्मज्ञो मात्सर्यरहितः शुचिः ॥ १८ ॥

अबहुमन्त्रदो वामी जपपूजापरायणः ।
सर्वतन्त्रार्थवेत्ता च दयावान् न च हिंसकः ॥ १९ ॥

यदृच्छालाभसन्तुष्टः शान्तो नियमवान् ऋजुः ।
स्मेरपूर्वाभिभाषित्वं स्वच्छताऽजिह्मवृत्तिता ॥ २० ॥

---

१. सवचाभिस्वभाषणः–क०, ससुरुचिरिव भाषणः–ख० ।

सन्तोषत्वमगर्वित्वमलोभित्वमनिन्दिता ।
अपक्षत्वमवित्तेच्छा गुरुत्वं हितवादिता ॥ २१ ॥

एवंविधो गुरुर्ज्ञेयस्त्वितरः शिष्यदुःखदः ।
यथायोग्यगुणैः पूर्वैर्युक्तश्चातिप्रियंवदः ॥ २२ ॥

विशुद्धदेहवदनः शुद्धाम्बरधरः शुचिः ।
विमुखः परनिन्दासु देवतादर्शनेषु च ॥ २३ ॥

परा[1]न्नवनिता-भूमि-पीडासु विगतस्पृहः ।
दयान्वितः सर्वजने प्रेक्षाकारी जितेन्द्रियः ॥ २४ ॥

आस्तिको गुरुभक्तश्च शुद्धिमान् सुस्थिराशयः ।
अलुब्धः स्थिरमैत्रश्च गुरुवाक्यप्रमाणकः ॥ २५ ॥

सर्वदा दृढभक्तिश्च गुरौ मन्त्रे सदैवते ।
एवंविधो भवेच्छिष्यस्त्वितरो दुःखकृद् गुरोः ॥ २६ ॥

दीक्षाकालं विनिश्चित्य मुहुर्त्ते दोषवर्जिते ।
गुरुं समाश्रयेच्छिष्यः प्रसादाय समाहितः ॥ २७ ॥

प्रसीद[2] नाथ देवेति तथेति च कृतादरः ।
प्रणम्योपविशेत् पार्श्वे तथा गच्छेदनुज्ञया ॥ २८ ॥

मुखावलोकी सेवेत कुर्यादादिष्टमादरात् ।
असत्यं न वदेदग्रे न बहु प्रलपेदपि ॥ २९ ॥

कामं क्रोधं तथा लोभं मानं प्रहसनं स्तुतिम् ।
चापलानि च जिह्मानि कार्याणि परिदेवनम् ॥ ३० ॥

ऋणदानं [3]तदादानं वस्तूनां क्रयविक्रयम् ।
न कुर्याद् गुरुणा सार्द्धं शिष्योऽपि च कदाचन ॥ ३१ ॥

---

१. पराय–ख० ।

२. प्रसीदे–ख० ।

३. तथादाना–ख० ।

यतो गुरुः शिवः साक्षात् तं स्तुवन् प्रणमन् यजेत् ।
यथा देवे तथा मन्त्रे यथा मन्त्रे तथा गुरौ ॥ ३२ ॥

यथा गुरौ तथा चात्मन्येवं भक्तिक्रमः प्रिये ! ।
अवमन्य गुरोर्वाक्यं स्वबुद्धया कुरुते तु यः ॥ ३३ ॥

न कदाचिद् भवेत् सिद्धिर्मन्त्रैर्देवप्रपूजनैः ।
मन्त्रेण तस्य नियतं पूजां कुर्याद् यथोदितम् ॥ ३४ ॥

आसनं शयनं वस्त्रं भूषणं [1]पादुकां तथा ।
छायां कलत्रमन्यच्च यद् गुरोस्तत् प्रपूजयेत् ॥ ३५ ॥

गुरुशय्यासनं पीठमुपानच्छत्रपादुकाम् ।
स्नानोदकं तथा छायां लङ्घयेन्न कदाचन ॥ ३६ ॥

गुरुं दृष्ट्वा भवेद हृष्टः परमानन्दनिर्भरः ।
भीतभीतः पदाम्भोजे पश्येच्चकितलोचनः ॥ ३७ ॥

औपदीकृत्य सर्वस्वं तदादिष्टं मुदान्वितः ।
कुर्यात् सर्वप्रयत्नेन यथा तुष्टो भवेत् तु सः ॥ ३८ ॥

सकृत् प्रणम्य दण्डवदिष्टदेवधिया गुरुम् ।
पुलकाञ्चितसर्वाङ्गः पूजाकोटिफलं लभेत् ॥ ३९ ॥

यद् यत् प्रियतमं वस्तु भक्त्या तस्मै निवेदयेत् ।
अदत्त्वा गुरवे वस्तु यत् किञ्चिदिह भूतले ॥ ४० ॥

आत्मसात् कुरुते यस्तु स भवेद् योगिनीपतिः ।
यदेव लभ्यते वस्तु भिक्षया वाऽन्यचेष्टया ॥ ४१ ॥

तन्निवेद्य तदादिष्टं स्वयं भुञ्जीत सादरम् ।
एवमेव हि सच्छिष्यैः कर्तव्या गुरुनिष्कृतिः ॥ ४२ ॥

---

१. पदुकां–ख० ।

येन विशुद्धभावेन सर्वथाऽऽत्मार्पणं गुरौ।
गुरुता शिष्यता चैव तयोर्वत्सरकालतः ॥ ४३ ॥

दापयेत् स्वकृतं दोषं पत्नी पापं स्वभर्तरि।
तथा शिष्यार्जितं पापं गुरुमाप्नोति निश्चितम् ॥ ४४ ॥

सद्गुरुः स्वाश्रमे शिष्यं वर्षमेकं परीक्ष्य वै।
दीक्षाकालं ततः प्राज्ञो भावयेत् सुसमाहितः ॥ ४५ ॥

शरत्काले च वैशाखे दीक्षा श्रेष्ठफलप्रदा।
फाल्गुने मार्गशीर्षे च ज्येष्ठे दीक्षा तु मध्यमा ॥ ४६ ॥

आषाढो माघमासश्च कनिष्ठौ सद्भिराहतौ।
निन्दितः श्रावणश्चैत्र पौषो भाद्रपदं तथा ॥ ४७ ॥

निन्दितेष्वपि मासेषु दीक्षोक्ता ग्रहणे शुभा।
विषुवायनयोर्द्वन्द्वे आषाढे मदनोत्सवे ॥ ४८ ॥

ग्रहणेऽर्कस्य चेन्दोर्वा दिनं तत् फलदं भवेत्।
मन्त्रारम्भं सुधीः कुर्यात् शुक्लपक्षे शुभेऽहनि ॥ ४९ ॥

रवौ गुरौ सिते सोमे कर्तव्यं बुधवासरे।
पूर्णिमा पञ्चमी चैव द्वितीया सप्तमी तथा ॥ ५० ॥

त्रयोदशी च दशमी प्रशस्ता सर्वकामदा।
पञ्चाङ्गशुद्धदिवसे स्वोदये राशितारयोः ॥ ५१ ॥

गुरुशुक्रोदये शुद्धे लग्ने द्वादशशोभिते।
चन्द्रतारानुकूले च स्थिरे दीक्षा शुभा प्रिये ! ॥ ५२ ॥

त्रिविधा सा भवेद् दीक्षा मान्त्री शाक्ती च शाम्भवी।
मन्त्रार्चनासनस्थान-ध्यानयोगादिभिः कृता ॥ ५३ ॥

मान्त्री दीक्षा च सा प्रोक्ता यथा शास्त्रोक्तरूपिणी।
सिद्धैः स्वशक्तिमालोक्य तथा केवलया शिशोः ॥ ५४ ॥

निरुपायकृता दीक्षा शाक्तेयी परिकीर्त्तिता ।
अभिसन्धिं विनाचार्यशिष्ययोरुभयोरपि ॥ ५५ ॥

देशिकानुग्रहेणैव शिवताव्यक्तिकारिणी ।
शेषं तु शाम्भवी दीक्षा शिवावेशनकारिणी ॥ ५६ ॥

अज्ञानाद् विश्वविज्ञानं प्राणं संसारबन्धनात् ।
यतः करोति संसिद्धयै मन्त्र इत्युच्यते ततः ॥ ५७ ॥

भूमेः परिग्रहे कुर्याद् यथोक्तं ते मया पुरा ।
शल्यादिशोधनं कुर्याद् याज्ञीविधिविधानतः ॥ ५८ ॥

विप्राः शिवावेदघोषैर्मङ्गलाचारपूर्वकम् ।
वास्तोर्बलिं प्रकुर्वीत मण्डलं रचयेत् तथा ॥ ५९ ॥

सर्वमङ्गलसम्पत्त्यै विदध्यादङ्कुरार्पणम् ।
गुरुः कालं विनिश्चित्य प्रागेव सप्त वासरान् ॥ ६० ॥

शिष्यानुकूलमन्त्रेण पूजयेत् परदेवताम् ।
प्रणवाद्यैर्नमोऽन्तैश्च रात्रौ रात्रीशनामभिः ॥ ६१ ॥

प्रोक्तबलींस्तु तेषां वै वितरेद् विधिना गुरुः ।
पूजां रात्रौ प्रकुर्वीत दिक्पालानपि पूजयेत् ॥ ६२ ॥

तत्तद्ध्वजमधिष्ठाय तत्तद्वर्णविराजितम् ।
पायसान्नैर्बलिं तेभ्यो दत्त्वा तान् प्रार्थयेद् गुरुः ॥ ६३ ॥

धरायुक्तं वारिपात्रं तत्तन्मन्त्रानुमन्त्रितम् ।
शिरस्याधाय देवेशि ! प्रदक्षिणमनुव्रजन् ॥ ६४ ॥

यज्ञं संरक्षयेद् दिव्यमादौ गुरुरनन्यधीः ।
शक्रादिसहिता देवाः पूजितास्तर्पितास्तथा ॥ ६५ ॥

मखं रक्षन्तु सन्तुष्टा लोकपाला नमोऽस्तु वः ।
मखग्रहणपूर्वेद्युः सायमेव विवासनम् ॥ ६६ ॥

गुर्वादिसहितो वासो रात्रौ नियमपूर्वकम् ।
विधिवन्मण्डपं चारुवेदिकामध्यशोभितम् ॥ ६७ ॥

पताकाध्वजसङ्कीर्णं वितानादिविभूषितम् ।
निर्धूमशान्तसम्बुद्धदीपावलिभिरर्चितम् ॥ ६८ ॥

पुष्पाक्षतफलैः कुम्भैर्लाजैरर्चिभिरर्चितम् ।
तरुपल्लवमालाभिः सर्वतः समलङ्कृतम् ॥ ६९ ॥

सवृन्तैः कदलीस्तम्भैः पूगपोतैरलङ्कृतम् ।
पञ्चगव्येन तद्गेहं चक्रराजं शिशुं तथा ॥ ७० ॥

शोधयेन्मूलमन्त्रेण मन्त्रितेन वरानने ।
समानं पञ्चगव्यानां कृत्वा भागं विशोधयेत् ॥ ७१ ॥

मूलमन्त्रेण सन्मन्त्र्य कुशाग्रेणैव शोधयेत् ।
तेन सर्वविशुद्धिः स्यात् सर्वपापनिकृन्तनी ॥ ७२ ॥

महापातकजातानि कृत्वा गव्यं पिबेद् यदि ।
नाशयेत् पानमात्रेण इत्याहुर्वेदवेदिनः ॥ ७३ ॥

सुस्नातं शुद्धवेशं च शिष्यं सुस्थिरमानसम् ।
आरात्स्थोऽयं च विधिवद् यजेदनुदिनं गुरुः ॥ ७४ ॥

होमयेत् संस्कृते वह्नौ पायसैर्मधुराप्लुतैः ।
आचार्यः कुण्डे विधिवत् सम्पूज्य परदेवताम् ॥ ७५ ॥

मूलेनैव शिखां बद्ध्वा ततः शय्यागतं शिशुम् ।
स्वप्नमानवमाश्रित्य खादयेत् पूर्वमस्तकम् ॥ ७६ ॥

तारो हिलिद्वयं शूलपाणये द्विज ईरितः ।
स्वप्नमानवमन्त्रोऽयं शयने परिकीर्तितः ॥ ७७ ॥

नमोऽजाय त्रिनेत्राय पिङ्गलाय महात्मने ।
रामाय विश्वरूपाय स्वप्नाधिपतये नमः ॥ ७८ ॥

स्वप्ने कथय मे तथ्यं सर्वकार्येष्वशेषतः ।
क्रियासिद्धिं विधास्यामि त्वत्प्रसादान्महेश्वर! ॥ ७९ ॥

मन्त्रेण [1]स्वापकाले तु देवं प्रार्थ्य ततः स्वपेत् ।
स्वप्ने शुभाशुभं दृष्टं पृच्छेत् प्रातः शिशुं गुरुः ॥ ८० ॥

गुरुणा चार्चनं कृत्वा उपवासी जितेन्द्रियः ।
दर्भशय्यागतो रात्रौ दृष्ट्वा स्वप्नं निवेदयेत् ॥ ८१ ॥

कन्यां छत्रं रथं दीपं प्रासादं मङ्गलं नदीम् ।
कुङ्कुमं कृषरं माल्यं स्वर्णं च फलिनं द्रुमम् ॥ ८२ ॥

पर्वतं च हयं मेध्यमाममांसं सुरासवम् ।
एवमादीनि सर्वाणि दृष्ट्वा सिद्धिमवाप्नुयात् ॥ ८३ ॥

चाण्डालं गर्दभं काकं रुजाशून्यं च मङ्गलम् ।
तैलाभ्यक्तं नरं नग्नं शुष्कवृक्षं सकण्टकम् ॥ ८४ ॥

पर्वतं च हयं मेध्यमाममांसं सुरासनम् ।
एवमादीनि सर्वाणि दृष्ट्वा सिद्धिमवाप्नुयात् ॥ ८५ ॥

चाण्डालं गर्दभं काकं रुजाशून्यं च मङ्गलम् ।
तैलाभ्यक्तं नरं नग्नं शुष्कवृक्षं सकण्टकम् ॥ ८६ ॥

प्रासादमङ्गलं दृष्ट्वा नरो रोगमवाप्नुयात् ।
दृष्ट्वा दुःस्वप्नकं चैव होमात् सिद्धिमवाप्नुयात् ॥ ८७ ॥

शुभेऽशुभं वदेत् तस्य जुहुयादशुभं शुभम् ।
अस्त्रेणेति क्रमात् प्रोक्तो विधिः शिष्याधिवासने ॥ ८८ ॥

॥ इति गन्धर्वतन्त्रे षड्विंशतितमः पटलः ॥ २६ ॥



---

१. स्वपि-क० ।

## अथ सप्तविंशः पटलः

ईश्वर उवाच—

अथ पूर्वानुसारेण नित्यं प्रातः समाप्य च ।
देवान् पितॄन् समभ्यर्च्य वस्त्रालङ्कारभूषणैः ॥ १ ॥

आचार्यं वृणुयाद् भक्त्या ब्राह्मणानपि तोषयेत् ।
शिष्यः सालङ्कृतो मौनी पुष्पचन्दनभूषितः ॥ २ ॥

नानामङ्गलवाद्यैश्च ब्रह्मघोषपुरःसरम् ।
नारीणां मङ्गलाशीभिर्ब्राह्मणानां तथैव च ॥ ३ ॥

जयशब्दान्वितैः स्तोत्रैः सन्तुष्टः शुद्धमानसः ।
दीपमालावलीरम्यं नानाधूपप्रधूपितम् ॥ ४ ॥

मण्डपं विधिवद् देवि ! पूर्ववत् प्रविशेद् गुरुः ।
पूर्ववदपरं कृत्वाऽऽसने समुपविश्य च ॥ ५ ॥

तथा परं च निर्वर्त्य कुङ्कुमेन वरानने ! ।
वेदिकायां वरारोहे ! सिन्दूररजसाऽथवा ॥ ६ ॥

चक्रराजं तु लिखितं तन्मध्ये दर्भविस्तृते ।
सौवर्णं राजतं ताम्रं माहेयं च सुलक्षणम् ॥ ७ ॥

द्वात्रिंशदङ्गुलं कुम्भं विस्तारोन्नतिशालिनम् ।
क्षालयित्वाऽस्त्रमन्त्रेण कुम्भं सम्यक् सुरेश्वरि ! ॥ ८ ॥

चन्दनागुरुकर्पूररोचनाकुङ्कुमैरपि ।
दिव्यैर्द्रव्यैस्तु सम्पूर्णं वासोयुग्मेन वेष्टितम् ॥ ९ ॥

नूतनं नेत्ररम्यं च पुष्पमालाद्यलङ्कृतम् ।
दधिचन्दनसंलिप्तं क्षिप्त्वाऽन्तर्नवरत्नकम् ॥ १० ॥

मदयन्तीं सहदेवां दूर्वां भस्म तथैव च ।
मृत्तिकासप्तविन्यस्तं पल्लवैः पञ्चभिर्युतम् ॥ ११ ॥

परितो वेष्टितं सूत्रै रक्तैश्चातिमनोहरैः ।
यवानास्तीर्य पुष्पाणि सरद्रुमधिया गुरुः ॥ १२ ॥

मूलमन्त्रेण संस्थाप्य भजेदाधारपूर्वकम् ।
वह्निमण्डलरूपं तं कलाभिः सह पूजयेत् ॥ १३ ॥

तथा सूर्यमयं कुम्भं कलाभिस्तत्र पूजयेत् ।
जलं सोममयं तद्वत् कलाभिश्च समर्चयेत् ॥ १४ ॥

तेजस्त्रयमिदं प्रोक्तं ज्वलन्तदात्मकं स्मृतम् ।
पुष्पैरञ्जलिमापूर्य तस्मिन्नेव प्रदापयेत् ॥ १५ ॥

पश्चिमोत्तररुद्रेन्द्रे पुष्पपातः शुभोऽशुभे ।
अष्टोत्तरशतं शान्त्यै जुहुयादस्त्रमन्त्रतः ॥ १६ ॥

अथ प्रागुक्तविधिना यथाक्रममनुत्तमम् ।
कृत्वा सम्पूज्य विध्विवदिष्ट्वा देवधिया गुरुः ॥ १७ ॥

अङ्गावृतीः समभ्यर्च्य श्रपयित्वा चरुं ततः ।
भागमेकं महादेव्यै शेषमग्नौ हुनेत् ततः ॥ १८ ॥

अष्टोत्तरशतं साज्यं मधुरत्रितयान्वितम् ।
समिद्धेऽग्नौ महादेवीं ध्यात्वा सम्यक् प्रधानतः ॥ १९ ॥

योऽनर्चिषि जुहोत्यग्नौ असमिद्धे च मानवः ।
स मन्दाग्निः सामयो वा अल्पायुश्चोपजायते ॥ २० ॥

तस्मात् समिद्धे होतव्यं नासमिद्धे कथञ्चन ।
आरोग्यमिच्छताऽऽयुश्च श्रियमात्यन्तिकीं तथा ॥ २१ ॥

तथा बुधः सधूमे च जुहुयाद् यो हुताशने ।
यजमानो भवेदन्धः सपुत्रश्च विनश्यति ॥ २२ ॥

अथ दीप्ते न होतव्यं मध्यमे नाऽप्यनेधिते ।
प्रदीप्ते लेलिहानेऽग्नौ होतव्यं कर्मसिद्धये ॥ २३ ॥

हुत्वा साङ्गां महेशानीं समाप्य तदनन्तरम् ।
कर्म पूर्वोक्तमाचार्यं तरुणोल्लासवान्[1] गुरुः ॥ २४ ॥
शिष्यमाहूय यत्नेन वाससाऽऽच्छाद्य तन्मुखम् ।
विशेषार्घ्योदकेनैव तमवेक्ष्य विधानतः ॥ २५ ॥

कारुण्यनिलये देवि ! सर्वसम्पत्तिसंश्रये ।
शरण्ये वत्सले मातः ! कृपामस्मिन् शिशौ कुरु ॥ २६ ॥

अशिवप्रमुखैः पाशैः पाशितस्य सुरेश्वरि ।
दीनस्याऽस्य दयाधारे कुरु कारुण्यमीश्वरि ! ॥ २७ ॥
ऐहिकामुष्मिकैर्भोगैरभिसम्बुध्यतामसौ ।
स्वभक्तिं सकलां चास्मै दीयतां निष्कलाश्रये ॥ २८ ॥
एवं प्रार्थ्य महादेवीं मुद्रास्यहृदयाम्बुजे ।
शिष्याय श्रावयेद् दिव्यः शिवोऽहमिति भावयन् ॥ २९ ॥

अन्तस्तमोपहं दिव्यं सिद्धान्तं श्रावयेद् गुरुः ।
यत् त्रैंशत्तत्त्वभरितं[2] विश्वं स्थावरजङ्गमम् ॥ ३० ॥
शरीरं चापि तन्नोद्यं[3] तस्मिन्नेव द्विधा शिवः ।
कञ्चुकितः शिवो[4] जीवो निष्कञ्चुकः परः शिवः ॥ ३१ ॥
आत्मज्ञानमात्मविधिः पुरुषार्थः समीरितः ।
वर्णात्मकं महेशानि ! नित्याः शब्दाः प्रकीर्तिताः ॥ ३२ ॥

---

१. उल्वास–ख० ।
२. भर्वति–ख० ।
३. तन्नोत्थं–ख० ।
४. शिरी–ख० ।

अचिन्त्यस्त्विह मन्त्राणां प्रभावः समुदाहृतः ।
सम्प्रदायपरिज्ञानं गुरूणां सिद्धिदायकम् ॥ ३३ ॥

विश्वासाद् गुरुवाक्यानां सर्वसिद्धिरितीरिता ।
प्रामाण्यं चात्र स्वनिष्ठं विश्वासः समुदाहृतः ॥ ३४ ॥

गुरूणां चैव मन्त्राणां देवानामपि पार्वति ! ।
मनःपवनयोश्चैवमेकत्वेन विभावनात् ॥ ३५ ॥

अन्तरात्मपरिज्ञानमिति जानीहि पार्वति ! ।
आनन्दं ब्रह्मणो रूपं तच्च देहं विभावयेत् ॥ ३६ ॥

तस्याऽभिव्यञ्जकाः पञ्च मकाराद्याः प्रकीर्त्तिताः ।
तैरेव यजनं तस्य गुप्त्या सिद्धिर्न चान्यथा ॥ ३७ ॥

प्रकटा च वयं यस्माद् गोपयेन्मातृजारवत् ।
अभेदभावनादार्ढ्यादाज्ञासिद्धिः समीरिता ॥ ३८ ॥

न निन्देद् दक्षिणं वामं न निन्देद् दर्शनानि च ।
निन्दाद्रोहादिकर्तॄणां गणनां नैव कारयेत् ॥ ३९ ॥

रहस्यकथनं देवि ! सच्छिष्य एव नापरे ।
सदा विद्यानुसन्धानं शिवभावेन तत्परः ॥ ४० ॥

कामं क्रोधं तथा लोभं मदमोहौ तथैव च ।
हिंसां स्तेयं च मात्सर्यं यल्लोकेषु विगर्हितम् ॥ ४१ ॥

स्त्रीविद्वेषादिकं चैव वर्जयेन्मतिमान् सदा ।
एक एव गुरुर्देवस्तस्यैवोपासनं सदा ॥ ४२ ॥

असंशयस्तु सर्वत्र निष्परिग्रहता मता ।
फलविरहितं कर्म त्यजेदनित्यमेव तत् ॥ ४३ ॥

पञ्चानामप्यलाभे तु नित्यं क्रमविमर्षणम् ।
निर्भयत्वं च सर्वस्माद् ज्ञेयं सर्वं हरिप्रिये ! ॥ ४४ ॥

स्वयमेव हि होताऽत्र आत्मा शवस्तु पावकः।
आत्मलाभात् परं नास्ति फलं क्वापि च सुव्रते!॥ ४५॥

सैषा शास्त्रपरा शैवी कथिता तव पार्वति!।
वेदादिसकला विद्या वेश्या इव प्रकाशिता॥ ४६॥

सर्वेषु दर्शनेष्वेव विद्येयं खलु गोपिता।
धीमांस्तत्रैव दीक्षेत सर्वथाऽऽत्मविभूतये॥ ४७॥

अथ शिष्यशिरोदेशे वरुणं रक्तशुक्लयोः।
भावयित्वा वपुस्तस्य क्षालितं मासबृंहितम्॥ ४८॥

तदमृतैः श्रवद्भिश्च कुर्याद् गुरुरुदारधीः।
मूलादिब्रह्मरन्ध्रान्तं ज्वलन्तीं ज्वलनच्छविम्॥ ४९॥

प्रतीशषहरीं (?) कोटिसूर्यप्रकाशिनीं पराम्।
चन्द्रकोटिप्रभां शुद्धामज्ञानेन्धनदाहिकाम्॥ ५०॥

तत्तद्रश्मिभिरेवास्य पापपाशांस्तु सन्दहेत्।
शिवोऽहमिति निश्चित्य वीक्षेत करुणादृशा॥ ५१॥

सर्वपापविनिर्मुक्तं सर्वदोषविवर्जितम्।
पुनः स्वयं शिवो भूत्वा असन्दिग्धमना गुरुः॥ ५२॥

शिवहस्तेन शिष्यस्य मन्त्रं शिरसि संस्पृशेत्।
जपोक्तक्रमतो योगी शिष्यदेहं प्रविश्य तु॥ ५३॥

गृहीत्वा तस्य चात्मानं आत्मनो योजयेद् गुरुः।
स्वयं मन्त्रतनुर्भूत्वा [1]सङ्क्रमन्मेऽनादरात्॥ ५४॥

सौवर्णकर्णिके शिक्ष्यं स्वरद्वन्द्वाष्टके शरे।
दिगष्टकस्थितं चं रं वर्गाष्टयुक्तदिग्दले॥ ५५॥

---

१. सङ्क्रमेन मनादरात्—क०।

चतुरस्रासने शुद्धे मातृका यन्त्रराजका।
निवेश्य सादरं देवि! कलशामृतधारया ॥ ५६ ॥

स्नापयेन्मूलविद्याभिस्त्रिभङ्गो देशिकोत्तमः।
परिधाप्य दुकूले च चन्दनाद्यैर्विलेपयेत् ॥ ५७ ॥

अलङ्कृत्य यथालाभं समानं शिष्यपुत्रकम्।
प्रसन्नं शान्तचित्तं च पार्श्वे निवेश्य देशिकः ॥ ५८ ॥

तदङ्गे मातृकां न्यस्य विद्याङ्गन्यासमाचरेत्।
विमुक्तमुखवस्त्रस्य हस्ते तस्य गुरुः स्वयम् ॥ ५९ ॥

यथाधिकारमालोच्य द्रव्यभेदान् प्रकाशयेत्।
अन्यथा सर्वहानिः स्याद् भोग्येषु प्रकाशनात् ॥ ६० ॥

भोजनं तत्त्वमन्त्रैस्तु कारयेद् ग्रासमुद्रया।
अथ गुरुः प्रसन्नात्मा पूर्वोक्तामात्मनः पराम् ॥ ६१ ॥

बालान्वितां विधायाऽऽदौ पादुकां विनिवेदयेत्।
दक्षकर्णे दिशेद् बालां पश्चादिष्टं निवेदयेत् ॥ ६२ ॥

स्वकीयचरणं मूर्ध्नि शिशोर्निक्षिप्य पार्वति!।
सर्वान् मन्त्रान् सकृद् वापि क्रमेणैव यथाविधि ॥ ६३ ॥

यथाधिकारमावर्त्य स्वाङ्गेषु च शिशोः करम्।
स्पर्शयित्वा किमप्यङ्गं तदङ्गमातृकादिकम् ॥ ६४ ॥

द्व्यक्षरं त्र्यक्षरं वापि चतुरक्षरमेव वा।
आनन्दनाथशब्दान्तं नाम कुर्याद् गुरुः पिता ॥ ६५ ॥

आचारानन्वशिष्यार्थं हृच्चैतन्यं परामृषन्।
त्रिभिः कूटैस्तदङ्गं च त्रिः प्रमृज्य गुरुः स्वयम् ॥ ६६ ॥

परिरभ्य तदा मूर्ध्नि समुपाघ्राय सादरम्।
आत्मरूपं ततः कृत्वा शिष्यः पूर्णो विभावयेत् ॥ ६७ ॥

अष्टोत्तरं सहस्रं स्वशक्तिहानानवाप्तये[1] ।
प्रसन्नात्मा जपेद् विद्यां ततो गुरुरुदारधीः ॥ ६८ ॥

कृतार्थः कृतकृत्यस्तु यथाविभवविस्तरैः ।
वित्तशाठ्यं परित्यज्य दम्भमोहौ च [2]जिह्मताम् ॥ ६९ ॥

हस्त्यश्वरथयानाद्यैर्दासदासीभिरेव च ।
गोभूहिरण्यवस्त्राद्यैस्तोषयेद् गुरुमात्मनः ॥ ७० ॥

कुम्भादिकर्णे यन्त्रव्यं सर्वमण्डप एव च ।
अर्थं प्राणाः शरीरं च सर्वं तस्मै निवेद्य च ॥ ७१ ॥

पतित्वा पादयोर्मूले दण्डवद् भुवि मानवः ।
नमस्ते भगवन् ! नाथ ! शिवाय गुरुरूपिणे ॥ ७२ ॥

प्रसीद करुणाधाम मयि दीनत्वतापिते ।
कायेन मनसा वाचा त्वत्तो नान्या गतिर्मम ॥ ७३ ॥

प्रसन्ना तु परा देवी भोगमोक्षविधायिनी ।
तन्मना भव हे पुत्र ! तामेव त्वं सदा स्मर ॥ ७४ ॥

द्वैतभावं च ते माऽस्तु पूर्णानन्दमयो भव ।
वक्त्रैस्तिष्ठेति पीयूषैर्वचोभिरभिनन्द्य तम् ॥ ७५ ॥

हस्ताभ्यां च तमुत्थाप्य प्रसन्नोऽहं सदा प्रिये ! ।
सिद्धयः सकलास्तूर्णं सन्तु ते मत्प्रसादतः ॥ ७६ ॥

प्रसन्नात्मा तथा शिष्यो विदिताखिलवेदकः ।
भक्तिश्रद्धासमायुक्तो भोजयेद् वैद्धमाविकाः (?) ॥ ७७ ॥

ब्राह्मणान् परितोष्याऽथ दीनान्धकृपणानपि ।
पक्वान्नैरतिमिष्टैश्च ज्ञातीनपि च भोजयेत् ॥ ७८ ॥

---

१. हान्यनवाप्तये-क० ।
२. जिम्भतां-क० ।

गन्धैर्नानाविधैः पुष्पैर्माल्यैरपि च तोषयेत् ।
तेभ्य आशिष आदाय समर्थीयान् (?) जयावहः ॥ ७९ ॥

सद्गुरोराहितदीक्षो महाविद्याधरो महान् ।
सर्वमन्त्राधिकारी स्यात् सर्वज्ञो भुवि जायते ॥ ८० ॥

॥ इति गन्धर्वतन्त्रे सप्तविंशतितमः पटलः ॥ २७ ॥



# अथ अष्टाविंशः पटलः

श्रीदेवी उवाच

पुरश्चर्याविधिं ब्रूहि विद्यासिद्धिर्भवेद् यथा।
अथ वक्ष्ये विधानानि पौरश्चारणिके विधौ ॥ १ ॥

विना येन न सिद्धः स्यान्मन्त्रो वर्षशतैरपि।
यथाविधि गुरोर्दीक्षां गृहीत्वा साधकोत्तमः ॥ २ ॥

तथैव तु यजेद् देवीं नित्यं प्रातरनन्यधीः।
आत्मानं तन्मयं स्मृत्वा भक्तिश्रद्धासमन्वितः ॥ ३ ॥

अष्टोत्तरं सहस्रं वा लक्षार्धं यावदेव हि।
तावदेव मनुं जप्त्वा पुरश्चर्यां समाचरेत् ॥ ४ ॥

न्यूनातिरिक्तदोषाणां शास्त्रा[न्ता]वष्टाधिकं जपेत्।
गुरोराज्ञां समादाय शुद्धान्तःकरणो नरः ॥ ५ ॥
यत्नात् परस्त्रियं कुर्यात् स्वविद्यासिद्धिकाङ्क्षया।
सर्वेषामेव मन्त्राणां विद्यानां चैव पार्वति ! ॥ ६ ॥
गुरोराज्ञैव मूलं स्यात् सिद्धिर्यस्मात् तदाज्ञया।
अश्रद्धा चैव नास्तिक्यं पूर्वजन्मकृतां शुभम् ॥ ७ ॥
प्रतिबन्धत्रयं देवि ! मन्त्रसिद्धौ निगद्यते।
यत्नात् पुरश्चरेन्मन्त्री प्रतिबन्धं विनाशने ॥ ८ ॥
लक्ष्मीमदादनादृत्य मन्त्रं भोगपरायणः।
नैवार्चां कुरुते मन्त्री तथा नैव पुरस्क्रियाम् ॥ ९ ॥
स मन्त्रस्य ऋणी ज्ञेयो भजनं तस्य शान्तये।
जीवहीनो यथा देही सर्वकर्मसु न क्षमः ॥ १० ॥

पुरश्चरणहीनोऽपि तथा मन्त्रः प्रकीर्तितः ।
तत् कुर्यात् सर्वथा मन्त्री गुरुं वा कारयेद् बुधः ॥ ११ ॥
गुरोरभावे विप्रोऽस्य सर्वप्राणिहिते रतः ।
शुद्धान्तःकरणः स्निग्धो वासादिभिर्विशेषतः ॥ १२ ॥
कुलज्ञः कुलशास्त्रज्ञः पुनर्गुरुः पुरस्क्रियाम् ।
कारयित्वा पुनर्विद्यां लब्ध्वाऽतिविनियोजयेत् ॥ १३ ॥
आदौ पुरस्क्रियां कर्तुं पुण्यक्षेत्रं समाश्रयेत् ।
चतुर्दश्यामथाऽष्टम्याममावास्यामुहूर्त्तके ॥ १४ ॥
देव्याः पुरस्क्रियारम्भः कर्त्तव्यः साधकोत्तमैः ।
अथ पूर्वमुपोष्याथ कृतनित्यक्रियः शुचिः ॥ १५ ॥
द्विजान् देवान् गुरून् भक्त्या सम्पूज्य परमेश्वरि ! ।
गणेशं मातृकां चैव पितृंश्चैव प्रपूजयेत् ॥ १६ ॥
ग्रामे वा नगरे देशे पुरे वा पत्तने तथा ।
क्षेत्राधिपस्य नाम्ना तु दीपस्थानं विचारयेत् ॥ १७ ॥
शक्तिक्षेत्रे शिवक्षेत्रे दीपस्थानं विचिन्तयेत् ।
वर्त्तुलं रचयेद् देवि ! कूर्माकृति सुलोचने ! ॥ १८ ॥
तन्मध्ये नवकोष्ठानि कृत्वा वर्णान् समालिखेत् ।
स्वरान् युग्मक्रमेणैव दिक्षु चाऽष्टदलेषु च ॥ १९ ॥
अवर्गः कथितो देवि ! कवर्गादिकसप्तकम् ।
पूर्वादिक्रमतो देवि ! कुबेरान्तं लिखेत् ततः ॥ २० ॥
लक्षवर्णं ! शम्भुकोणे विलिखेत् कूर्मसंज्ञके ।
यस्मिन् कोष्ठे क्षेत्रनाम तन्मुखं विद्धि पार्वति ! ॥ २१ ॥
अङ्गेषु पार्श्वयोः पाणियुग्मं जानीहि सुन्दरि ! ।
ततः पार्श्वद्वयं देवि ! कुक्षिस्थानं निगद्यते ॥ २२ ॥

ततः पादद्वयं देवि ! चान्ते पुच्छं प्रकीर्त्तितम् ।
मुखे कार्याणि सिध्यन्ति मनोरथशतानि च ॥ २३ ॥
कण्ठस्थाने महेशानि ! सर्वकार्यविनाशकृत् ।
उदरे दुःखदारिद्र्यं पादयोर्हानिरुच्यते ॥ २४ ॥
पुच्छे तु धनहानिः स्यादित्येवं कथितं मया ।
दीपस्थानं समाश्रित्य जपपूजां समाचरेत् ॥ २५ ॥
पूर्वोक्तविधिसम्पन्नं गुरुं नत्वा विधानतः ।
अक्षमालां समाश्रित्य मातृकां वर्णरूपिणीम् ॥ २६ ॥
मन्त्रसिद्धिप्रदां शुद्धां सर्वपापौघनाशिनीम् ।
प्रणवो मातृका देवी माया चैवाऽमृतत्रयम् ॥ २७ ॥
अमृतत्रयसंयोगाद् दुष्टमन्त्रोऽपि सिद्ध्यति ।
अथ मुक्ताफलमयी वाङ्मोक्षफलदायिनी ॥ २८ ॥
सर्वसिद्धिप्रदा नित्यं सर्वलोकवशङ्करी ।
यथा मुक्ताफलमयी स्फाटिकी च तथा भवेत् ॥ २९ ॥
रुद्राक्षमालिका भोगमोक्षानन्तफलप्रदा ।
प्रवालमाला वश्ये तु सर्वकार्यार्थसाधिका ॥ ३० ॥
[1]मणिना रचिता माला साम्राज्यफलदायिनी ।
पुत्रजीवोद्भवा माला पुत्रपौत्रप्रदायिनी ॥ ३१ ॥
पद्माक्षमालया लक्ष्मीर्जायते महती यशः ।
रक्तचन्दनमाला तु वश्ये सर्वसमृद्धिदा ॥ ३२ ॥
महाशङ्खमयी माला मारणोच्चाटनादिषु ।
वीराणां शस्यते सा हि शेषयोर्न शुभप्रदा ॥ ३३ ॥
पञ्चाशद्भिः शतैः कुर्यादष्टाविंशतिरेव वा ।
न न्यूनैर्नाधिकैः कार्या बीजाद्यैर्न विभूतये ॥ ३४ ॥

---

१. मलिना—ख० ।

एको मेरुस्तत्र देयः सर्वेभ्यः स्थूलसम्भवः ।
आद्यं स्थूलं ततो न्यूनं न्यूनं न्यूनतरं ततः ॥ ३५ ॥
विन्यसेत् तमतस्तस्मात् सर्पाकारा विना यतः ।
ब्रह्मग्रन्थियुतं कुर्यात् प्रतिबीजं तथा स्थितम्[1] ॥ ३६ ॥
अन्यथा विफला माला संस्कृता जपकर्मणि ।
रुद्राक्षैर्यदि जप्येत इन्द्राक्षैः स्फाटिकैस्तथा ॥ ३७ ॥
नान्यं मध्ये प्रयोक्तव्यं पुत्रजीवादिकं तु यत् ।
यदन्यत् तु प्रयुञ्जीत मालायां जपकर्मणि ॥ ३८ ॥
मिश्रीभावं तदा याति चाण्डालैः पापकर्मभिः ।
एकजातीयबीजेन यः कुर्यान्मालिकां सदा ॥ ३९ ॥
जन्मान्तरे जायते स वेदवेदाङ्गपारगः ।
पूर्वोक्तेन विधानेन गृहीत्वा दिव्यमालिकाम् ॥ ४० ॥
जपं समारभेत् पश्चात् प्रोक्तयोगसमन्वितः ।
तत्र स्थित्वा जपेद् विद्यां लक्षमात्रं सदा शुचिः ॥ ४१ ॥
दधि क्षीरं घृतं गव्यमैक्षवं गुडवर्जितम् ।
तिलाश्चैव सिता मुद्गाः कन्दकोरकवर्जिताः ॥ ४२ ॥
नारिकेलफलं चैव कदलीं लवणीं तथा ।
आम्रमामलकं[2] चैव पनसं च हरीतकीम् ॥ ४३ ॥
व्रतान्तरप्रशस्तं च हविष्यं मन्यते बुधैः ।
अवैष्णवमसभ्यं च यदशस्तं व्रतान्तरे ॥ ४४ ॥
त्याज्यमेव तु तत् सर्वं यदीच्छेत् सिद्धिमात्मनः ।
क्षीरं च लवणं मांसं गृञ्जनं कांश्यभोजनम् ॥ ४५ ॥

---

१. स्थिरम्-ख० ।
२. आम्रमामलं-क० ।

माषाढकीमसूरांश्च कोद्रवांश्चणकानपि ।
ताम्बूलं च द्विभक्तं च दुःसम्भारं प्रमत्तताम् ॥ ४६ ॥
श्रुतिस्मृतिविरुद्धं च जपं रात्रौ विवर्जयेत् ।
भृशमाब्रह्मश्रावित्वं मौनं चाप्यनसूयता ॥ ४७ ॥
नित्यं त्रिसवनस्नानं देवतास्तुतिकीर्तनम्[1] ।
नैमित्तिकार्चनं चैव विश्वासो गुरुदेवयोः ॥ ४८ ॥
जपनिष्ठा द्वादशैते धर्माः स्युर्मन्त्रसिद्धिदाः ।
स्त्रीशूद्रपतितव्रात्यपतितोच्छिष्टभाषणम् ॥ ४९ ॥
असत्यभाषणं जिह्मभाषणं परिवर्जयेत् ।
सत्यैरपि न भाषेत जपहोमार्चनादिषु ॥ ५० ॥
अन्यथाऽनुष्ठितं सर्वं भवत्येव निरर्थकम् ।
वाङ्मनःकर्मभिर्नित्यं निःस्पृहावान् भवेत् सदा ॥ ५१ ॥
वर्जयेद् गीतनृत्यादि श्रवणं नृत्यदर्शनम् ।
माल्यं च गन्धलेपं च पुष्पधारणमेव च ॥ ५२ ॥
मैथुनं तत्कथालापं तद्गोष्ठीं परिवर्जयेत् ।
कौटिल्यं क्षौरमभ्यङ्गमनिवेदितभोजनम् ॥ ५३ ॥
प्राणिहिंसां न कुर्वीत पुरश्चरणकृन्नरः ।
अस्नातांश्च द्विजान् शूद्रान् स्त्रियो नैव स्पृशेत् तथा ॥ ५४ ॥
असङ्कल्पितकृत्यं च वर्जयेन्मर्दनादिकम् ।
त्यजेदुष्णोदकस्नानं सगन्धामलकादिकम् ॥ ५५ ॥
शिवाऽङ्गं पञ्चगव्येन क्षालयेद् बहिरन्तरम् ।
स्नायाच्च पञ्चगव्येन केवलामलकेन वा ॥ ५६ ॥
अपत्रकरलग्नो वा शिरसि प्राकृतोऽपि वा ।
निरासनः शयानो वा गच्छन्नुत्थित एव वा ॥ ५७ ॥

---

१. कीर्तनम्—क० ।

रथ्यायामासवस्थाने न जपेत् तिमिरालये ।
प्रलपन् वा जपेद् यावत् तावन्निष्फलमुच्यते ॥ ५८ ॥
सकृदुच्चरिते शब्दे प्रणवं समुदीरयेत् ।
प्रोक्ते पामरशब्दे तु प्राणायामं सकृच्चरेत् ॥ ५९ ॥
बहुप्रलापे चाऽऽचम्य न्यस्याऽङ्गानि[1] ततो जपेत् ।
पतितानामन्त्यजानां दर्शने भाषणे श्रुते ॥ ६० ॥
क्षुतेऽधोवायुगमने जृम्भणे जपमुत्सृजेत् ।
कृत्वाऽऽचम्य जपेच्छेषं यद्वा सूर्यादिदर्शनम् ॥ ६१ ॥
शयीत कुशशय्यायां शुचिवस्त्रधरः सदा ।
प्रत्यहं क्षालयेच्छय्यामेकाकी निर्भयः स्वपेत् ॥ ६२ ॥
एवमादींश्च नियमान् पुरश्चरणकृच्चरेत् ।
एवमुक्तविधानेन विलम्बत्वरितं विना ॥ ६३ ॥
उक्तसंख्याजपं कुर्यात् पुरश्चरणसिद्धये ।
देवतागुरुमन्त्राणामैक्यं सम्भावयन् धिया ॥ ६४ ॥
जपेदेकमनाः प्रातःकालान्मध्यन्दिनावधि ।
यत् संख्या मासमारब्धं[2] तच्च कुर्याद् दिने दिने ॥ ६५ ॥
यदि न्यूनाधिकं कुर्याद् व्रतभ्रष्टो भवेन्नरः ।
नैरन्तरविधिः प्रोक्तो न दिनं व्यतिलङ्घयेत् ॥ ६६ ॥
दिवसातिक्रमात् तेषां सिद्धिहानिः प्रजायते ।
मन्त्रं जप्त्वाऽम्बुपानीयैः सुलोचनमभोजनम् ॥ ६७ ॥
कुर्याद् यथोक्तविधिना त्रिसन्ध्यं देवमर्चयेत् ।
एकसन्ध्यं द्विसन्ध्यं वा न मन्त्रं केवलं जपेत् ॥ ६८ ॥

---

१. न्यस्यङ्गनि–ख० ।
२. आरब्धः–ख० ।

एकग्रामे स्थितो गत्वा वन्देत केवलं गुरुम् ।
प्रणामोऽष्टाङ्ग एवात्र देवतावन्दनं तथा ॥ ६९ ॥

नित्यं नैमित्तिकं कुर्यात् सङ्गं च साधुभिः सह ।
शक्तौ त्रिसवनस्नानं द्वे सकृद् वा तथाऽऽचरेत् ॥ ७० ॥

परकीयतरे तोये स्नानं पूर्वं समाचरेत् ।
संख्यापूर्त्तौ निजैर्द्रव्यैर्जपसंख्या दशांशतः ॥ ७१ ॥

यथोक्तविहिते कुण्डे जुहुयात् संस्कृतेऽनले ।
अथवा प्रत्यहं जप्त्वा जुहुयात् तद्दशांशतः ॥ ७२ ॥

तथा होमदशांशं तु जले सम्पूज्य देवताम् ।
तर्पयामीति मन्त्रान्ते प्रोक्ताद्भिर्मूर्ध्नि तर्पयेत् ॥ ७३ ॥

जपो होमं तर्पणं च पूजा ब्राह्मणभोजनम् ।
पूर्वपूर्वदशांशेन कुर्यात् पञ्चाङ्गसंयुतम् ॥ ७४ ॥

स्वाभिषेकाद्यमर्षो च सूर्यार्घ्यं जलपानकम् ।
प्राणायामं ततः कुर्यात् पूर्वपूर्वदशांशतः ॥ ७५ ॥

दशाङ्गोपासनं भक्त्या पुरश्चरणमुच्यते ।
तत् पुरश्चरणं नाम मन्त्रसिध्यर्थमात्मनः ॥ ७६ ॥

यथोक्तं नियमं कृत्वा स्वकल्पोक्तजपस्य हि ।
करणं विजयान्तं तत् प्रोक्तं देशिकसत्तमैः ॥ ७७ ॥

तदन्ते महतीं पूजां कुर्याद् ब्राह्मणभोजनम् ।
गुरुं सन्तोषयेदेवं मन्त्राः सिध्यन्ति मन्त्रिणः ॥ ७८ ॥

होमकर्मण्यशक्तानां विप्राणां द्विगुणो जपः ।
इतरेषां तु वर्णानां त्रिगुणादिः समीरितः ॥ ७९ ॥

एकमङ्गं विहीयेत ततो नेष्टमवाप्नुयात् ।
अङ्गहीनं भवेद् यद् यत् तत्तन्नष्टार्थसाधकम् ॥ ८० ॥

सर्वथा भोजयेद् विप्रान् कृतसाङ्गत्वसिद्धये ।
विप्राराधनमात्रेण व्यङ्गं साङ्गं भवेद् यतः ॥ ८१ ॥

न्यूनातिरिक्तकर्माणि न फलन्ति मनोरथान् ।
तान्येवं पूर्णतां यान्ति समस्तानि भवन्ति चेत् ॥ ८२ ॥

अतो यत्नेन विदुषो भोजयेत् सर्वकर्मसु ।
नियतान्यपि कर्माणि हीनानि द्विजभोजनैः ॥ ८३ ॥

निरर्थकानि तानि स्युर्बीजान्युषरगानिव ।
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ॥ ८४ ॥

ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्वमुपोषितः ।
नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः ॥ ८५ ॥

ग्रहणादिविमोक्षान्तं जपेन्मन्त्रं समाहितः ।
अनन्तरं दशांशेन क्रमाद्धोमादिकं चरेत् ॥ ८६ ॥

ततस्तु मन्त्रसिध्यर्थं गुरुं सम्पूज्य तोषयेत् ।
ततश्च मन्त्रसिद्धिः स्याद् देवता च प्रसीदति ॥ ८७ ॥

अथवा देवतारूपं गुरुं भक्त्या प्रतोषयेत् ।
पुरश्चरणहीनोऽपि मन्त्रसिद्धेरसंशयः ॥ ८८ ॥

॥ इति श्रीगन्धर्वतन्त्रे अष्टाविंशतितमः पटलः ॥ २८ ॥



# अथ ऊनत्रिंशः पटलः

ईश्वर उवाच

पूर्वोक्तविधिना देवि ! लक्षार्द्धं पूजयेत् तथा ।
रात्रौ ताम्बूलपूरास्यस्तथैवोक्तविधानतः ॥ १ ॥

कामरूपं वपुः कृत्वा कामिन्येव महानिशि ।
कुलयुक्तो जपेल्लक्षं निशाया मध्यभागतः ॥ २ ॥

अत्र यत् क्रियते कर्म तदनन्तफलप्रदम् ।
मूलाधारे महादेवि ! लिङ्गं [1]स्वयम्भुवाचकम् ॥ ३ ॥

ज्योतीरूपं तु योनिस्थं तत्रैव मनसा जपेत् ।
ध्यायेत् कुण्डलिनीं देवि ! तद्विद्याक्षररूपिणीम् ॥ ४ ॥

हृदि त्रिकोणमध्ये च बाणलिङ्गे च तेजसि ।
तत्र सञ्चिन्त्य मनसा जपेल्लक्षं समाहितः ॥ ५ ॥

मूर्ध्नि त्रिकोणमध्ये तु इतरं पश्चिमामुखम् ।
तत्र स्थित्वा जपेल्लक्षं यत्र कुत्र समाहितः ॥ ६ ॥

एवं लक्षत्रये सिद्धे यद्भावस्तूपजायते ।
तमुपाश्रित्य भावेन यथा देवस्तथा रविः ॥ ७ ॥

नवलक्षं जपेद् विद्यामिह भोगसमृद्धये ।
न ध्यानं न च विन्यासो न पूजा न पुरस्क्रिया[2] ॥ ८ ॥

केवलं जपमात्रेण सिद्धयः सिद्धिकाङ्क्षिणाम् ।
कोटिजापे तु सम्पूर्णे मनो मन्त्रात्मकं भवेत् ॥ ९ ॥

---

१. स्वयम्भू-ख० ।
२. पुरश्क्रियाम्-क० ।

यावत् तावद्धि जप्तव्यं मनसैव न चान्यथा ।
मन्त्रमात्रस्वरूपे च सिद्धे मनसि पार्वति ! ॥ १० ॥

ध्यानमात्रं मनः कृत्वा ध्यानं ब्रह्मणि चार्चयेत् ।
विदिते ब्रह्मणः क्षेत्रे विदितः सर्ववित् प्रभुः ॥ ११ ॥

नव स्थानानि कथ्यन्ते शृणु सावहिता प्रिये ! ।
ज्योतीरूपं तदाधारे मेढ्रस्थाने शिखाप्रभम् ॥ १२ ॥

नाभिस्थं सूर्यबिम्बाभं तरुणादित्यवर्चसम् ।
हृदि ज्योतिःशिखाकारं कण्ठे दीपशिखाप्रभम् ॥ १३ ॥

भ्रूमध्ये रत्नसङ्काशं तदूर्ध्वे भास्करप्रभम् ।
लम्बिके चन्द्रबिम्बाभं ततो वैदूर्यसन्निभम् ॥ १४ ॥

नवमे विश्वतेजा हि घण्टावैदूर्यसन्निभः ।
लिङ्गरूपी ह्यहं देवि ! नव लिङ्गानि यानि च ॥ १५ ॥

नव स्थानानि मन्त्रेण क्रमात् संभिद्य कुण्डलीम् ।
विसंज्ञाममृतं पीत्वा पुनराधारमानयेत् ॥ १६ ॥

मूलस्थानगतं मन्त्रं स्मरेदेवं क्रमेण तु ।
नवलक्षप्रमाणं तु जप्त्वा त्रिपुरसुन्दरीम् ॥ १७ ॥

विधिवज्जायते देवि ! रुद्रमूर्त्तिरिवापरः ।
मन्त्राणां नव लक्षाणि कृत्वा लिङ्गानि वै नव ॥ १८ ॥

नवैव परिजप्याथ नवलक्षफलं लभेत् ।
जातसूतकमादौ स्याद् वृत्ते च मृतसूतकम् ॥ १९ ॥

सूतकद्वयसंयुक्तो यो मन्त्रः स न सिध्यति ।
स्वयं तद्रहितं कृत्वा मन्त्रं यावज्जपेद् धिया ॥ २० ॥

सूतकद्वयनिर्मुक्तः स मन्त्रः सर्वसिद्धिदः ।
सत्कुलस्थानजातीनां शुचीनां श्रीमतां सताम् ॥ २१ ॥

नियतमग्निहोतॄणां भिक्षाशिनोऽग्रजन्मनाम् ।
येषां मध्ये तु यः कश्चिद् गुरुर्वा शिष्य एव वा ॥ २२ ॥

मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति च ।
कथितं सूतकं तस्य जपात् सिद्धिर्न जायते ॥ २३ ॥

जप्तबीजाश्च ये मन्त्रा न दास्यन्ति फलं प्रिये ! ।
मन्त्राश्चैतन्यसंयुक्ताः सर्वसिद्धिकराः स्मृताः ॥ २४ ॥

चैतन्यरहिता मन्त्राः प्रोक्ता वर्णास्तु केवलम् ।
फलं नैव प्रयच्छन्ति लक्षकोटिजपादपि ॥ २५ ॥

मन्त्रोच्चारे कृते यादृक् स्वरूपं प्रथमं भवेत् ।
शते सहस्रे लक्षे वा कोटिजापेन तत् फलम् ॥ २६ ॥

हृदये ग्रन्थिभेदश्च सर्वावयववर्द्धनः ।
मन्त्रार्थः कथ्यते देवि ! शृणु तत् प्रथमं प्रिये ! ॥ २७ ॥

भावार्थः सम्प्रदायार्थो निगर्भाख्यश्च कौलिकः ।
तथा सर्वरहस्यार्थो महातत्त्वार्थ एव च ॥ २८ ॥

अक्षरार्थो हि भावार्थः केवलं परमेश्वरि ! ।
शिवशक्तिसमायोगाज्जनितो मन्त्रराजकः ॥ २९ ॥

तन्मयीं परमानन्दनन्दितां मन्त्ररूपिणीम् ।
निःसंज्ञसुन्दरीं देवीं ज्ञात्वा स्वैरमुपासते ॥ ३० ॥

शिवशक्त्याऽऽत्मसंघट्टरूपिणी ब्रह्मरूपिणी ।
तत्प्रभाप्रसवाश्लेषतृषितो वोपलक्ष्यते ॥ ३१ ॥

ज्ञातृज्ञानमयाकारकरणान्मन्त्ररूपिणी ।
मध्यबिन्दुविसंज्ञां तु समस्थानमये परे ॥ ३२ ॥

कुटिलारूपके तस्याः प्रतिरूपं वियत्कले ।
मध्यप्राणप्रथारूपस्पन्दव्योम्नि स्थिता पुनः ॥ ३३ ॥

मध्यमे मन्त्रपिण्डे तु तृतीये पिण्डके पुनः ।
(राहू)कूटद्वयस्फूर्जच्चरूद्धासस्थितस्य तु ॥ ३४ ॥
धर्माधर्मस्य वाच्यस्य वीरामृतमयस्य च ।
वाचकाक्षरसंयुक्ते प्रथितां विश्वरूपिणीम् ॥ ३५ ॥
तेषां समस्तरूपेण परा शक्तिस्तु मातृका ।
कूटत्रयात्मिकां देवीं समष्टिव्यष्टिरूपिणीम् ॥ ३६ ॥
कूटत्रये तु ह्रीङ्कारं देव्या नेत्रत्रयं शुभम् ।
हकारोऽग्निरूढत्वात् संहरेद् भेदसन्ततिम् ॥ ३७ ॥
रेफः कालाग्निरूढत्वात् पापौघक्षयकारकः ।
तयोर्विमर्ष ईकारो बिन्दुना त्रिगुणात्मना ॥ ३८ ॥
अमृतत्वं करोतीन्दुः कामः कामानशेषतः ।
सम्प्रदायो महाबोधरूपो गुरुमुखे स्थितः ॥ ३९ ॥
विश्वाकारप्रथायास्तु महत्त्वं च मदाश्रयम् ।
शिवशक्त्यात्मया मूलविद्यया परमेश्वरि ! ॥ ४० ॥
जगत् कृत्स्नं तया व्याप्तं शृणुष्वाऽवहिता प्रिये ! ।
पञ्चभूतमयं विश्वं तन्मयी सा सनातनी ॥ ४१ ॥
तन्मयी मूलविद्या च तथापि कथयामि ते ।
हकाराद् व्योम सम्भूतं ककारात्तु प्रभञ्जनः ॥ ४२ ॥
रेफादग्निः सकाराच्च जलतत्त्वस्य सम्भवः ।
लकारात् पृथिवी जाता तस्माद् विश्वमयी च सा ॥ ४३ ॥
गुणाः पञ्चदश प्रोक्ता भूतानां तन्मयी शुभा ।
यस्य यस्य पदार्थस्य या या शक्तिरुदीरिता ॥ ४४ ॥
सैव सर्वेश्वरी देवी स च सर्वो महेश्वरः ।
व्याप्ता पञ्चदशार्णैः[1] सा विद्या भूतगुणात्मिका ॥ ४५ ॥

---

१. सप्तदशार्णैः—क० ।

पञ्चभिश्च तथा षड्भिश्चतुर्भिरपि चाक्षरैः ।
स्वरव्यञ्जनभेदेन सप्तत्रिंशत्प्रभेदिनी ॥ ४६ ॥

सप्तत्रिंशत्प्रभेदेन षट्त्रिंशत्तत्त्वरूपिणी ।
तत्त्वातीतस्वभावा च विद्येयं भाव्यते सदा ॥ ४७ ॥

पृथिव्यादिषु भूतेषु व्यापकं चोत्तरोत्तरम् ।
भूतलं सस्तलं ? व्याप्तं तद्गुणा व्यापकाश्रयाः ॥ ४८ ॥

व्याप्येष्ववस्थिता[1] देवि ! स्थूलसूक्ष्मविभेदतः ।
तस्माद् व्योमगुणः शब्दो वाट्वादीन् व्याप्य संस्थितः॥४९॥

व्योमबीजं तु विद्याद्यैर्लक्षयेत् तु च पञ्चकम् ।
तेषां कारणरूपेण स्थितं व्योममयं परम् ॥ ५० ॥

भवेज्जलवतां बीजं गुणानामपि वाचकम् ।
कार्यकारणभावेन तयोरैक्यविवक्षया ॥ ५१ ॥

महामायात्रयेणापि कारणेन च बिन्दुना ।
वाय्वग्निजलभूमीनां स्पर्शादीनां चतुष्टयम् ॥ ५२ ॥

उत्पन्नं भावयेद् देवि ! स्थूलसूक्ष्मविभेदतः ।
रूपाणां त्रितयं तत्त्वं त्रिभी रेफैर्विभावितम् ॥ ५३ ॥

प्रधानं तेजसो रूपं तद्बीजेन हि जन्यते ।
विद्यास्थैश्चन्द्रबीजैस्तु स्थूलसूक्ष्मरसः स्मृतः ॥ ५४ ॥

सम्बन्धो विदितो लोके रसस्याऽप्यमृतस्य च ।
वसुन्धरागुणो गन्धस्तद् विद्धि गन्धवाचिका ॥ ५५ ॥

भुवनत्रयसम्बुध्या त्रिधा तत्त्वं महेश्वरि ।
अशुद्धस्तत्त्वमिश्राणां प्रमातॄणां परं पुनः ॥ ५६ ॥

---

१. व्याप्ये वलास्थिता–ख० ।

क्रोधीशत्रितयेनाऽथ विद्यास्थेन प्रकाश्यते ।
श्रीकण्ठदशकं तत्त्वंदशकं व्यक्तिवाचकम् ॥ ५७ ॥
प्राणरूपस्थितो देवि ! तत्त्वमेकादशः पुनः ।
एकः स एव पुरुषो बहुधा जायते हि सः ॥ ५८ ॥
रुद्रेश्वरसदेशाख्या देवता मितिविग्रहाः ।
बिन्दुक्रमेण कथिता अमितामितविग्रहाः ॥ ५९ ॥
शान्तिः शक्तिश्च शम्भुश्च नादत्रितयबोधनः ।
वाग्भवो मूलवलये सूत्राद्याः कवलीकृताः ॥ ६० ॥
तथा मन्त्राः समस्ताश्च विद्यायां यत्र संस्थिताः ।
गुरुक्रमेण सम्प्राप्तः सम्प्रदायार्थ ईरितः ॥ ६१ ॥
निगर्भोऽपि च देवेशि ! शिवगुर्वात्मगौरवः ।
तत्प्रकारं च देवेशि ! दिङ्मात्रेण वदामि ते ॥ ६२ ॥
निष्कलत्वं शिवे बुध्यात् तत्तपस्यं गुरोरपि ।
तन्निरीक्षणसामर्थ्यादात्मनश्च शिवात्मताम् ॥ ६३ ॥
भावयेद् भक्तिनम्रस्तु शङ्कोन्मेषाकलङ्कितः ।
कौलिकं कथयिष्यामि चक्रमेव तयोरपि ॥ ६४ ॥
विद्यागुर्वात्मनामैक्यं तत्प्रकारः प्रदृश्यते ।
तथा मन्त्रात्मकं चक्रं देवतायाः परं वपुः ॥ ६५ ॥
एकादशाधिकशतं देवतात्मतया स्थितम् ।
नकारैश्चतुरस्राणि वृत्तत्रितयसंयुतम् ॥ ६६ ॥
सरोरुहद्वयं शक्तोरग्नीसोमात्मके प्रिये ! ।
ह्रील्लेखात्रयसंभूत्यैरक्षरैर्नवसंख्यकैः ॥ ६७ ॥
बिन्दुत्रययुतैर्जातं नवयोन्यात्मकं प्रिये ! ।
मण्डलत्रयसंयुक्तं चक्रं शक्त्यनलात्मकम् ॥ ६८ ॥

१. तत्र—ख० ।

व्योमबीजत्रयेणापि मातृकात्रितयात्मकम् ।
इच्छादिना क्रियारूपं मादनत्रयसंयुतम् ॥ ६९ ॥

सर्ववर्णात्मकं बिन्दुचक्रं सद्यः शिवात्मकम् ।
गणेशत्वं महादेव्याः ससोमरविपावकैः ॥ ७० ॥

इच्छाज्ञानक्रियाभिश्च गुणत्रययुतैः पुनः ।
ग्रहरूपा परा देवी ज्ञानकर्मेन्द्रियैरपि ॥ ७१ ॥

तदुत्थैरेव देवेशि ! करणैरान्तरैः पुनः ।
प्रकृत्या च गुणेनापि पुंस्त्वबन्धेन चात्मना ॥ ७२ ॥

नक्षत्रविग्रहा जाता योगिनीनामथोच्यते ।
त्वगादिधातुनाथाभिर्डाकिन्यादिभिरप्यसौ ॥ ७३ ॥

वर्गाष्टकनिविष्टाभिर्योगिनीभिस्तु संयुता ।
योगिनीरूपमास्थाय क्रीडते विश्वरूपिणी ॥ ७४ ॥

प्राणोऽपानः समानश्च व्यानोदानौ तथा पुनः ।
नागः कूर्मोऽथ [1]कृकरो देवदत्तो धनञ्जयः ॥ ७५ ॥

जीवात्मा परमात्मा च ! तैरेव बलिरूपिणी ।
अकथाहादिपङ्क्त्यादितार्त्तीयादित्रयेण सा ॥ ७६ ॥

जननाभून्महाविद्या परावागादि[2] वाङ्मयी ।
बीजबिन्दुध्वनीनां च त्रिकूटेषु ग्रहात्मिका ॥ ७७ ॥

ह्रील्लेखात्रयसंभूतैस्तिथिसंख्यैरथाक्षरैः ।
अन्यैर्द्वादशभिर्व्यक्तैरेषा नक्षत्ररूपिणी ॥ ७८ ॥

विद्यां तु भूतशक्त्याद्यैः शाक्तैः षड्भिरथाऽक्षरैः ।
योगिनीवर्णविद्याया राशित्वं चान्त्यवर्जितैः ॥ ७९ ॥

---

१. क्रिकरो-ख० ।
२. रागादि-ख० ।

एवं विश्वप्रथाकारचक्ररूपा महेश्वरि ! ।
देवीदेहो यथा देवि ! गुरुदेहस्तथैव च ॥ ८० ॥
तत्प्रसादाच्च शिष्योऽपि तद्रूपः स प्रकाशते ।
सहस्रदलमध्ये तु त्रिकोणं परिचिन्तयेत् ॥ ८१ ॥
तत्रैव मादनं बीजं बिन्दुमाश्रित्य दीपयेत् ।
कोटिचन्द्रप्रतीकाशं चिदानन्दमयं परम् ॥ ८२ ॥
अनुत्तरपदं गुह्यं ललाटोर्ध्वे व्यवस्थितम् ।
भगमाधारसंस्थानं त्रिकोणपुरमाश्रितम् ॥ ८३ ॥
मृणालतन्तुरूपं हि विश्वोत्पत्तेश्च कारणम् ।
इच्छाज्ञानक्रियारूपा चतुर्थी हृदये स्थिता ॥ ८४ ॥
शक्रं ललाटमध्ये तु दीपाभं परिचिन्तयेत् ।
विद्युत्कोटिप्रतीकाशं पञ्चमं नेत्रनासिके ॥ ८५ ॥
शिवो नादाख्यसंयुक्तस्त्रिषु शून्येषु संस्थितः ।
सूर्यकोटिप्रतीकाशो महापद्मोपरि स्थितः ॥ ८६ ॥
सकारं मुखमध्ये तु बालार्कसदृशं परम् ।
मादनं जठरे देवि ! वराभं परिचिन्तयेत् ॥ ८७ ॥
हकारं प्राणवायौ च हंसभिः १ परिचिन्तयेत् ।
कला षोडशपत्रे च इन्द्रमोङ्काररूपकम् ॥ ८८ ॥
ह्रीङ्कारं हृदये पद्मे कोटिसूर्यसमप्रभम् ।
बिन्दुद्वये कुचे युग्मे यवाभे चार्द्धचक्रकम् ॥ ८९ ॥
नादबिन्दुस्तदग्रे च शिवशक्तिसमन्विते ।
कामराजे महेशानि ! आकर्षणकरं परम् ॥ ९० ॥
नाभिपद्मे त्रिकोणे च दाडिमाभं सकारकम् ।
पादद्वये महेशानि ! [1]मादनं दीपसन्निभम् ॥ ९१ ॥

---

१. मादनः–ख० ।

पृष्ठोपरि स्थितं देवि ! इन्द्रतेजःस्वरूपिणम् ।
चतुर्थं योनिमध्ये तु दीपाभं परिचिन्तयेत् ॥ ९२ ॥

शिवेन लिङ्गरूपेण तद् बिन्दुयुगलेन च ।
विद्याबीजत्रयं देवि ! योनित्वे परिचिन्तयेत् ॥ ९३ ॥

लिङ्गं योनिं च सत्त्वं च चतुर्थं कथितं मया ।
अथ सर्वरहस्यार्थं कथयामि तवाऽनघे ! ॥ ९४ ॥

मूलाधारे ज्वलद्रूपे वाग्भवाकारतद्धिते ।
अष्टात्रिंशत्कलायुक्ता पञ्चाशद्वर्णविग्रहा ॥ ९५ ॥

विद्या कुण्डलिनीरूपा मण्डलत्रयभेदिनी ।
तडित्कोटिप्रभाप्रख्या विषतन्तुनिभाकृतिः ॥ ९६ ॥

व्योमेन्दुमण्डलासक्ता स्वधास्रोतःस्वरूपिणी ।
एषा स्वात्मेति बुद्धिस्तु रहस्यार्थो महेश्वरि ! ॥ ९७ ॥

महातत्त्वार्थ इति यत् तच्च देवि ! ब्रवीमि ते ।
निष्कले परमे सूक्ष्मे निर्लिप्ते भाववर्जिते ॥ ९८ ॥

व्योमातीते परे तत्त्वे प्रकाशानन्दविग्रहे ।
विश्वोत्तीर्णे विश्वमये तत्त्वे आत्मनि योजयेत् ॥ ९९ ॥

तदा प्रकाशमानत्वाच्चेतसां मनसामपि ।
अविनाभावरूपत्वं तस्माद् विश्वस्य सर्वतः ॥१००॥

प्रकाशते महातत्त्वं दिव्यक्रीडारसोद्धले ।
निरस्तसर्वसङ्कल्पविकल्पस्थितिपूर्वकः ।
रहस्यार्थो मया प्रोक्तः सद्यः प्रत्ययकारकः ॥१०१॥

इति गन्धर्वतन्त्रे ऊनत्रिंशत्तमः पटलः ॥ २९ ॥



# अथ त्रिंशः पटलः

अकथ्यमपि देवेशि! तव स्नेहाद् वदाम्यहम्।
त्रिकूटान्ते हंसबीजं बिन्दुनादविभूषितम्॥ १ ॥
विपरीतेन वा देवि! दुर्लभं पापचेतसाम्।
हकारः प्राणरूपस्तु सकारो जीव उच्यते॥ २ ॥
उभौ जीवेतिविख्यातौ त्रैलोक्ये सचराचरे।
हकारं शुक्लवर्णाख्यं चन्द्रकोटिसमप्रभम्॥ ३ ॥
सकारं रक्तवर्णाख्यं कोटिसूर्यसमप्रभम्।
भावनं त्वस्य मन्त्रस्य जपमात्रं न विद्यते॥ ४ ॥
अजपा तेन विख्याता शिवशक्तिसमन्विता।
न्यासमन्त्रस्य विद्याया हकारः प्राण उच्यते॥ ५ ॥
सकारं जीवमाख्यातं जीवं कामेन मण्डितम्।
मादनं प्राणरूपं तु विमर्षः शिव उच्यते॥ ६ ॥
सकारस्तु परो ज्ञेयः सङ्कोचः शक्तिरूपवान्।
सङ्कोचः परमा शक्तिर्विमर्षः परमः शिवः॥ ७ ॥
सङ्कोचश्च विकाशश्च हस इत्यक्षरद्वयम्।
तयोराशयरूपेण कवर्णो बिल्वमालिनी॥ ८ ॥
प्राणो बिन्दुरिति प्रोक्तः साहचर्याद् वरानने!।
स पूर्वमुदितं मन्त्रं शम्भुशक्त्यैकवाचकम्॥ ९ ॥
जीवशक्त्यैक्यसिद्ध्यर्थं गदितं सुरपूजिते।
अस्मिन् मन्त्रे वरारोहे! कालकर्मान्तवर्त्मना॥ १० ॥
वर्तते यस्तु युक्तात्मा असाध्यमपि साधयेत्।
त्वं च जीवैक्यसिध्यर्थमुदितं मन्त्रनायकम्॥ ११ ॥

तथ्यं मद्वाक्यतो देवि ! फलाफलस्पृहां त्यज ।
अस्मिन् मन्त्रे महाभागे समे जप्तं वदाम्यहम् ॥ १२ ॥

सर्वे मन्त्राः प्रसिध्यन्ति जीवन्ति च पुनन्ति च ।
प्राणन्ति च महाभागे सत्यं सत्यं वदाम्यहम् ॥ १३ ॥

सोऽहं भावेन भावेन भावनं भावनं मतम् ।
सोऽहं भावेन भावं तु उक्तलक्ष्म[1] च लक्ष्यते ॥ १४ ॥

कृत्वाऽहंभावमुत्सृज्य सोऽहंभावे स्थिरीभवेत् ।
शम्भुभावे स्थिरीभूते बिन्दुं शम्भौ विभावयेत् ॥ १५ ॥

सच्चित्सुखमयः शम्भुस्त्रिरूपः सर्वकर्मणि ।
सर्वदा भाषते यस्मात् तन्मयं त्वखिलं ततः ॥ १६ ॥

सत्सन्निधिः समङ्गेषु शम्भुश्चैव प्रकाशते ।
कामः कामयतो भेदमिति तद्रूपतामतिः[2] ॥ १७ ॥

अत्र चित्सत्त्वयोर्व्याप्तिर्यत्रानन्दोऽभिजायते ।
यत्राऽऽनन्दो भवेद् भावे तत्र चित्सत्त्वयोः स्थितिः॥ १८ ॥

या चित् सत्तैव सा प्रोक्ता असत्ता सा चिदुच्यते ।
एवं चित्सत्तयोरैक्ये स्थिरीभूते वरानने ! ॥ १९ ॥

आनन्देन [3]समावेशोऽचिरादेव जायते ।
तदानन्दमयं विश्वं स्वात्माभेदं प्रकाशते ॥ २० ॥

एवं शम्भुमये भावे सर्वतः प्रभवे शिवे ।
सर्वशक्त्युपभोगे तु जीवन्मुक्तो महीं वसेत् ॥ २१ ॥

---

१. लक्षण–क० ।
२. मितिः–ख० ।
३. समावेशः सुचिरादेव–क० ।

भावाद्या वस्तुभूताया हसौ(इत्यक्षरद्वयम्) ।
प्राणाः स्वराः समाख्याता बिन्दुसङ्गौ च चेतना ॥ २२ ॥
अन्योन्यावयवानि स्युरन्यानि परमेश्वरि ! ।
तेन तद्युक्तितो मन्त्राः प्रसीदन्ति न चान्यथा ॥ २३ ॥
बिल्वसर्गे हसौ तुर्यस्वरश्चेति च पञ्चमम् ।
भवत्या मातृकादेहे विद्धि चैतन्यजृम्भणम् ॥ २४ ॥
तेन तैर्हीनरूपास्तु मन्त्रविद्यास्तथा परे ।
निष्प्राणदेहवत् कार्यकरणेष्वक्षमः स्मृतः ॥ २५ ॥
रमा माया हंसबीजं वाग्भवत्वे नियोजयेत् ।
शक्त्यन्ते परमेशानि ! सोऽहं मायां रमां तथा ॥ २६ ॥
कामराजाह्वये देवि ! क्रोधीशं शक्रसंयुतम् ।
मायाबिन्दुसमायुक्तं कोटिसूर्यसमप्रभम् ॥ २७ ॥
स्फुरत्त्रिकोणमध्यस्थं किरणानेकसंवृतम् ।
एतत् प्राणं महाभागे ! गुप्तं ग्रन्थे प्रकाशितम् ॥ २८ ॥
बोधिन्या बोधयेद् विद्यां सन्दीपन्या च दीपयेत् ।
तारमायारमायोगो मनोर्दीपनमुच्यते ॥ २९ ॥
जीवन्या जीवयेद् विद्याममृतैरमृतं चरेत् ।
पृथग्विधं तु तस्यापि साधनं शृणु पार्वति ! ॥ ३० ॥
वाग्भवबीजरूपां तु दीपाभां तन्तुरूपिणीम् ।
गच्छन्तीं ब्रह्ममार्गेण लिङ्गभेदक्रमेण तु ॥ ३१ ॥
विशदस्थामृतं दिव्यं क्षीरधारोपमद्रवम् ।
पीत्वा कुलामृतं देवि ! पुनरेव विशेत् कुलम् ॥ ३२ ॥
पुनरेवाकुलं गच्छेद् द्वादशान्ते वरानने ! ।
सहस्रारे महापद्मे वाग्भवं पूर्णचन्द्रकम् ॥ ३३ ॥

ब्रह्मग्रन्थिं ततो भित्वा सप्तषष्ट्याख्यधारया ।
नासिकारन्ध्रमार्गेण त्वात्ममूले प्रवेशयेत् ॥ ३४ ॥
जिह्वामापूर्य भो देवि ! मातृकावर्णरूपिणीम् ।
बहिर्गतां तु वाग्रूपां जिह्वाग्रे दीपरूपिणीम् ॥ ३५ ॥
आमूलाद् ब्रह्मरन्ध्रान्तं तस्माज्जिह्वावधि प्रिये ! ।
वाग्भवबीजरूपां तां दीपशिखां विभावयेत् ॥ ३६ ॥
लक्षमेकमिदं जप्त्वा सर्वपापहरो भवेत् ।
अव्याहतमतिः शास्त्रे विजयी वाक्पतेरपि ॥ ३७ ॥
वादे सदसि वाक्यस्य स्तम्भकः प्रतिवादिनः ।
सत्पण्डितघटाटोपजेताप्रतिहतः[1] प्रभुः ॥ ३८ ॥
पदगुल्फमहाकाव्यकर्त्ता स त्रायते शिवः ।
इति ते कथितं देवि ! वाग्भवस्यापि साधनम् ॥ ३९ ॥
अथ कामकलाबीजस्वरूपां चिन्तयेत् पराम् ।
उदितादित्यसङ्काशां स्फुरद्दीपशिखाप्रभाम् ॥ ४० ॥
गच्छन्तीं ब्रह्ममार्गेण ब्रह्मरन्ध्रावधि प्रिये ! ।
पतद्भिर्बिन्दुधाराभिः शुक्ललाक्षारसोपमैः ॥ ४१ ॥
समस्तभुवनाभोगकवलीकृतजीवनाम् ।
महात्ममहिमाक्रान्तध्वस्ताहङ्कृतिभूमिकाम् ॥ ४२ ॥
चिन्तयित्वा महेशानि ! वशयेज्जगतीमिमाम् ।
चिन्तयेद् योषितां योनौ चलज्ज्वालेन्दुसन्निभाम् ॥ ४३ ॥
तद्दृष्टिवशगा नारी दैवी वाऽप्यथवाऽऽसुरी ।
अथ वक्ष्ये महेशानि ! शक्तिकूटस्य साधनम् ॥ ४४ ॥

---

१. जातप्रतिहतप्रभुः–क० ।

आधाराद् ब्रह्मरन्ध्रान्तं विद्युदग्निसमप्रभम् ।
स्रवत्सुधामयं[1] देवि ! शक्तिकूटं विचिन्तयेत् ॥ ४५ ॥
देहिनाममृतानन्दवर्षधारारसोपमम् ।
सर्पाणां दर्शनादेव उड्डीकरणकारकः ॥ ४६ ॥
स्थिरजङ्गमकालाख्यविषघातविनाशकः ।
महारौद्रपीडितानां शरच्चन्द्रकरोपमः ॥ ४७ ॥

श्रीदेवी उवाच

कथं कामकला देव ! सूचिता न प्रकाशिता ।
यस्याः स्मरणमात्रेण सायुज्यं लभते नरः ॥ ४८ ॥

ईश्वर उवाच

तत् त्रैविध्यं शृणु प्राज्ञे ! सर्वतन्त्रेषु गोपितम् ।
स्थूलं समं तथा नाम सूक्ष्मं मन्त्रतनुं तथा ॥ ४९ ॥
नमो बिन्दुमुखी चन्द्रसूर्यस्तम……… ।
स्वमेरुहार्द्धकलया शोभमाना मही यदा ॥ ५० ॥
पातालतलविन्यस्ता त्रिलोकीयं कलात्मिका ।
ललितायास्त्रिभिर्बीजैः प्रकाशार्थाय[2] ईर्यते ॥ ५१ ॥
तेषां विमर्ष ईकारो बिन्दुना तत् त्रिधागतम् ।
तत्तुरीयस्वरूपार्णबिन्दुत्रयवदीरितम् ॥ ५२ ॥
ईकारोर्ध्वगतो बिन्दुर्मध्यतां च गते रवौ ।
स्तनौ दहनशीतांशू योनिर्हार्द्धकला भवेत् ॥ ५३ ॥
तदात्मकस्य देव्यास्ते साधकस्य च तद् भवेत् ।
तदुद्भवं शृणु प्राज्ञे ! महोदयकरं परम् ॥ ५४ ॥

---

१. मयेन्देवी–ख० ।
२. प्रकाशार्थो–ख० ।

ऊर्ध्वबिन्द्वात्मकं वक्त्रमधोबिन्दुद्वयात्मकम् ।
कुचद्वयं तु तच्छेषैः शेषाङ्गानि विभावयेत् ॥ ५५ ॥
इति ते गदिता कामकलाया बाह्यभावना ।
तामेव त्वां पुनर्वक्ष्ये भावनामान्तरात्मिकाम् ॥ ५६ ॥
मूलादिब्रह्मरन्ध्रान्तं स्फुरद्विद्युल्लताकृतिम् ।
ध्यायेत् कुण्डलिनीं देवि ! तद्विद्यास्वरूपिणीम् ॥ ५७ ॥
षट्चक्रभेदिनीं देवीं बिन्दुत्रयात्मिकां पराम् ।
तां च हार्द्धकलारूपां चिन्तयेत् पद्ममध्यगाम् ॥ ५८ ॥
एवं कामकलारूपा जागर्ति सचराचरे ।
सा च त्रयीमयी प्रोक्ता नास्ति किञ्चित् तया विना ॥ ५९ ॥
साम्ना मुखं समाख्यातं ऋग्यजुर्भ्यां स्तनद्वयम् ।
अथर्वणा समाख्याता हार्द्धरूपा परा कला ॥ ६० ॥
तुरीयं परमेशानि ! साक्षाद् ब्रह्मैव केवलम् ।
एतत् कामकलाध्यानं गुह्याद् गुह्यतमं परम् ॥ ६१ ॥
नाऽशिष्याय प्रदातव्यं नाऽभक्ताय कदाचन ।
एतत् प्रकाशनं यच्च आयुःक्षयकरं स्मृतम् ॥ ६२ ॥
साधकस्य विनाशस्तु तस्मान्नैतत् प्रकाशयेत् ।
लोभान्मोहाच्च गर्वाद् वा विद्वेषाद् वा प्रकाशयेत् ॥
सोऽचिरान्मृत्युमाप्नोति शस्त्राघातविषादिभिः ॥ ६३ ॥

॥ इति गन्धर्वतन्त्रे त्रिंशत्तमः पटलः ॥ ३० ॥



# अथ एकत्रिंशः पटलः

देवी उवाच

होमस्य कथयेशान ! विधानं पूर्वसूचितम् ॥

ईश्वर उवाच

किंशुकैर्हवनं देव्याः कुसुम्भकुसुमैरपि ।
नागकेशरपुष्पैर्वा मधूकै रक्तपद्मकैः ॥ १ ॥

करवीरैर्यवापुष्पैर्मधुरत्रयमिश्रितैः ।
सर्वसिद्धिप्रदं कुण्डं चतुरस्रं वरानने ! ॥ २ ॥

कुण्डं सुलक्षणं कृत्वा होमयेत् संस्कृतेऽनले ।
अथवा परमेशानि ! स्थण्डिलं रचयेद् बुधः ॥ ३ ॥

नित्यं नैमित्तिकं कुर्यान्न काम्यं स्थण्डिले चरेत् ।
हस्तमात्रं चतुरस्रं गोमयेनोपलेपितम् ॥ ४ ॥

अङ्गुष्ठपर्वमात्रोच्चं वालुकामण्डलं तथा ।
तत्रापि लेखनं कृत्वा तत्र होमः फलप्रदः ॥ ५ ॥

यवानां तण्डुलैरेवमङ्गुलं चाऽष्टभिर्भवेत् ।
अदीर्घयोजितैर्हस्तश्चतुर्विंशतिरङ्गुलैः ॥ ६ ॥

एतत् प्रमाणहस्तैस्तु कुण्डादिकं समाचरेत् ।
त्रिपुराप्रीतिदो होमः कुण्डे त्रिकोणसंज्ञके ॥ ७ ॥

पश्चिमात् पूर्वाग्रास्तिस्रो रेखाः प्रादेशप्रमाणाः ।
विलिख्य च मुकुन्देन्दुपुरन्दरस्वरूपकाः ॥ ८ ॥

दक्षिणास्तिस्रो रेखा वै विलिख्य तदनन्तरम् ।
रेखाः स्युश्च वैवस्वतब्रह्मानन्तस्वरूपकाः ॥ ९ ॥

त्रिकोणं मध्यतो देवि ! कृत्वा बाह्ये ततः परम् ।
षट्कोणं विधिना चैव कारयेदतिसुन्दरम् ॥
अष्टपत्रं च तद्बाह्ये वृत्तेन कर्णिका शुभा ॥ १० ॥

चतुरस्रं चतुर्द्वारं मण्डलं विरच्य मध्ये पुष्पाञ्जलिं निक्षिप्य स्रुवादिक[1]-मासादयेत् ।

स्रुवम् आज्यं दधि दूर्वां समिधम् आज्यस्थालीं प्रणीतां प्रोक्षणीं चैव वामतः । अस्मै परिकल्प्याऽम्भसा प्रोक्षणीमापूर्य, वारत्रयमुत्पूय, तानि प्रोक्ष्याऽभिमुखानि कृत्वा, बालया अभिमन्त्र्य, तयैव दूर्वाभिर्मूलादग्रं पुनरग्रान्मूलं त्रिः परिमृज्य, दूर्वाभिः पूर्वाग्रमुत्तराग्रं च विस्तरेत् ।

मूलविद्यां समुच्चरन् 'स्थण्डिलाय नमः' इति सम्पूज्य त्रिकोणमध्ये कामेश्वरीकामेश्वरौ यष्ट्वा तयोर्मिथुनीभावं ध्यात्वा तावभ्यर्च्य तस्या गर्भे 'वैश्वानर जातवेद ! इहावह लोहिताक्ष ! सर्वकर्माणि साधय स्वाहे'ति मूलोद्गतं संविदग्निं ललाटनेत्रद्वारा निर्गतं [2]वाय्वग्नियुक्तं पातयेत् ।

ॐ उत्तिष्ठ पुरुष ! हरिपिङ्गल ! लोहिताक्ष ! सर्वकर्माणि देहि मे दापय स्वाहे' ति वह्निमुत्थाप्य, 'ॐ चित्पिङ्गल ! हन हन दह दह पच पच सर्वं ज्ञापय स्वाहे'ति कामेश्वरीगर्भे धृतं ध्यात्वा, मूलमुच्चरन् 'वौषडि'ति वह्निं विलोक्य, अस्त्रेण संरक्ष्य, ज्वलदग्निमादाय, स्थण्डिलं दक्षिणावर्त्तेन त्रिः परिभ्राम्य, ज्वलदिन्धनमेकं 'हूँ फडि' त्यनेन क्रव्यादाग्निं नैर्ऋत्यां त्यजेत् ।

जानुभ्यामवनीं स्पृष्ट्वा वह्निं मध्ये संस्थाप्य 'क्लीं महात्रिपुरसुन्दरीं वह्निमूर्तये नमो' देवीं सम्पूज्य नाभिमण्डलाद् वहन् नासापुटेन तदग्निना बाह्याग्निमेकीकृत्य यजेत् ।

---

१. स्रुप्रादिकाम्–ख० ।
२. वायुग्नि–ख० ।

मूलं 'ऐं क्लीं सौः ॐ सोऽहं वह्निचैतन्यायै नमः' इति कामेश्वरीगर्भे वह्निं सञ्चिन्त्य तद्देहे षडङ्गानि 'सहस्रार्चिषे हृदयाय नमः, स्वस्ति पूर्णाय शिरसि स्वाहा, उत्तिष्ठ पुरुषाय शिखायै वषट्, धूमव्यापिने कवचाय हुं, सप्तजिह्वाय नेत्रेभ्यो वौषट्, धनुर्धरायास्त्राय फट्' इति यष्ट्वा, तप्तजाम्बूनद-प्रभं शक्तिस्वस्तिकधरं वरदाभयशोभितकरपङ्कजं दिव्यालङ्कारभूषितविग्रह-मम्भोजसंस्थं शुक्लाम्बरधरं त्रिनयनं बद्धमौलिं ध्यात्वा, चक्रे सप्तजिह्वाश्च ईशाने यूं लोहितां पूर्वे रूं रक्तां आग्नेये नु नीलां नैरृते वूं कृष्णां पश्चिमे शूं शुभ्रां दक्षे करालीम् उत्तरे बहुरूपां जप्त्वा कामेशीगर्भोद्भववह्नेः 'सर्व-भावेभ्यो नमः' इति मन्त्रगर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनाम-करणान्नप्राशनचूडोपनयनकर्म निर्वर्त्या'ऽमुकाग्नेरमुककर्म कल्पयामी'ति विधाय, परिषिच्य, परिस्तीर्य, परिधाय, पुनर्ध्यात्वाऽग्निमन्त्रेणाग्निं त्रिकोणे पूजयित्वा, सप्तजिह्वासु सप्ताहुतिं हुत्वा वैश्वानरोत्तिष्ठ चित्पिङ्गलै-स्त्रिधाहुतिं विधाय षडङ्गानि षट्कोणेषु अष्टदलेषु 'अग्नये जातवेदसे सप्त-जिह्वाय हव्यवाहनाय अश्वोदराय वैश्वानराय कौमारतेजसे देवमुखाय नमः' इति लोकपालांश्च भूग्रहे वह्नेर्दक्षिणतो ब्रह्माणमाराध्य, आज्यस्थालीं पुरतो निधाय बहुरूपायां जिह्वायां श्रीचक्रराजं तदन्तःस्थां चित्कलामशेष-रश्मिमण्डितामालोच्य, यष्ट्वा, नित्यं हुत्वा, कुण्डं मण्डपधूपैरापूर्य दीपै-रुज्ज्वाल्य, समिधं हुत्वा जुहुयात्। इष्टमेव च बलीन् प्रदाय, 'ॐ भूरग्नये च पृथिव्यै च महते च स्वाहा', 'ॐ भुवो वायवे चान्तरिक्षाय च दिवे च महते च स्वाहा', 'ॐ स्वरादित्याय दिवे च महते च स्वाहा', 'ॐ भूर्भुवः-स्वश्चन्द्रमसे च नक्षत्रेभ्यश्च महते च स्वाहा' इति चतुर्भिर्मन्त्रैर्महाव्याहृति-होमं कृत्वा, ब्रह्मार्पणमतः परं समिधं हुत्वा देवीमभ्यर्च्य विसृजेदिति।

नित्यहोमो मया प्रोक्तः काम्यहोममतः शृणु।
मल्लिका-मालती-जाति—कुसुमैर्मधुमिश्रितैः।
कृतपूर्णैः कुलैर्वापि वागीशत्वं प्रजायते॥ ११॥
यवापुष्पैराज्ययुक्तैः करवीरैस्तथाविधैः।
हवनान्मोहयेन्मन्त्री लोकत्रयनिवासिनः॥ १२॥

चम्पकैः पाटलैर्हुत्वा श्रियमाप्नोत्यनुत्तमाम् ।
कमलैर्वरुणैर्होमः सम्यक् सम्पत्तिदायकः ॥ १३ ॥

रक्तोत्पलैर्जगद् वश्यं नीलैर्दुष्टान् वशं नयेत् ।
श्वेतोत्पलैः श्रियं राज्यं लभते हवनात् प्रिये ! ॥ १४ ॥

कह्लारहवनैर्लक्ष्मीं सर्वसौभाग्यमेव च ।
बन्धूककुसुमैर्होमैः सर्वसत्त्वान् वशं नयेत् ॥ १५ ॥

क्षीरं दधि मधु स्वाज्यं पृथग् हुत्वा वरानने ! ।
आयुर्बलमथाऽऽरोग्यं समृद्धिर्जायते नृणाम् ॥ १६ ॥

रुधिराक्तेन छागस्य मांसेन निशि होमतः ।
मधुरत्रययोगेन गुरुणोक्तविधानतः ॥ १७ ॥

परराष्ट्रं वशं नीत्वा कामभोगी भवेन्नरः ।
द्राक्षाभिर्लक्षहोमेन सिद्धयोऽष्टौ भवन्ति हि ॥ १८ ॥

कदलीफलहोमेन नारिकेलफलैस्तथा ।
राजानो वशमायान्ति समृद्धिरतुला तथा ॥ १९ ॥

जम्बूफलैः स्त्रियः सर्वा वश्या भवन्ति निश्चितम् ।
श्रीफलैरतुलां लक्ष्मीं पत्रैश्चापि तथा भवेत् ॥ २० ॥

इक्षुखण्डैः सुखावाप्तिस्तद्रसैर्वशगा नृपाः ।
तिलाज्यहोमतो देवि ! सर्वकार्याणि साधयेत् ॥ २१ ॥

घृतपायसहोमेन सिताज्यमधुना सह ।
त्रैलोक्यं वशमायाति [1]धनधान्यमवाप्नुयात् ॥ २२ ॥

सोपस्कारैश्च वटकैरुपसर्गान् विनाशयेत् ।
कर्पूरस्य च होमेन वाग्वश्यं जायते नृणाम् ॥ २३ ॥

---

१. धनवान् यम्–ख० ।

कुङ्कुमैर्होमतो देवि ! सर्वदुःखान् विनाशयेत् ।
कस्तूरीहोमतो देवा वशगा नात्र संशयः ॥ २४ ॥
चन्दनागुरुहोमेन सर्वान् लोकान् वशं नयेत् ।
शृणु देवि ! प्रवक्ष्यामि मानं हवनसिद्धये ॥ २५ ॥
पुष्पं समग्रं जुहुयाच्छतसङ्ख्यास्तिलास्तथा ।
लाजा मुष्टिप्रमाणाः स्युर्घृतं कर्षप्रमाणकम् ॥ २६ ॥
चुल्लुकार्द्धं मधु [1]क्षीरमन्नं ग्रासमितं भवेत् ।
समग्रैश्च सखण्डैश्च फलानां च यथेच्छया ॥ २७ ॥
रम्भाफलं चतुःखण्डं लघु चेत् खण्डितं नहि ।
नारिकेलस्य खण्डं तु स्थूलं कुर्यान्मनःप्रियम् ॥ २८ ॥
परस्थाने चेक्षुदण्डं मनःसन्तोषकारकम् ।
द्राक्षाफलं समग्रं स्याद् गुञ्जामानं ततो भवेत् ॥ २९ ॥
कर्पूरकौषिकादीनां मनःसन्तोषकारकम् ।
एतदाहुतिमानं च कथितं सर्वसिद्धिकृत् ॥ ३० ॥
किंशुकैः पापसङ्घातनाशकैरथवा प्रिये ! ।
नानाद्रव्यैः पृथग्भूतैः संगृहीतैर्वरानने ! ॥ ३१ ॥
यथाशक्त्या तु मिलितैर्होमं कुर्याद् विचक्षणः ।
सर्वविघ्नसमूहं तन्नाशयेन्नात्र संशयः ॥ ३२ ॥

॥इति गन्धर्वतन्त्रे एकत्रिंशः पटलः ॥ ३१ ॥



१. क्षीरः अन्नं—ख० ।

# अथ द्वात्रिंशः पटलः

देवी उवाच

वह्नीन्द्वर्कमयी मुद्रा प्रतिष्ठा च कथं भवेत् ? ।
सोमसूर्याग्निरूपाः स्युर्वर्णा लोकत्रयं तथा ॥ १ ॥

स्वराः षोडश सौम्यास्ते सौराः स्युः कादयोऽपरे ।
आग्नेयास्ते समुद्दिष्टा यादयो दश चापरे ॥ २ ॥

रौप्यमिन्दुस्तथा हेम सूर्यस्ताम्रं हुताशनः ।
लोहभागाः समुद्दिष्टाः सराज्यक्षरसंख्यया ॥ ३ ॥

तैर्लोहैः कारयेन्मुद्रामसङ्कलितसङ्गताम् ।
पञ्चामृतैः पञ्चगव्यैः क्षालयित्वा शुभेऽहनि ॥ ४ ॥

भानुवारे शुभे लग्ने पूर्वोक्तमातृकाम्बुजे ।
मध्यादि स्थापयेत् तेषु पत्रेषु कलशानपि ॥ ५ ॥

तन्तुभिर्वेष्टितान् शुद्धान् बहिश्चन्दनचर्चितान् ।
सधूपवासितान् देवि ! दूर्वाक्षतसमन्वितान् ॥ ६ ॥

क्वाथेन पूरयेद् देवि ! यथावदक्षरौषधैः ।
रोचना-चन्द्र-काश्मीर-लघुकस्तूरिकायुतैः ॥ ७ ॥

आपूर्य गन्धतोयैस्तान् वेष्टयेदंशुकैः शुभैः ।
मुक्तामाणिक्यवैदूर्यगोमेदवज्रविद्रुमान् ॥ ८ ॥

पुष्परागं मरकतं नीलं चेति यथाक्रमम् ।
विन्यसेत् तेषु कुम्भेषु रत्नाङ्कितफलानि च ॥ ९ ॥

स्थापयेत् कुम्भवक्त्रेषु कोमलान् चूतपल्लवान् ।
मध्यकुम्भे च मुद्रां तां विन्यस्य बहुमङ्गलैः ॥ १० ॥

बीजत्रयं त्रिधा कृत्वा मातृकां च त्रिधा तथा ।
विभज्य पूजयेद् देवि ! सोमसूर्यहुताशनान् ॥ ११ ॥

तत्राऽऽवाह्य यजेद् देवीं संमोहनीं परां ततः ।
प्राणानायाम्य विधिवत् पूर्ववन्मातृकां न्यसेत् ॥ १२ ॥

त्रिनेत्रां तरुणेन्द्वाभां बालार्ककिरणारुणाम् ।
अक्षमालाङ्कुशधरां पाशं पद्मद्वयं तथा ॥ १३ ॥

आबिभ्रतीं कराम्भोजैः पुण्ड्रेक्षुचापपुस्तकान् ।
मायाश्रीकामबीजाद्यां नित्यां वर्णमयीं भजेत् ॥ १४ ॥

नानाविधैस्तु कुसुमैर्धूपैर्दीपैर्मनोहरैः ।
उच्चावचैरुपहारैः पूजयित्वा यथाविधि ॥ १५ ॥

शर्कराघृतसंयुक्तं पायसं च निवेदयेत् ।
पूजयेद् दिक्षु कुम्भेषु व्यापिन्यादीन् यथाक्रमम् ॥ १६ ॥

व्यापिनी पालिनी पश्चात् प्लाविनी क्लेदिनी तथा ।
धारिणी[1] मालिनी चैव हर्षिणी शान्तिनी तथा ॥ १७ ॥

व्यापिन्यश्चाष्टसंख्या वै एताः पर्वतनन्दिनि ! ।
साग्रं सहस्रं संजप्य स्पृष्ट्वा तां मुद्रिकां ततः ॥ १८ ॥

होमयेत् संस्कृते वह्नौ सहस्रं हविषां तथा ।
तस्यां सम्पातयेद् देवि ! विधिनाऽऽहुतिशेषकम् ॥ १९ ॥

संमोहनीं समुद्दिश्य गृहीत्वाज्यं स्रुवेण तु ।
बीजत्रययुतां देवि ! मातृकां बिन्दुसंयुताम्[2] ॥ २० ॥

वह्निभार्यान्वितां पश्चात् कृत्वा वै होमयेत् ततः ।
मण्डले मातृकादेव्याः शिष्यं निवेश्य सादरम् ॥ २१ ॥

---

१. धरणी–क० ।
२. संयुतान्–ख० ।

सुरास्त्वामिति मन्त्रैस्तु नवभिः कलशैः शुभैः ।
अभिषिच्य विनीताय दद्यात् तां मुद्रिकां गुरुः ॥ २२ ॥

इयं रक्षाकरी मुद्रा विषरोगविनाशिनी ।
व्यालचौरमृगादिभ्यो रक्षां कुर्याद् विशेषतः ॥ २३ ॥

सर्ववश्यकरी शुद्धा शुद्धिदा शुद्धिहारिणी ।
तर्जन्या धारयेदेनां विधिना मनुजेश्वरः ॥ २४ ॥

युद्धे विजयमाप्नोति श्रिया परमया युतः ।
विभजेन्मातृकां देवि ! नववर्गान् तथोदिकान् ॥ २५ ॥

नववर्गसमुत्पन्ना नवरत्नेश्वरा ग्रहाः ।
अर्केन्दुवक्रज्ञगुरुभृगुमन्दाहिकेतवः ॥ २६ ॥

नवरत्नैर्महेशानि ! मुद्रां कुर्याद् यथेच्छया ।
[1]तद्रत्नेषु ग्रहान् सर्वान् पूजयित्वा विधानतः ॥ २७ ॥

आवाह्य पूजयेद् देवीं सम्मोहनीं परां तथा ।
जपहोमादिकं सर्वं कुर्यात् पूर्वोक्तवर्त्मना ॥ २८ ॥

यो मुद्रां धारयेदेनां तस्य स्युर्वशगा ग्रहाः ।
वर्द्धते तस्य सौभाग्यं लक्ष्मीरव्याहता भवेत् ॥ २९ ॥

द्रोहिणस्तस्य नश्यन्ति नश्यन्ति सकलापदः ।
रक्षोभूतपिशाचाद्या नेक्षन्ते तं भयातुराः ॥ ३० ॥

उपर्युपरि वर्द्धन्ते धनरत्नानि सम्पदः ।
विना प्रतिष्ठया मुद्रां धारयित्वा पतत्यधः ॥
नाप्नोति च फलं तस्माद् धारयेद् विधिना प्रिये ! ॥ ३१ ॥

इति गन्धर्वतन्त्रे द्वात्रिंशः पटलः ॥ ३२ ॥



---

१. तेषु र-क० ।

# अथ त्रयस्त्रिंशः पटलः

श्रीदेवी उवाच

चक्रराजस्त्वया प्रोक्तः प्रतिष्ठा न प्रकाशिता ॥

ईश्वर उवाच

चक्रे मूर्त्तौ तथा शिष्ये प्रतिष्ठा त्रिविधोच्यते ।
प्रतिष्ठितस्तथा शिष्यो दीक्षया खलु पार्वति ! ॥ १ ॥
अर्च्यां रत्नमयीं कृत्वा हैमीं वा राजतीं प्रिये ! ।
प्रतिष्ठां विधिवत् कुर्यात् संस्थाप्य च गृहे शुभे ॥ २ ॥
मासि मासि चरेद् यात्रां महाविभवविस्तराम् ।
चतुःषष्ट्युपचारैस्तु पूजां कुर्याद् दिने दिने ॥ ३ ॥
दीक्षोक्तविधिना पूर्वमधिवासादिकं चरेत् ।
वासोभूषणगन्धाद्यैः[1] कार्यतत्त्वार्थविद् गुरुः ॥ ४ ॥
उक्तेन विधिना पूर्वं कृत्यं निर्वर्त्त्य देशिकः ।
पञ्चामृतैः पञ्चगव्यैः क्षालयेच्चक्रराजकम् ॥ ५ ॥
तथाविधे गृहे वेद्यां पूजयित्वा यथाविधि ।
नाना-कुसुम-सौरभ्य-वासितेऽतिमनोहरे ॥ ६ ॥
सुषुम्नावर्त्तिने चक्रं पर्यङ्केऽथ निवेशयेत्[2] ।
कुङ्कुमाऽगुरु-कस्तूरी-कर्पूरैरथ चन्दनैः ॥ ७ ॥
विलिप्य विविधैर्गन्धैः कुसुमैरपि योजयेत् ।
दिव्येन वाससाऽऽच्छाद्य कर्पूरैरधिवासयेत् ॥ ८ ॥

---

१. गन्धादेः–ख० ।
२. निवेशन्नेत्–ख० ।

धूपैः सुधूपितं कृत्वा दीपैरुज्वाल्य पार्वति ! ।
कर्पूरवासितैस्तोयैः पूरितान् कलशान् शिवे ! ॥ ९ ॥

एकाशीतिपदे तत्र स्थापयेद् वस्त्रवेष्टितान् ।
हेमगर्भान् समान् शुद्धान् पुष्पमालाद्यलङ्कृतान् ॥ १० ॥

एकाशीतिपदोपेतं चतुरस्रं तु मण्डलम् ।
ब्रह्मचारी गुरुस्तत्र सशिष्यश्चापि संविशेत् ॥ ११ ॥

प्रातरेव तु तत् सर्वं विनिर्वर्त्य विधानतः ।
पूर्वोक्तेन विधानेन प्रविशेन्मण्डपं गुरुः ॥ १२ ॥

पूर्ववदपरं कृत्वा आसनमुपविश्य च ।
तथासनं च निर्वर्त्य चक्रमुत्थापयेत् ततः ॥ १३ ॥

पञ्चामृतैः पञ्चगव्यैः क्षालयित्वा विधानतः ।
निधाय भद्रपीठे च तत्र देवीं विभावयेत् ॥ १४ ॥

क्षौद्राऽऽज्यदुग्धैः प्रथमं नारिकेलाम्भसा ततः ।
इक्षुरसैस्तथा तोयैरभिषिच्य समन्त्रकम् ॥ १५ ॥

तैरेव कलशैः सम्यगभिषिञ्चेद् यथाविधि ।
सर्वतीर्थाम्बुपूर्णेन भृङ्गारेणाऽभिषिच्य वै ॥ १६ ॥

कराभ्यामुद्धृत्य तच्चक्रं स्थापयेद्धेमपीठके ।
ततो देवीं हृदि ध्यात्वा यथोक्तध्यानयोगतः ॥ १७ ॥

आवाह्य चक्रमध्ये च तथैवैकाग्रचित्तवान् ।
निर्वर्त्य विधिना देवि ! चक्रं स्पृष्ट्वा करेण च ॥ १८ ॥

कुङ्कुमाऽगुरु-कस्तूरी-रोचना-चन्दनेन्दुभिः ।
विलिप्याऽथ पुनश्चक्रं सुवर्णस्य शलाकया ॥ १९ ॥

रेखोन्मीलनमापाद्य यजेदाधारपूर्वकम् ।
प्राणप्रतिष्ठामन्त्रेण प्राणांस्तत्र निवेशयेत् ॥ २० ॥

क्षीरोदधिः सनादेन बिन्दुना परिमण्डितः ।
नकुलांशोऽग्निमारूढो मायानादेन्दुलाञ्छितः ॥ २१ ॥
कामदेवोऽग्निमारूढः सद्योजातेन भूषितः ।
नादबिन्दुकलायुक्तः सर्वप्राणप्रदायकः ॥ २२ ॥
बीजत्रयमिदं देवि ! शिवबीजं सचन्द्रकम् ।
तदन्ते परमेशानि ! स्वर्गवान् भृगुरव्ययः ॥ २३ ॥
ततो भूयात् तु षष्ठ्यन्ता महात्रिपुरसुन्दरी ।
क्रमात् प्राणा इह प्राणास्तथा जीव इह स्थितः ॥ २४ ॥
अमुष्याः सर्वेन्द्रियाणि भूयोऽमुष्याश्च[1] पार्वति ! ।
वाङ्-मनो-नयन-श्रोत्र-घ्राण-प्राणास्तथैव च ॥ २५ ॥
पश्चादिहागत्य सुखं चिरं तिष्ठत्वग्निप्रिया ।
अयं प्राणमनुः प्रोक्तः सर्वजीवप्रदायकः ॥ २६ ॥
अनेन मनुना देव्याः प्राणांस्तत्र निवेश्य च ।
स्पृशन् जपेत् कराग्रेण श्रीचक्रं पूजयेत् ततः ॥ २७ ॥
उपचारैस्तथा प्रोक्तैस्त्रिसन्ध्यं त्रिदिनं यजेत् ।
तत्र तत्र महादेवीं होमयेद् विधिना तथा ॥ २८ ॥
अष्टोत्तरशतं देवि ! पायसैर्मधुराप्लुतैः ।
वाद्यैर्नानाविधैर्देवि ! नृत्यगीतपुरःसरैः ॥ २९ ॥
जयशब्दान्वितैस्तोत्रैर्महोत्सवमुदान्वितः ।
कृत्वाऽथ गुरवे दद्याद् दक्षिणां पूर्वसूचिताम् ॥ ३० ॥
प्रमदाः परितोष्याऽथ ब्राह्मणानपि तोषयेत् ।
एवं देवि ! प्रतिष्ठायां देवीसान्निध्यकारकः ॥ ३१ ॥
यन्त्रे मन्त्रे कुले चैव कुलालङ्करणे तथा ।
त्रैपुरे अस्त्रशास्त्रे च पूजयेद् वा तथाऽऽत्मनि ॥ ३२ ॥

---

१. अमुष्यश्च–ख० ।

प्रतिमायां तथा वह्नौ शिवलिङ्गे तथा गुरौ।
पूजाधाराणि देवेशि! कथितानि मयाऽनघे!॥
नान्यत्र पूजयेद् देवीं यदीच्छेदात्मनो हितम्॥ ३३॥

॥ इति गन्धर्वतन्त्रे त्रयस्त्रिंशत्तमः प्रतिष्ठापटलः॥ ३३॥

# अथ चतुस्त्रिंशः पटलः

ईश्वर उवाच

कुलाचारं शृणु प्राज्ञे ! प्रकीर्णं कथ्यते मया ।
अनिमा दक्षिणं वामं नैवाप्य[1] परमां यजेत् ॥ १ ॥

प्राणिहिंसां न कुर्वीत न चाऽऽत्मानं प्रपीडयेत् ।
हेतुद्रव्यमनास्वाद्य न स्मरेत् सुन्दरीं शिवे ! ॥ २ ॥

विना मद्येन मांसेन परस्त्रीरमणं विना ।
यजनं तु महादेव्या अगव्यं भोजनं यथा ॥ ३ ॥

अनैक्षवमगव्यं च भोजनं मृतभोजनम् ।
उपवासव्रतं नैव कुर्यादिह कदाचन ॥ ४ ॥

दुर्गन्धवदनो वापि विरागवदनोऽपि च ।
अकौलभूषणो वापि रक्तपुष्पविवर्जितः ॥ ५ ॥

अविश्वासहृदा युक्तः शिवस्य पत्रधारकः ।
तथा नान्यमना भूत्वा सुन्दरीं समुपासयेत् ॥ ६ ॥

अतो न तुलसीपुष्पैस्तत्पत्रैर्न यजेत् पराम् ।
कन्यायोनिं न वीक्षेयुर्बीभत्सं न विलोकयेत् ॥ ७ ॥

न नग्नां नान्ययोषां च न वीक्षेत् प्रकटस्तनीम् ।
क्रीडा कुलकुमारीणां दर्शनाद् वन्दनं शिवे ! ॥ ८ ॥

न दुष्यति मनो येन नारीणां तत् समाचरेत् ।
नारीणां विप्रियं कृत्वा सिद्धोऽपि नश्यति ध्रुवम् ॥ ९ ॥

---

१. नैवोष्य–क० ।

नैकवारं समश्नीयान्न हृद्यं पूतिगन्धयुक् ।
स्वयं हृद्यं स्थिरं स्वादु प्रशस्तं मधुरं तथा ॥ १० ॥

आहारं साधकेन्द्राणामल्पमल्पतरं शिवम् ।
कट्वम्ललवणानां च नातिप्रियतरो भवेत् ॥ ११ ॥

यद्भुक्तेर्जीयते शीघ्रं तदश्नीयान्न चाधिकम् ।
यदिच्छा जायते भोक्तुं तदश्नीयादपूर्णकम् ॥ १२ ॥

एकदाच्छादिते वह्नौ नैव वृद्धिं प्रयाति सः ।
तस्मात् सावहितो वह्निं बन्धयेदुक्तमानतः ॥ १३ ॥

समाने तु स्थिते वह्नौ शरीरं स्यान्निरामयम् ।
निरामये शरीरे तु सर्वकर्माणि साधयेत् ॥ १४ ॥

विषमस्थो यदा वह्निः शरीरं स्यान्निरर्थकम् ।
शरीरं तु मनुष्याणां पुरुषार्थैकसाधकम् ॥ १५ ॥

तस्मात् सर्वप्रयत्नेन शोधयेत् तन्निरामयम् ।
देवा अपि यजन्त्यत्र किं पुनर्मानवादयः ॥ १६ ॥

[1]भवाब्धेस्तरणोपायं तरणीवर्त्म उच्यते ।
निर्गदेन शरीरेण सुखं भवति दुस्तरम् ॥ १७ ॥

सरुजा वर्त्मना देवि ! जीवनं बिफलं शिवे ! ।
धूमागारे चान्धकारे अज्ञाने पूजनं शिवे ॥ १८ ॥

नरकाय महादेव्याः पूजनं विद्धि पार्वति ।
सत्ये चास्थिगताः प्राणास्त्रेतायां मांसगा मताः ॥ १९ ॥

द्वापरे त्वग्गताः प्राणाः कलावन्नगता मताः ।
निराहारव्रतं देवि ! कलौ तेन विवर्जितम् ॥ २० ॥

---

१. भावाब्दे—ख० ।

बलिदानं विना हिंसां कलौ नैवाऽत्र कारयेत् ।
न स्वयं छेदयेद् देवि ! बलिं साधकसत्तमः ॥ २१ ॥
बलिदानं विना देव्याः प्रीतिं नान्यैस्तथा भवेत् ।
प्रोक्षणे तु परो मन्त्रः सोऽयमेव प्रकीर्त्तितः ॥ २२ ॥
उद्बुध्यस्व पशोस्तुष्टिं नापरस्तं शिवोऽसि हि ।
शिवोत्कृत्यमिदं पिण्डमतस्त्वं शिवतां व्रज ॥ २३ ॥
बहवो नैव हन्तव्या यदीच्छेदात्मनो हितम् ।
बहवो यत्र हन्यन्ते तत्र कृत्या क्षयङ्करी ॥ २४ ॥
भवत्येवाऽचिरेणैव बन्धनोच्चारणं शिवे ! ।
आत्मप्राणसमा देवि ! परेषामपि सा कथा ॥ २५ ॥
परहिंसाभवोऽधर्मः क्रमात् सर्वं हरिष्यति ।
य इहाऽऽत्मकृते देवि ! परान् निष्पाद्य जीवति ॥ २६ ॥
नेहापि लभते सिद्धिं परत्रापि कदाचन ।
यो वा विधिमनादृत्य जन्तून् हत्वा शिवां यजेत् ॥ २७ ॥
भवन्त्येव महोत्पाता यत्र तस्य न संशयः ।
यज्ञादिषु महेशानि ! हिंसया दारुणाज्ञया ॥ २८ ॥
परहिंसाभवोऽधर्मः परिणामेऽतिदुःखदः ।
तथैव प्रतिजानीहि मोहात् किं वा न दृश्यते ॥ २९ ॥
कियत्कालसुखावाप्तिः काम्यया कामुकाः शिवे ! ।
हन्तीह परमो मोहः परमोहः सुदारुणः ॥ ३० ॥
ममत्वं ममता देहे प्रिये चातिसुदुर्लभे ।
तस्मादेषु महद् दुःखं नान्यत्र खलु पार्वति ! ॥ ३१ ॥
देहत्यागोऽसुनो यस्मात् तथेन्द्रचन्द्रयोरपि ।
आवयोर्जायते प्रीतिः कामदा कामुकस्य च ॥ ३२ ॥
न शस्तं मारणं कर्म ब्रह्मासौ ब्रह्मसाधके ।
यदा सर्वाणिभू तानि स्वात्मैव परिपश्यति ॥ ३३ ॥

सर्वभूतमिवात्मानं ब्रह्म सम्पद्यते तदा ।
शक्तिर्महेश्वरो ब्रह्म त्रयस्तुल्यार्थवाचकाः ॥ ३४ ॥

स्त्रीपुंनपुंसको भेदः शब्दतो न परार्थतः ।
अन्ते सिद्धिर्भवेत् पुंसां वशगा भोगमोक्षदा ॥ ३५ ॥

स्त्रीणामपीह पुंरूपो वशगः सर्वसिद्धिदः ।
नपुंसकात्मकं तत्तु स्वयमेव प्रकाशते ॥ ३६ ॥

द्वयोरेकतराद्वैतयोगात्मतैकभावना ।
निष्ठीवनं वरं शूकमधोवायुविसर्जनम् ॥ ३७ ॥

पूजामध्ये तु यः कुर्यात् स भवेद् योगिनीपशुः ।
देशानां व्यवहाराणि विज्ञाय मतिमान् सदा ॥ ३८ ॥

पश्चमादिपरामर्शः स्वतन्त्रो न भवेत् क्वचित् ।
यत्र देशे च आचारस्तत्र धर्मस्तु तादृशः ॥ ३९ ॥

अविरोधः सर्वभूतैः परिपन्थिषु निग्रहः ।
अनुग्रहः संश्रितेषु देववत् पुरुषेऽपि च ॥ ४० ॥

गुरुपुत्रकलत्रादिर्गुरुवदेव संश्रयेत् ।
पर्वसु च विशेषार्चा कुलवृक्षान्नपल्लवैः ॥ ४१ ॥

अनिच्छा मिथ्यावचने परदारधनेषु च ।
स्वस्तुतौ परनिन्दे च आनन्दश्चापि न स्पृशेत् ॥ ४२ ॥

सम्भाष्याऽभिमुखीं शक्तिं नाऽसम्भाष्य व्रजेत् क्वचित् ।
स्त्रीणां समूहमालोक्य प्रणमेद् भावतत्परः ॥ ४३ ॥

पुण्ड्रेक्षुदण्डजातानि भक्षयेन्न कदाचन ।
प्राङ्गेणैव सदा कार्या पूजा सर्वसमृद्धिदा ॥ ४४ ॥

दृष्ट्यागमविधौ देवि ! त्यजेद् दोषमपञ्चमम्[1] ।
स्नायात् सुगन्धिसलिलैर्यथा स्याद् देहनिर्मलम् ॥ ४५ ॥
निर्मलं धारयेद् वासः सर्वदा निर्मलः शुचिः ।
सुस्निग्धदेहवदनो न रूक्षः स्यात् कदाचन ॥ ४६ ॥
कृत्वा सुमङ्गलं देहं मृदुभाषणतत्परः ।
न बहु प्रलपेद् वीरो नैव रूक्षं कदाचन ॥ ४७ ॥
गन्धर्वरूपवान् भूत्वा वीणावादनतत्परः ।
मदिराघूर्णनयनो मदिराक्षिसमन्वितः ॥ ४८ ॥
सर्वदा देवताभावः सङ्गीतरसपारगः ।
यतिर्वा भूपतिर्वापि प्रशस्तः साधकोत्तमः ॥ ४९ ॥
भूपतिर्व्यस्तसम्भावैर्यतिरिन्द्रियनिग्रहैः ।
चतुराश्रमिणां मध्ये अवधूताश्रमो महान् ॥ ५० ॥
खादन् मांसं पिबन् मद्यं विषयी विषयान् जुषन् ।
रामारामो रमणीभिर्भूषिताभिर्विभूषितः ॥ ५१ ॥
तत्तदानन्दसन्दोहैरानन्दितान्तरात्मवान् ।
निःस्पन्देन्द्रियवान् यस्तु सोऽवधूतो यतिर्महान् ॥ ५२ ॥
स्रक् चन्दनं च वस्त्रादिभूषणं यद् विलेपनम् ।
यदृच्छयोपपन्नं यत् तदप्यन्यैर्निवेदितम् ॥ ५३ ॥
अगृध्नुरुपयुञ्जीत न चासक्तमना भवेत् ।
एकान्तविजने रम्ये सदा योगं समभ्यसेत् ॥ ५४ ॥
इन्द्रियाणि यदा भिक्षोश्चश्चलानि महात्मनः ।
तदा पर्यटनं कार्यं तीर्थादिषु प्रयत्नतः ॥ ५५ ॥
विभूतिभूषणो भिक्षां कुर्वन्नैकत्र चिरं वसेत् ।
त्वं मातर्देहि मे भिक्षां कुण्डलीस्तर्पयाम्यहम् ॥ ५६ ॥

---

१. पञ्चमे-क० ।

विभूतिमण्डलं प्राप्य न मत्तो नैव मत्सरी ।
सम्पत्तौ च निरानन्दः समरूपगुणान्वितः ॥ ५७ ॥

सर्वदानन्दहृदयो दानभोगपरायणः ।
प्रासादे चोत्तमे रम्ये लाक्षारुणसमप्रभे ॥ ५८ ॥

दिव्योपकरणैर्युक्ते मणिकाञ्चनभूषिते ।
परार्द्ध्यास्तरणे रम्ये रत्नसिंहासने शुभे ॥ ५९ ॥

नाना-कुसुम-सौरभ्य सुरभीकृत-दिङ्मुखे ।
चन्दनागुरुकर्पूरधूपैः सम्मोदितान्तरे ॥ ६० ॥

कर्पूरज्वलितैर्दीपैरुज्ज्वले रत्नसंज्वले ।
शरच्चन्द्रनिभं छत्रं मुक्तामाणिक्यमण्डितम् ॥ ६१ ॥

हेमदण्डशिखालम्बि श्वेतचामरभूषितम् ।
निधायोर्ध्वे विशेत् तत्र कृतासनपरिग्रहः ॥ ६२ ॥

चन्दनाऽगुरु-कर्पूर-मृगनाभि-विलेपितः ।
सर्वश्रृङ्गारवेषाढ्यो रत्नभूषाविभूषितः ॥ ६३ ॥

स्रग्भिर्विचित्रभूषाभिर्भूषितोऽतिमनोहरः ।
कर्पूरशकलोन्मिश्रताम्बूलपूरिताननः ॥ ६४ ॥

निवृत्ताखिलचिद्वृत्तिर्मदिराघूर्णलोचनः ।
विधाय परितः शक्तिं सुवेशां सुमनोहराम् ॥ ६५ ॥

दुकूलक्षौमकौषेयैर्नानारत्नैर्विराजिताम् ।
निर्लेपं निर्गुणं शुद्धमात्मानं त्रिपुरामयम् ॥ ६६ ॥

आत्माभेदेन सञ्चिन्त्य याति तन्मयतां नरः ।
भोगेन मोक्षमाप्नोति स्वयं त्रिपुरभैरवः ॥ ६७ ॥

तत एव समुत्पन्ना ब्रह्मविष्णुमहेश्वराः ।
तदेवैतेन सन्देहस्तस्माद् भिन्नं न भावयेत् ॥ ६८ ॥

भेदावभाषिणो मूढाः पतन्त्येव वरानने ! ।
सर्वदा सर्वदाः सर्वास्तोषयेद् भूषयेत् स्त्रियः ॥ ६९ ॥
वासोभूषणगन्धाद्यैः पेयैर्भक्ष्यैर्मुदान्वितः ।
प्रथमे राजसो भूत्वा द्वितीये तामसो भवेत् ॥ ७० ॥
तृतीये सात्त्विको धर्मी चतुर्थे पञ्चपरायणः ।
पूजाहोमजपान्तेऽस्या बलिभिः शत्रुनिग्रहैः ॥ ७१ ॥
दानभोगैस्तृतीये च चतुर्थे समतात्मनः ।
तच्चित्तस्तद्गतप्राणो मदिरामदविह्वलः ॥ ७२ ॥
सात्त्विको दिव्यभावस्तु स्थिराय जायते पुनः ।
नाशाय स एव भावस्तु तामसः खलु मानुषे ॥ ७३ ॥
विपर्ययाद् भवेन्मृत्युरकालसम्भवः शिवे ! ।
विषशस्त्रजनैश्चोरैर्दस्युभिर्वा वरानने ! ॥ ७४ ॥
विनाशं तस्य दुर्बुद्धेः समूलं विद्धि पार्वति ! ।
पुत्रमित्रकलत्रादिसुहृद्भृत्यादयोऽपरे ॥ ७५ ॥
विप्रा भ्रात्रादयो यस्य विषीदन्ति सुदुःखिताः ।
दुश्चरित्राः स्त्रियो यस्य भवन्त्यन्तःपुरे शिवे ॥ ७६ ॥
मृगयाभिरतिर्यस्य दुरोदरप्रियस्य च ।
अद्भुतानि च जायन्ते हाहाकारयुताः प्रजाः ॥ ७७ ॥
पीडिताः क्लेशविक्लिन्ना विपत् तस्य पदे पदे ।
यस्यैते चातिसन्तुष्टाः सुस्था मङ्गल[1]शंसिनः ॥ ७८ ॥
तस्यायुर्वर्द्धते नित्यं महालक्ष्मीः स्थिरा गृहे ।
कलहो यस्य देवेशि ! विना कारणमापतेत् ॥ ७९ ॥

---

१. संसिनः—ख० ।

नार्योऽमङ्गलशंसिन्यस्तस्य हानिर्विनिर्दिशेत् ।
एतेषामपि चान्येषां दोषाणां ग्रहसङ्कटे ॥ ८० ॥
आयुर्वृद्धौ तथा शान्त्यै कोटिहोमं चरेन्नृपः ।
कोटिहोमात् परं नास्ति कर्मारिष्टविनाशने ॥ ८१ ॥
न तत्तुल्यं तथा राज्ञां महोत्पातविनाशनम् ।
पुरश्चर्यां प्रकुर्वीत सन्ध्यासु जपतत्परः ॥ ८२ ॥
वर्षैकेण हि तत् सिध्येत् सर्वविघ्नविनाशनम् ।
ज्ञानलोपो भवेद् यस्य मद्यपानात् सुलोचने ! ॥ ८३ ॥
विकारं जनयेद् वापि स पुनर्यात्यधोगतिम् ।
प्रलापं भ्रंशनं हास्यं क्रोधोन्मादभयानकाः ॥ ८४ ॥
आलस्यं वाऽतिचिन्ता च परानिष्टप्रवर्तनम् ।
हिंसाऽसूया तथेर्ष्या च दम्भमोहौ प्रमादता ॥ ८५ ॥
आवेशो मरणं मूर्च्छा विकाराः समुदीरिताः ।
समता सर्वभूतेषु मानाऽपमानयोः समः ॥ ८६ ॥
समः शत्रौ च मित्रे च समलोष्टाश्मकाञ्चनः ।
ब्रह्मचिन्तोद्भवानन्दनिवृत्तबाह्यचित् तदा ॥ ८७ ॥
सर्वकालेषु सर्वत्र समत्वं निर्विकारता ।
चक्षुषोरनिमेषत्वं मधुरस्मितभाषणम् ॥ ८८ ॥
अमृतस्य गुणा एते कथिता भुवि दुर्लभाः ।
वैराग्यं च मुमुक्षुत्वं त्यागिता सर्ववश्यता ॥ ८९ ॥
अष्टाङ्गयोगाभ्यसनं भोगेच्छापरिवर्जनम् ।
सर्वभूतेष्वनुकम्पा सर्वज्ञादिगुणोदयः ॥ ९० ॥
इत्यादिगुणसम्पत्तिः सिद्धेर्लक्षणमुच्यते ।
ख्यातेर्वाहनभूषादिलाभः सुचिरजीवनम् ॥ ९१ ॥

नृपाणामङ्गनानां च राजत्वं लोकवश्यता ।
महैश्वर्यं धनित्वं च पुत्रदारादिसम्पदः ॥ ९२ ॥
अधमाः सिद्धयः प्रोक्ता मन्त्रिणां प्रथमस्त्विह ।
सिद्धयस्तु स्वराः साक्षान्मानवो नाम संशयः ॥ ९३ ॥
यत्कृते परमेशानि ! निःश्वसन्ति कुलाङ्गनाः ।
साश्रुपातं विना पश्च गद्गदं भृशदुःखिताः ॥ ९४ ॥
तस्य स्युर्विफलाः सर्वाः क्रियाः सर्वत्र चोदिताः ।
कान्तासन्तापजो वह्निर्दहत्यासप्तमं कुलम् ॥ ९५ ॥
कान्तां सन्तोषयेत् तस्माद् विप्रियं न मनाक् स्पृशेत् ।
संसिद्धेः कारणं कान्तामूलं संसारवर्त्मसु ॥ ९६ ॥
जाया मुख्यतमा प्रोक्ता चादौ पाणिप्रपीडिता ।
जायते स्वयमेवास्यां जायेति च निगद्यते ॥ ९७ ॥
एका पतिव्रता भार्या साध्वी चेत् सहचारिणी ।
किमन्याभिर्महेशानि ! यथैवाहं त्वया प्रभुः ॥ ९८ ॥
श्रिया विष्णुः [1]सरस्वत्या ब्रह्मा शच्या पुरन्दरः ।
एकया ईप्सितः कृत्वा मनसाऽऽकृष्य पूरुषम् ॥ ९९ ॥
तस्याप्येकं समासाद्य नाप्यन्यं मनसा स्मरेत् ।
जाया चेत् कुलटा गेहे स्वयं कुलोपचारकः ॥१००॥
मूषिकोपहतं कोषं तथा तस्य तदीरितम् ।
प्रयत्नेन विना देवि या स्वयमभिकाङ्क्षति ॥१०१॥
यदा तु सा तस्य परकीया न परिशोच्यते ।
हठादाकर्षते यस्तु प्रलोभ्य च धनादिभिः ॥१०२॥
परकान्तां महेशानि ! स याति चाधमां गतिम् ।
स्वकान्तां परकान्तां वा कामविरहितां शिवे ! ॥१०३॥

---

१. स्वरस्वती—क० ।

या नेच्छतीप्सया श्रद्धां तां गत्वा च तथा भवेत् ।
दुःशीला तु यदा नारी त्यजेत् तां नैव ताडयेत् ॥१०४॥

अतिदुष्टां स्त्रियं देवि ! नीचपुरुषगामिनीम् ।
राजद्वारि च दिग्वासां त्यजेत् तां नैव संश्रयेत् ॥१०५॥

कुलशास्त्रं कुलाचारः कामयागमनुत्तमम् ।
अयोग्येषु प्रकाश्यैव सिद्धोऽपि नश्यति ध्रुवम् ॥१०६॥

॥ इति गन्धर्वतन्त्रे चतुस्त्रिंशः पटलः ॥ ३४ ॥



# अथ पञ्चत्रिंशः पटलः

देवी उवाच

साधका गुप्तरूपाश्च तेषां साध्यं कथं भवेत् ? ।
साध्यं च कीदृशं देव ! काम्यं वा कीदृशं भवेत् ? ॥
पूजा च कीदृशी कार्या तन्मे वद सुविस्तरात् ॥ १ ॥

ईश्वर उवाच

अत्यन्तगुप्तरूपेण काम्यं कृत्वाऽर्चयेन्नरः ।
तदा तत्काममाप्नोति मन्दभाक् शक्तिपूजनात् ॥ २ ॥

पूजाफलेन दौर्भाग्यं दुःखदारिद्र्यसङ्कुलम् ।
सर्वं प्रशमनं याति ईश्वरो जायते भुवि ॥ ३ ॥

अतिगुप्ततरं यस्मात् तस्माद् रात्रौ विधीयते ।
प्रकटे कार्यहानिः स्यात् क्रुद्धा भवति सुन्दरी ॥ ४ ॥

गुरुभक्तिविहीनस्य विफलं साधनं प्रिये ! ।
अहं गुरुप्रसादेन सर्वगः सर्ववित् प्रभुः ॥ ५ ॥

शक्तेः पूजा सदा कार्या प्रसन्ना येन सा भवेत् ।
विफला शक्तिरहिता पूजा सर्वप्रसारिणी ॥ ६ ॥

ध्यानमानन्दरहितं यथा निष्फलमद्रिजे ! ।
शक्तौ दर्पं घृणां लज्जां वर्जयेत् क्रोधमत्सरम् ॥ ७ ॥

कदाचिद् दर्परूपेण पुष्पेणापि न ताडयेत् ।
शक्तौ न विस्मयं कार्यं यस्मात् सा त्वत्स्वरूपिणी ॥ ८ ॥

विस्मृता विलयं यान्ति पशवः शास्त्रमोहिताः ।
सुभक्त्या प्रणमेद् यस्तु शक्तिमेकाग्रचेतसा ॥ ९ ॥

तस्य सर्वार्थसिद्धिः स्यादन्ते मोक्षमवाप्नुयात् ।
निश्चयं मुक्तिमाप्नोति सहस्रं शक्तिपूजनात् ॥ १० ॥

शक्तिपूजासु विमुखः पामरः पुरुषाधमः ।
स निर्लज्जः कथं ब्रूते पूजयामि महेश्वरीम् ॥ ११ ॥

पूजा होमं विना चेह नाधिकारः कथञ्चन ।
विना होमं महेशानि ! शक्तियागमकारणम् ॥ १२ ॥

शक्तियागं विना होमो निष्फलो नात्र संशयः ।
तस्माद् भावविशुद्धात्मा सर्वतन्त्रार्थकोविदः ॥ १३ ॥

साधकोऽपि च तत्त्वज्ञो नित्यं शक्तिं समाश्रयेत् ।
मदिरायां न वा शक्तौ जातिवृत्तिं विचारयेत् ॥ १४ ॥

नानाजातिषु सम्भूतां व्रजेत् संप्राप्य न त्यजेत् ।
सर्वशङ्काविनिर्मुक्तः सर्वज्ञः साधकोत्तमः ॥ १५ ॥

शक्तियागविधिं कृत्वा भवेद् भूमौ पुरन्दरः ।
पूजयेदर्द्धरात्रे च निर्जने पशुवर्जिते ॥ १६ ॥

सर्वालङ्कारसुभगो गन्धचन्दनभूषितः ।
आकृष्य विमलां शक्तिं रमणीं वामलोचनाम् ॥ १७ ॥

[1]हारालङ्कारसुभगां घृणालज्जाविवर्जिताम् ।
पराध्यास्तरणे रम्ये स्थापयेदाफलोपरि ॥ १८ ॥

स्थापयेत् सुरया पूर्णं कुम्भं वामे सुवासितम् ।
आनन्दहृदयं कृत्वा सद्यः प्रसन्नमानसः ॥ १९ ॥

गुरुं नत्वा विधानेन अमृतं तद् विचिन्तयेत् ।
मांसं मत्स्यं तथा मुद्रां निधाय पुरतः शिवे ! ॥ २० ॥

---

१. हर–क० ।

अर्घ्यपात्रं तदा वह्निसूर्यसोमामृतं स्मरेत् ।
सिन्दूरेण ललाटेऽस्याः कृत्वा तिलकमद्रिजे ! ॥ २१ ॥
साध्यं च विलिखेत् तत्र मूलविद्याविदर्भितम् ।
गन्धैः पुष्पैस्तथा माल्यैर्भूषयित्वाऽथ तां पुनः ॥ २२ ॥
कृत्वा धूपेन संघोरं दीपेनोज्वाल्य पार्वति ! ।
नाभेश्चरणपर्यन्तं वाग्भवं कूटमुत्तमम् ॥ २३ ॥
हृदयान्नाभिपर्यन्तं कामबीजं प्रविन्यसेत् ।
शिरसो हृद्प्रदेशान्तं तदीयं परिभावयेत् ॥ २४ ॥
सर्वदेवमयं देहं सर्वमन्त्रमयं वपुः ।
चिन्तयेत् साधकः शक्तिं स्नायात् कामेश्वरीं पुरः ॥ २५ ॥
हृदि हस्तं समादाय जपेदष्टोत्तरं शतम् ।
आत्मानं चिन्तयेत् कामं शक्तिं कामेश्वरीं पराम् ॥ २६ ॥
मुहुर्मुहुः पिबेन्मद्यं शक्तिजिह्वाविलोडितम् ।
मन्त्रशुद्धं पिबेन्मद्यं निःशब्दो हास्यवर्जितः ॥ २७ ॥
भोजनान्ते विषं पानं पानान्ते भोजनं विषम् ।
अमृतं तद् विजानीयाद् यदन्नं सुरया सह ॥ २८ ॥
विष्णुना च पुरा पीतं शङ्करेण ततः परम् ।
शक्रेण च तथा पीता पुष्पदन्तेन चैव हि ॥ २९ ॥
शुक्रेण च पुरा पीता दत्तात्रेयेण सेविता ।
श्रीमता बलरामेण समानीताऽथ भूतले ॥ ३० ॥
तस्मादिमां सुरां पुण्यां भक्त्या तां च पिबाम्यहम् ।
पशुपाशविनाशाय दिव्यज्ञानोपलब्धये ॥ ३१ ॥
इदं पवित्रममृतं पिबामि भवभेषजम् ।
मद्यं मांसं तथाऽन्यत्तु यत् किञ्चित् कुलभूषणम् ॥ ३२ ॥

---

१. पाप–ख० ।

शक्त्यै दत्त्वा पुनः शेषमात्मन्येव नियोजयेत् ।
पाययित्वा पुनः पानं तन्मुखादमृतं पिबेत् ॥ ३३ ॥

ततश्च शोधयेद् दीपं दीपो भवति नाऽन्यथा ।
आनन्दोदयपर्यन्तं साधकश्च पिबेन्मधु ॥ ३४ ॥

कर्पूरशकलोन्मिश्रताम्बूलपूरिताननः ।
मदिराघूर्णनयनो दिग्वासाः कुलभूषणः ॥ ३५ ॥

वदेत् सविनयं वाक्यं सिद्धिदे परमेश्वरि ! ।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥ ३६ ॥
इति प्रसादमासाद्य कारयेत् तां दिगम्बरीम् ।
त्रिकोणवद् भगं ज्ञात्वा सर्वसिद्धिप्रदायकम् ॥ ३७ ॥
कूटत्रयात्मकं स्मृत्वा सर्वानन्दमयं स्मरेत् ।
आत्मानं देवतारूपमद्वैतं परिचिन्तयन् ॥ ३८ ॥
पूर्णचन्द्रनिभं वक्त्रं पूर्णेशीं चुम्बनैर्यजेत् ।
जालन्धरं महापीठं स्तनद्वयमुदीरितम् ॥ ३९ ॥
[1]आपीनमूरुयुगलं कामरूपमतः परम् ।
यत्पीठं ब्रह्मणो वक्त्रं गुप्तं सर्वसुखावहम् ॥ ४० ॥
यतो देवाश्च देव्यश्च मुनयश्चैव भावजाः ।
सर्वेऽप्याविर्भवन्त्येते तेन गुप्तं महीतले ॥ ४१ ॥
द्विविधं चैव तत्पीठं गुप्तं व्यक्तं महेश्वरि ! ।
व्यक्ताद् गुप्तं महापुण्यं दुरापं पशुभिः प्रिये ! ॥ ४२ ॥
गुप्तं सर्वत्र देवेशि ! लभ्यते कुलपूजकैः ।
यत्र तत्र यजेद् देवीमुपचारैस्तथाविधैः ॥ ४३ ॥
लिङ्गेनोत्कर्षयेद् योनिं मुखैर्जिह्वामृतं पिबेत् ।
नखदन्तक्षतान्यत्र पुष्पाणि विहितानि च ॥ ४४ ॥

---

१. अपीन–ख० ।

आलिङ्गनं तु कस्तूरीकर्पूरागुरुचन्दनम् ।
चुम्बनं स्तवनं देवि ! मथनं हवनं शिवे ! ॥ ४५ ॥

त्रिभिः कूटैस्त्रिघातं स्यात् त्रिघातैर्जपमेकतः ।
एवं कृत्वा महेशानि ! स च कामेश्वरो भवेत् ॥ ४६ ॥

मद्यं मांसं विना देवि ! कुलपूजां यथाऽऽचरेत् ।
जन्मान्तरसहस्रस्य [1]सुकृतं तस्य नश्यति ॥ ४७ ॥

निवृत्तिकाले च पुनर्भावपूर्णामृतै[2]र्निजम् ।
मुखं बिन्दुवदाकारं तदधः कुचयुग्मकम् ॥ ४८ ॥

सर्वविद्यामृतैः पूर्णं सर्ववाग्विभवप्रदम् ।
सर्वार्थसाधकं देवि ! सर्वरञ्जनकारणम् ॥ ४९ ॥

तदधः परमेशानि स्वदेहं परिचिन्तयेत् ।
सर्वज्ञानसुसम्पन्नं सर्ववश्यप्रदायकम् ॥ ५० ॥

ध्यात्वा यष्ट्वाऽथवा देवि ! भवेत् कामकलान्वितः ।
कुलस्य विविधं रूपं ज्ञात्वा तत् परिचिन्त्य च ॥ ५१ ॥

कुलीनो जायते यस्मात् कथं तत् तु प्रकाशयेत् ।
एवमभ्यासयोगेन सिद्धो भवति नान्यथा ॥ ५२ ॥

मासेनाऽऽकर्षणीं सिद्धिं त्रिमासैर्वाक्पतिर्भवेत् ।
एवं चतुष्टये मासि भवेद् दिक्पालगोचरः ॥ ५३ ॥

पञ्चमे पञ्चकामः स्यात् षष्ठे रुद्रो न संशयः ।
चिन्तनं योषिता सार्द्धं पूजनं च तथैव हि ॥ ५४ ॥

तया विरहितो मन्त्री न सिध्यति कदाचन ।
भावयेद् योषिता सार्द्धं जुहुयाच्च तथैव हि ॥ ५५ ॥

---

१. कुकृतं–ख० ।
२. पूर्णामृते–ख० ।

तया विरहितो मन्त्री न सिध्यति कदाचन ।
स्त्रियो देवाः स्त्रियः प्राणाः स्त्रिय एव विभूषणम् ॥ ५६ ॥

स्त्रीसङ्गिना सदा भाव्यमन्यथा स्वस्त्रिया अपि ।
रात्रौ पर्यटनं कार्यं रात्रौ च शक्तिपूजनम् ॥ ५७ ॥

रात्रौ कुलकथालापं रात्रौ चान्यत् समापयेत् ।
प्रातः स्नानं ततो देवि ! देवान् पितॄन् ऋषींस्तथा ॥ ५८ ॥

तर्पयित्वा यजेद् देवीमुपचारैर्यथाविधि ।
पूर्वाह्णविहितां पूजां गृह्णाति परदेवता ॥ ५९ ॥

मध्याह्नविहितां देवि ! गृह्णन्ति योगिनीगणाः ।
अपराह्णकृता[1] पूजा नीयते यक्षराक्षसैः ॥ ६० ॥

पूर्वाह्णं दीयते यत् तु अमृतं समुदीरितम् ।
मध्याह्ने तत् तु देवेशि ! शोणितं च परं स्मृतम् ॥ ६१ ॥

तस्मात् सर्वप्रयत्नेन बाह्यपूजां महेश्वरि ! ।
प्रातरेव सदा कुर्याद् गृहस्थो गृहिणीयुतः ॥ ६२ ॥

॥ इति गन्धर्वतन्त्रे पञ्चत्रिंशत्तमः पटलः ॥ ३५ ॥



१. कृत्वा–ख० ।

# अथ षट्त्रिंशः पटलः

ईश्वर उवाच

शक्त्यन्तरं प्रवक्ष्यामि सविकल्पस्य सुन्दरि ! ।
स्वशक्त्या परशक्तिं च यथा नयति साधकः ॥ १ ॥

अदीक्षिताङ्गनासङ्गात् सिद्धिहानिर्भवेत् शिवे ! ।
तस्मात् सर्वप्रयत्नेन दीक्षयेन्निजकौलिनीम् ॥ २ ॥

गुरुसेवैकमात्रेण यथा सिद्धिर्भवेन्नृणाम् ।
महापद्मवनध्यानाद् यथा सिद्धीश्वरो भवेत् ॥ ३ ॥

त्रिपुराध्यानमात्रेण जीवन्मुक्तो यथा भवेत् ।
गङ्गास्मरणमात्रेण निष्पापो जायते यथा ॥ ४ ॥

योषित्स्मरणमात्रेण तथेयं वरदायिनी ।
न स्नानं न तथा पूजा न ध्यानं न्यासमेव वा ॥ ५ ॥

मन्त्रस्मरणमात्रेण योषितां वरदायिनी ।
निजकान्तां समानीय सुशीलां सुयशस्विनीम् ॥ ६ ॥

कुलभक्तं गुरुं प्राप्य दीक्षयेत् कुलविद्यया ।
दीक्षयित्वा गुरुस्तां तु निजपुत्रीवदाचरेत् ॥ ७ ॥

अद्यप्रभृति पुत्रि ! त्वं कुलपूजारता भव ।
यथोपदिष्टविधिना स्वामिवश्यं समानय ॥ ८ ॥

हररूपस्य त्वत्पत्युर्नान्यं मनसापि संस्मर ।
इत्याज्ञां कुलगुरोर्लब्ध्वा प्रणमेद् दण्डवद् भुवि ॥ ९ ॥

त्वत्पदाम्भोरुहच्छायां मूर्ध्नि देहि यशोधन ! ।
दीक्षिता न च योषा चेत् कथं स्यात् कुलपूजनम् ॥ १० ॥

कुलपूजा न चेद् देवि ! कुलविद्या पराङ्मुखी ।
दिवसं प्राप्य भौमं च निर्जने पशुवर्जिते ॥ ११ ॥
अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोरपि ।
आनीय यत्नतः शुद्धं सिन्दूरं च मनोहरम् ॥ १२ ॥
तेन चक्रं समालिख्य सुरेखं परमोज्ज्वलम् ।
षट्कोणं पद्मगर्भस्थं शरावे दाहवर्जिते ॥ १३ ॥
तन्मध्ये प्रतिमां देवि ! सिन्दूरेण समालिखेत् ।
कपोले साध्यमालिख्य मूलमन्त्रविदर्भितम् ॥ १४ ॥
कामबीजं ततो देवि ! लिखेत् सर्वाङ्गसन्धिषु ।
पुष्पासवं मुखे दत्त्वा वसन्तसुन्दरीं जपेत् ॥ १५ ॥
काममिन्द्रं तुरीयं च बिन्दुनादसमन्वितम् ।
बीजं तद् भुवनेशान्या द्वादशस्वरबिन्दुकम् ॥ १६ ॥
ततस्तु नीलसुभगे हिलि हिलि ततः परम् ।
विच्चे स्वाहापदं दद्याद् विद्या वसन्तसुन्दरी ॥ १७ ॥
ध्यानं कृत्वा तु सुन्दर्या जीवन्यासं च कारयेत् ।
संविदानन्दहृदयः साधकः स्थिरमानसः ॥ १८ ॥
संविदासवयोर्मध्ये संविदेव गरीयसी ।
संविदा योजयेद् देवि ! स्वयं चापि कुलेषु च ॥ १९ ॥
ताम्बूलपूरितमुखो रक्ताभरणभूषितः ।
रक्तासनोपविष्टस्तु स्वकुलं तूलिकोपरि ॥ २० ॥
वामभागे समासीनं रक्तवस्त्रविभूषितम् ।
सर्वभृङ्गारवेषाढ्यं स्फुरच्चकितलोचनम् ॥ २१ ॥
जितामितकुचद्वन्द्वविशालकरिकुम्भकम् ।
तत् स्कन्धे बाहुमाधाय भङ्ग्या धृतकुचाञ्चले ॥ २२ ॥

प्रतिमायां ततो देवि ! पूर्ववन्न्यासमाचरेत् ।
पूर्वोक्तविधिना पूजा कर्तव्या वीरवन्दिते ॥ २३ ॥

ताम्बूलपूरितमुखं कुलं तदभिसंज्ञितम् ।
ध्यानयोगेन मनसा लक्षमेकं तदा जपेत् ॥ २४ ॥

शतयोजनसंस्थानां नदीपर्वतमध्यगाम् ।
द्वीपान्तरसहस्रेषु रक्षितां निगडादिभिः ॥ २५ ॥

पयोधरभरक्षुब्धगमनां श्यामलोचनाम् ।
नितम्बबिम्बविध्वस्तां गुरुजघनमण्डलाम् ॥ २६ ॥

साधकांक्षितहृदयां ( ? ) विवरान्तःप्रसर्पिणीम् ।
कवाटलौहसम्बद्धप्राकारविविधान्तरे ॥ २७ ॥

कुलाकुलजपं कृत्वा समानयति साधकः ।
होमान्तरं प्रवक्ष्यामि येन ब्रह्ममयो भवेत् ॥ २८ ॥

शिवशक्तिमयं विद्धि चेतनाचेतनं जगत् ।
मम ज्ञानप्रभावेण दृष्टं यत् कथयामि ते ॥ २९ ॥

निर्जने शुद्धदेशे च शुद्धनाडीगणः शिवे ! ।
सम आसन आसीनः समकायो यथासुखम् ॥ ३० ॥

पद्मासनसमासीनः साधकः शुद्धचेतनः ।
प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः ॥ ३१ ॥

हस्तावाच्छाद्य आधारयोगदण्डावलम्बिनौ ।
नयने नासिकाप्रान्ते निमेषोन्मेषवर्जिते ॥ ३२ ॥

भ्रुवोर्मध्ये स्थितिश्चात्मा दन्तैर्दन्तांस्तु संस्पृशेत् ।
ओष्ठेन चाधरं चैव जिह्वया चाथ तालुकम् ॥ ३३ ॥

एषा तु सुन्दरी मुद्रा सुन्दरी मोददायिनी ।
सहस्रारे परे पद्मे आधारोत्थेन वायुना ॥ ३४ ॥

कुलदीपशिखाकारे संक्षोभ्यामृतमण्डलम् ।
स्वधाधारारसैर्भूयः पतितां मूलपङ्कजे ॥ ३५ ॥

एवं च सप्तधा कुर्याद् देवीसान्निध्यहेतवे ।
मूलेन ध्यानयोगेन स्मृत्वा ब्रह्ममयीं पराम् ॥ ३६ ॥

हृदये पद्ममध्ये तु बाणलिङ्गे तु तेजसि ।
तत्राद्यां पूजयेद् देवीं हृदये कामरूपिणीम् ॥ ३७ ॥

पूरकेण समावाह्य संस्थाप्य कुम्भकेन तु ।
देहचक्रं समापाद्य दद्यात् पाद्यादिकं मुदा ॥ ३८ ॥

कुण्डलीपात्रसंस्थेन परमामृतवारिणा ।
पाद्यं चरणयोर्दद्यात् पुनश्चार्घ्यं प्रदापयेत् ॥ ३९ ॥

सहस्रदलभृङ्गा या लूलिता लुलिताच्युतम् ।
परमामृतपानीयं दद्यादाचमनं मुखे ॥ ४० ॥

षट्त्रिंशत्तत्त्वरूपं तु गन्धं दद्याद् विलक्षणः ।
अहिंसा परमं पुण्यं पुण्यमस्तेयमेव च ॥ ४१ ॥

दयापुष्पं क्षमापुष्पं पुष्पमिन्द्रियनिग्रहम् ।
अमोहं चाप्यमात्सर्यमद्वेषं च तथैव च ॥ ४२ ॥

अरागं च तथा सत्यं पुष्पाण्येवं विदुर्बुधाः ।
एतानि भावपुष्पाणि सदैव विनिवेदयेत् ॥ ४३ ॥

वायुं च धूपकं दद्यात् तेजो दीपं निवेदयेत् ।
स्वराम्बुधिं तथा दद्याद् दद्याच्च मांसपर्वतम् ॥ ४४ ॥

सूर्यं च दर्पणं दद्याच्चन्द्रं च छत्रमुत्तमम् ।
आनन्दाभरणं दद्यादम्बरं चामरं तथा ॥ ४५ ॥

अनाहतध्वनिमयीं घण्टामेतां निवेदयेत् ।
ततश्च साधकश्रेष्ठः[1] शृङ्गारादिरसोद्भवैः ॥ ४६ ॥

---

१. साधकश्रेष्ठम्–ख० ।

नृत्यगीतैश्च वाद्यैश्च तोषयेत् परमेश्वरीम् ।
ध्वनिना शब्दभेदेन तेजआकाशसङ्कुले ॥ ४७ ॥
सहस्रदलमध्ये तु चिन्तयेत् सुन्दरीं पराम् ।
भैरवानन्दलिङ्गं तु तन्मध्ये योनिसंयुतम् ॥ ४८ ॥
एकीकार्यं तयोः कृत्वा अमृतं श्रावयेत् ततः ।
जिह्वया जलसंयोगात् पिबेत् तदमृतं तदा ॥ ४९ ॥
योगिभिः पीयते तत्तु न मद्यं गौडपौष्टिकम् ।
पृथिव्यन्तर्गता आपस्तदन्तः शून्यमद्रिजे ! ॥ ५० ॥
शून्यमध्ये वसेद् वायुर्वाय्वन्तर्ध्वनिरीश्वरि ! ।
तदन्तर्नाद एवासौ नादस्तद्बिन्दुरीश्वरः ॥ ५१ ॥
तन्मध्ये तु परं ज्योतिः शिखा सूक्ष्मा परात्परा ।
विद्युच्चानलसङ्काशा सहस्रादित्यभास्वरा ॥ ५२ ॥
सुनयना चातिसूक्ष्मा च निराकारा निरालया ।
परानन्दमयी पूर्णा सा भवेत् सुन्दरी परा ॥ ५३ ॥
पार्थिवे पार्थिवानां च लयं कार्यं समाधिना ।
अप्सु चापोलयः कार्यः शून्ये शून्यस्य वै तथा ॥ ५४ ॥
लयो वायौ च वायूनां ध्वनौ ध्वनिं समर्पयेत् ।
ज्योतिषां च लयं तत्र ब्रह्मण्येव मनोलयः ॥ ५५ ॥
मनः करोति पापानि मनः पापेषु लिप्यते ।
मनस्युन्मनीभूते च धर्मोऽपि न च पातकम् ॥ ५६ ॥
एवं भावनया हृष्टः परमानन्दनिर्भरः ।
संसारसागरं धीरो गोष्पदीकुरुते शिवे ! ।
भक्तिमुक्ती करे तस्य मम तुल्यो भवेद् भुवि ॥ ५७ ॥

श्रीदेवी उवाच

पूजा ज्ञानमयी प्रोक्ता न तु होमस्तु तादृशः ॥

ईश्वर उवाच

तद् रूपं विद्धि कुण्डस्य बिन्दुत्रिवलयात्मकम् ।
आनन्दमेखलारम्यं मात्रायोनिविभूषितम् ॥ ५८ ॥

तद् ब्रह्म परमं ध्यात्वा सर्वज्ञानविजृम्भिते ।
दीपितेऽग्नौ हुनेद् देवि ! प्रपञ्चहविरुत्तमम् ॥ ५९ ॥

शब्दाख्यं मातृकारूपमक्षरं तु विराजितम् ।
अक्षरं तु हुतं चात्र निःशब्दं ब्रह्म जायते ॥ ६० ॥

पुण्यपापे हविर्देवि ! कृत्याकृत्ये हविः शिवे ।
सङ्कल्पश्च विकल्पश्च धर्माधर्मौ हविस्तथा ॥ ६१ ॥

धर्माधर्महविर्दीप्ते आत्माग्नौ मनसा स्रुचा ।
सुषुम्नावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ॥ ६२ ॥

प्रकाशाकाशहस्ताभ्यामवलोक्योन्मनास्रुचा[1] ।
धर्माधर्मकलास्नेहपूर्णं वह्निं जुहोम्यहम् ॥ ६३ ॥

वह्निजायान्वितं प्रान्ते मन्त्राभ्यां होमयेत् शिवे ! ।
निष्प्रपञ्चो यदा देवि ! जायते मन्त्रवित्तमः ।
तदा स चिन्मयः साक्षात् केवलं ब्रह्मसाधकः ॥ ६४ ॥

॥ इति गन्धर्वतन्त्रे षट्त्रिंशः पटलः ॥ ३६ ॥



१. श्रुचा–क० ख० ।

# अथ सप्तत्रिंशः पटलः

देवी उवाच

परदारपरिष्वङ्गात् तथा नीचाभिसङ्गमात् ।
प्रतिलोमाभिसङ्गाच्च पातकी जायते नरः ॥ १ ॥

शक्त्या शक्तः कथं देव उक्तः स्यात् परमेश्वरः ।
वेदशास्त्रपुराणेषु सैव मुक्तिविरोधिनी ॥ २ ॥

शक्तिर्हि जगतो मूलं सैव जगत्स्वरूपिणी ।
स्त्रियं त्यक्त्वा जगत् त्यक्तं जगत् त्यक्त्वा सुखी भवेत् ॥ ३ ॥

सर्वाः सर्वत्र देवेश ! गर्हिताः सर्वकर्मसु ।
कथं वा तदुपयोग्यं स्यादिति वेदविदां स्थितिः ॥ ४ ॥

ईश्वर उवाच

इदं पुनर्महेशानि ! पुरैव प्रतिपादितम् ।
सूक्ष्मा गतिस्तु धर्मस्य मूढैस्तन्नावबुध्यते ॥ ५ ॥

ज्ञानाद्धि निर्मलं विश्वमज्ञानात् समलं प्रिये ! ।
वह्निरयं महादेवि ! सर्वगः सर्वभोजनः ॥ ६ ॥

स कथं देवतायज्ञे वेदविधिनिर्देशतः ।
जलं चापि तथा प्रोक्तं तत् पूतं कथमद्रिजे ! ॥ ७ ॥

भृङ्गोपभुक्तपुष्पाणि मक्षिकोच्छिष्टमिदं मधु ।
दूषणीयं सुरापानं कथं यज्ञे निदेशितम् ॥ ८ ॥

गोरसं च गवां सारं मलं च बीजसम्भवम् ।
कथं तद् विहितं दैवे पैत्रे कर्मणि पार्वति ! ॥ ९ ॥

बीजनाशादनेकस्य विनाशं विद्धि सुव्रते ! ।
जायास्वपि[1] च सर्वासु तथा जातो जनिष्यति ॥ १० ॥
स सकृद् वैदिकैर्मन्त्रैः पूतो भवति पावकः ।
वैदिकैस्तान्त्रिकैः शुद्धा पवित्रेयं तथा सुरा ॥ ११ ॥
दूषणं नास्ति देवेशि ! महाविद्याप्रसाधने ।
यस्मिन् यत्र च आचारस्तत्र धर्मस्तु तादृशः ॥ १२ ॥
अत्र भ्रमो महान् दोषस्तस्माद् भ्रान्तिं त्यज प्रिये ! ।
अद्वैतभावरहितो द्वन्द्वचित्तोऽथ कामुकः ॥ १३ ॥
देवताभावरहितो लौल्यभावेन वा पुनः ।
परशक्तिं समागच्छेत् स भवेद् गुरुतल्पगः ॥ १४ ॥
संसाराम्बुनिधेः पारं करोति विधिना च सा ।
नरकाम्बुनिधौ शक्तिः क्षिप्यतेऽविधिना शिवे ! ॥ १५ ॥
विना शक्तिं विना मद्यमद्वैतभावनां विना ।
महाविद्याक्रमं यद् यद् यज्ञं घृतविवर्जितम् ॥ १६ ॥
द्वैतभावे महेशानि ! वर्णजातिविकल्पना ।
अद्वैतभावमापन्ने लीनो मनसि ब्रह्मणि ॥ १७ ॥
कः कामः को भवेदिन्दुः को ब्रह्मा को जनार्दनः ।
को देवः कोऽसुरो यक्षः पिशाचः कोऽपरः शिवे ! ॥ १८ ॥
को द्विजः कोऽथवा शूद्रः को म्लेच्छः कोऽधमः शिवे ! ।
किं रूपं किं विरूपं वा को रोगी कोऽप्यनामयः ॥ १९ ॥
किं च मेध्यममेध्यं वा किं वा वस्त्वप्यवस्तु च ।
किं मित्रं किममित्रश्च को वध्योऽवध्य एव वा ॥ २० ॥
किं च भक्ष्यमभक्ष्यं वा किं वा तव ममेति च ।
अविद्याकल्पितं चैतद् विद्यया छिन्धि संशयम् ॥ २१ ॥

---

१. 'अपि' क० नास्ति ।

स्त्रियं ममतरां विद्यामिति जानीहि पार्वति ! ।
एकाया बहुधा कृत्यं एकाया बहुविग्रहम् ॥ २२ ॥

बहुरूपाणि देहांश्च एकाया एव निश्चितम् ।
अद्वैतानन्दसन्दोहो विद्ययैव प्रकाश्यते ॥ २३ ॥

शक्तियोगेषु यन्मांसं तन्मांसममृतोपमम् ।
पशुघातं तदर्थं तु तद् विना ब्रह्महा भवेत् ॥ २४ ॥

द्वैतान् पशून् विजानीयादद्वैतान् ब्राह्मणान् विदुः ।
तन्त्रण्यस्तेयपापेन भुनक्ति बहु किल्बिषम् ॥ २५ ॥

मद्यपानं तु यज्ञेषु तद् विना पातकी भवेत् ।
पवित्रं सकलं भद्रे ! वासना यद्यकुत्सिता ॥ २६ ॥

ब्रह्मादिस्तम्बपर्यन्तं जगत् स्थावरजङ्गमम् ।
शरीरं दृश्यते यद् यत् तत् कर्म प्राकृतं शिवे ! ॥ २७ ॥

प्रकृत्या क्रियते कर्म साक्षी पुरुष उच्यते ।
तन्मायामोहितः सोऽथ कर्ताऽहमिति मन्यते ॥ २८ ॥

न कर्ता पुरुषो देवि ! कर्त्री प्रकृतिरुच्यते ।
पुरुषे करणं नास्ति निर्गुणत्वात् सदा प्रिये ! ॥ २९ ॥

तथा कारणकर्तृत्वं सगुणायां प्रतिष्ठितम् ।
यदिदं पुरुषे देवि ! कर्तृत्वमुपलक्ष्यते ॥ ३० ॥

स्फाटिके निर्मले देवि जपारागमिवानघे ! ।
अहमाकाशवत् सर्वं बहिरन्तर्गतोऽच्युतः ॥ ३१ ॥

सदा सर्वसमः शुद्धो निःसङ्गो निर्मलोऽचलः ।
सत्यं ज्ञानमनन्तं यत् परं ब्रह्माहमेव तत् ॥ ३२ ॥

ब्रह्मण्याधाय चित्तं तु कुर्वन् कर्म न लिप्यते ।
उभाभ्यामपि शक्यं स्यात् ततुं भवपयोनिधिम् ॥ ३३ ॥

दक्षिणेनापि कौलेन दुःखेनापि सुखेन च।
कुम्भसन्तरणैस्तर्तुं पोतवर्येण वाऽम्बुधिम् ॥ ३४ ॥
तस्मादिमन्तरः (?) कौलो दक्षिणादपि सुव्रते!।
कुलज्ञानं विना देवि! नैव मुक्तिः कदाचन ॥ ३५ ॥
माया बलवती ह्येषा शक्तेर्गुणमयी तु या।
प्रकृतिर्गीयते सा तु सांख्ययोगविशारदैः ॥ ३६ ॥
विद्याविद्येति सा प्रोक्ता वेदतत्त्वार्थदर्शिभिः।
महाविद्येति सा कैश्चिन्महामायेति चापरैः ॥ ३७ ॥
शक्तिः सा सर्वभूतानामिति[1] कैश्चिदुपास्यते।
सर्वे तां समुपासन्ते ब्रह्मविष्णुमहेश्वराः ॥ ३८ ॥
तस्या एव न मे भेदो विष्णोर्ब्रह्मण एव वा।
योग-भोग-तपःक्लेशैरानम्रैरभिनन्दिता ॥ ३९ ॥
आराधिता सैव नृणां भोगस्वर्गापवर्गदा।
परितोष्य विधानेन येन तेनैव साधकः ॥ ४० ॥
संसारनिगडैर्बद्धः पुमान् विमुच्यते तया।
तस्यास्तोषं विना देवि! विमुक्तिर्नैव विद्यते ॥ ४१ ॥
तन्निगृहीतचित्तानां पुंसां पुरुषपूजिते।
अतस्तां च प्रयत्नेन पुरुषा मुक्तिलिप्सवः ॥ ४२ ॥
समाश्रयन्ति योगाद्यैर्नित्यानन्दस्वरूपिणीम्।
ब्रह्मा विष्णुस्तथा चाहं आत्मवत् समुपास्महे ॥ ४३ ॥
तपःक्लेशैश्च तां देवि! पशुभावे स्थितो विधिः।
सन्तोष्य परया भक्त्या सावित्रीं वेदमातरम् ॥ ४४ ॥
इच्छाशक्तिं च वागीशीं लब्ध्वा सृष्टिमचीकरत्।
तनयां जगृहे मोहाद् ब्रह्मा पशुरुदारधीः ॥ ४५ ॥

---

१. 'इति'-ख० नास्ति।

तज्जुगुप्सितमन्यायमद्यापि न निवर्तते ।
परशक्ति पशुस्तस्मान्मनसापि न संस्मरेत् ॥ ४६ ॥
तद्भावमाश्रिता विप्रास्तामेव समुपासते ।
मित्राणां सर्वभूतानां तेषां मद्यं घृतं पयः ॥ ४७ ॥
अपूपं पिष्टकं मांसं गृह्णीयुः शक्तिदीषितम् ।
अपि वा संविदासक्ता भवेयुः शक्तिमाश्रिताः ॥ ४८ ॥
दिव्यभावस्थितो विष्णुर्जगत्पालनरूपिणीम् ।
मधुमैरेयभोगाद्यैः सन्तोष्याऽऽनन्दरूपिणीम् ॥ ४९ ॥
ज्ञानशक्तिमयीं लक्ष्मीं जगदाधाररूपिणीम् ।
लब्ध्वा तु जगतः सोऽयं पालकोऽभून्निराकुलः ॥ ५० ॥
तद्भावमाश्रिता भूपास्तथैव तामुपासते ।
अथ देवाश्च दैत्याश्च मुनयो मानुषाः परे ॥ ५१ ॥
विष्णुमेव हि सततं भजन्ते भावसिद्धये ।
स च भावविशुद्धात्मा तद्भावं तु जुगोप ह ॥ ५२ ॥
ये निन्दन्ति न तद्भावं गोपयन्ति च सर्वदा ।
ते वै प्रियतमाः सर्वे शङ्खचक्रगदाभृतः ॥ ५३ ॥
तद्भावाद् विमुखान् कर्तुं लोकान् लोकेश्वरो हरिः ।
इदमादिष्टवान् देवि ! मामेव जगदीश्वरः ॥ ५४ ॥

भगवानुवाच

पशुभावं पुरस्कुर्वन् सद्भावं च विनिन्दय ।
सर्वे दिव्या भविष्यन्ति सद्भावे हि प्रकाशिते ।
आगमैः कल्पितैर्देव सद्भावाद् विमुखान् कुरु ॥ ५५ ॥

ईश्वर उवाच

तदाज्ञां शिरसि कृत्वा विष्णोरमिततेजसः ।
तथैवाहं महेशानि ! कृतवान् तन्त्रविस्तरम् ॥ ५६ ॥

गोपयन् दिव्यभावं च पुरस्कुर्वन् पशोर्मतम् ।
अत एव महेशानि ! वैष्णवे दर्शने खलु ॥ ५७ ॥

पूजितः पशुभावश्च शक्तिनिन्दा च विस्मृता ।
या शक्तिः सर्वभूतानां द्विधा भवति सा पुनः ॥ ५८ ॥

स्थूलरूपा च सा देवी सूक्ष्मरूपा च पार्वति ! ।
स्थूलरूपेण सा देवी सर्वमेतज्जगत्त्रयम् ॥ ५९ ॥

मोहयित्वा जनान् सर्वान् बहुरूपान् सुखेच्छया ।
संस्थिता परमेशानि ! लीलाकलितविग्रहा ॥ ६० ॥

स्वभावतो न जानन्ति तन्मायामोहिता जनाः ।
केचित् तां तु प्रहाराद्यैः कटूक्तिभाषणैस्तथा ॥ ६१ ॥

ताडयन्ति च संमूढा जना निरयगामिनः ।
केचित् तां भूषणाच्छादैः सम्भोगैरपि सेवया ॥ ६२ ॥

पूजयन्ति हि ते धीराश्चतुर्वर्गप्रसाधकाः ।
ते वा त्रिप्रियकर्त्तारः पतिष्यन्ति सुनिश्चितम् ॥ ६३ ॥

सूक्ष्मरूपां च तां विद्धि सर्वेषामन्तरस्थिताम् ।
त्रैलोक्यजननीं देवीं मुख्येन ब्रह्मवर्त्मना ॥ ६४ ॥

योजयित्वा परानन्दपरमानन्दरूपिणीम् ।
तयोर्योगाद् यदमृतं तर्पयेत् तेन योगिनीम् ॥ ६५ ॥

प्राणधारणया देवि ! शुद्धनाडीमनः सुधीः ।
प्राणान् प्रवेशयेन्नाड्या तन्मुखे च तान् हुनेन् ॥ ६६ ॥

तद्वक्त्रे वायुना भिन्ने याति चोर्ध्वं परेश्वरी ।
तस्मादाकृष्ण तद् वायुं कुम्भयित्वा तु सञ्चयेत् ॥ ६७ ॥

सञ्चितैर्वायुभिस्तां च कुलवर्त्मविहारिणीम् ।
सहस्रारे महापद्मे सितदीधितिमण्डले ॥ ६८ ॥

समुन्नीय परे हंसे तयोरैक्यधिया स्मरेत् ।
होमाद्यं विहितं तत्र चन्द्रसूर्यात्मकं तयोः ॥ ६९ ॥
स्रुक्स्रुवौ च समादाय जुहुयादव्ययं हरिः ।
मूलाधारे परे चक्रे शक्तिर्या कुण्डली शुभा ॥ ७० ॥
तद्भ्रमावर्ततोयं च बहिर्याति दिने दिने ।
दिनेशाङ्गुलिमानेन तदर्द्धं चोपवासतः ॥ ७१ ॥
द्विगुणं रतिकाले स्यात् त्रिगुणं भोजनाद् बहिः ।
अत ऊर्ध्वं वहेद् देवि ! त्रिदिनं यदि मारुतः ॥ ७२ ॥
न्यूनं वा तदधः प्राणाः शरीरं परिमुञ्चति ।
यावत्कालं वहेदेतद् वायुश्च जगदीश्वरः ॥ ७३ ॥
तावच्चलति देहोऽयं तद् विना चाचलः स ह ।
निश्चलं पवनं कृत्वा योगी भवति साधकः ॥ ७४ ॥
वायुनाऽऽनीयते बाह्ये मनस्तु प्राणिना शिवे ।
वायौ च सुस्थिरीभूते मनोऽपि स्थिरतां वहेत् ॥ ७५ ॥
तयोरद्वैतभावे तु निश्चलत्वं गते तयोः ।
देहं निरामयं विद्धि यथाकामविलासिनम् ॥ ७६ ॥
इह स्थित्वा यथाकामं सन्त्यज्य च कलेवरम् ।
अद्वैतभावमापन्नो न स पुनरिहाऽऽव्रजेत् ॥ ७७ ॥
प्रसङ्गात् कथिता देवि ! देहसिद्धिरनुत्तमा ।
येन तेन विधानेन परितुष्टा महेश्वरी ॥ ७८ ॥
संसारनिगडैर्बद्धः पुमान् विमुच्यते तया ।
तस्यास्तोषं विना देवि ! विमुक्तिर्नैव विद्यते ।
तन्निगृहीतचित्तस्य पुरुषस्य महेश्वरि ! ॥ ७९ ॥

॥ इति गन्धर्वतन्त्रे सप्तत्रिंशः पटलः ॥ ३७ ॥

# अथ अष्टात्रिंशः पटलः

ईश्वर उवाच

बहुकालपूजितैस्तु तुष्टा स्यात् सूक्ष्मरूपिणी ।
यथा तुष्यति भोगेन तपोयोगैश्च न तथा ॥ १ ॥

अतो भोगेन तां तोष्य तदा मुक्तो भवेत् सुखी ।
मया चापि पुरा देवि ! सेविता योगवर्त्मना ॥ २ ॥

परितुष्टा न मे देवी सूक्ष्मरूपान्तरस्थिता ।
शक्तिहीनं च मां वीक्ष्य वनिताविमुखं[1] तथा ॥ ३ ॥

विषण्णवदनो ब्रह्मा हृदयेन विदूयता ।
चिन्तावशमुपाविष्टो ब्रह्मा लोकपितामहः ॥ ४ ॥

मामासाद्य तथा विष्णुं ययौ क्षीरपयोनिधिम् ।
क्षीरोदस्योत्तरे तीरे रत्नद्वीपे सुशोभिते ॥ ५ ॥

तत्र स्थित्वाऽऽवयोर्मध्ये ब्रह्मा ध्यानपरोऽभवत् ।
हृत्पुण्डरीकमध्यस्थे देवीपादसरोरुहे ॥ ६ ॥

मनो निधाय योगात्मा देवीसूक्तं परं जगौ ।
व्यतीते बहुकालेऽथ देवी त्रिभुवनेश्वरी ॥ ७ ॥

शूलपाशधरा देवी किरीटादिविमण्डिता ।
चतुर्भुजा त्रिनेत्रा च बालार्ककिरणारुणा ॥ ८ ॥

दर्शयामास स्वं रूपं तस्य तुष्टा तदा शिवे ! ।
प्रसन्नां तां समालोक्य स्रष्टा सर्वजगद्गुरुः ।
भक्त्या विनम्रवदनो तुष्टाव च ननाम च ॥ ९ ॥

---

१. विमुखां–क० ।

ब्रह्मा उवाच

त्वं सावित्री च वाग्देवी त्वं श्रीः सर्वजगत्प्रसूः ।
स्वाहा त्वं देवयज्ञेषु पितृयज्ञेषु च स्वधा ॥ १० ॥
स्वधा त्वं देवलोकेषु हविस्त्वं खलु मानुषे ।
त्वं हि विद्याश्च मन्त्राश्च वेदास्त्वं हि सुरात्मिका ॥ ११ ॥
अर्द्धमात्रात्मिका त्वं वै यानुच्चार्या विशेषतः ।
त्वमेव परमा शक्तिर्जगत्कारणरूपिणी ॥ १२ ॥
विचार्याऽष्टाङ्गयोगेन लक्षणाद्यैर्मुहुर्मुहुः ।
यत् स्थिरीक्रियते देवि ! तत् ते रूपं सनातनम् ॥ १३ ॥
यद्व्यक्तमनिर्देश्यं निष्कलं[1] परमात्मनः ।
रूपं तवैव तत् सूक्ष्मं सकलं च जगन्मयि ! ॥ १४ ॥
या सृष्टिशक्तिरस्माकं स्थितिशक्तिस्तथा हरेः ।
अन्तशक्तिस्तथेशस्य सा त्वं शक्तिः सनातनी ॥ १५ ॥
त्वं जातवेदोगता शक्तिरुग्रा
त्वं दाहिका सूर्यकरस्य शक्तिः ।
आह्लादिका त्वं बहु चन्द्रिकाया-
स्तां त्वामहं नौमि नमामि चाम्बिकाम् ॥ १६ ॥
योषा योषित्प्रियाणां त्वं विद्या त्वं चोर्ध्वरेतसाम् ।
वाञ्छा त्वं सर्वजगतां माया च त्वं तथा हरेः ॥ १७ ॥
यया प्रकाश्यते ब्रह्म सा त्वं नित्या प्रसीद मे ।
विश्वादिस्त्वमनादिस्त्वं विश्वयोनिरयोनिजा ॥ १८ ॥
अनन्तात् सर्वजगतस्त्वमेवैकान्तरूपिणी ।
एका त्वं त्रिविधा भूत्वा मोक्षसंहारकारिणी ॥ १९ ॥

---

१. निष्फलम्–ख० ।

संसारसागरोत्तारतरणिः सुखमोक्षदे ।
त्वं नित्या त्वमनित्या च त्वं चराचरमोहिनी ॥ २० ॥

नमस्ते जगतां मातः ! सृष्टिरूपे सनातनि ।
स्थितिरूपे नमस्तुभ्यं नमः संहाररूपिणि ॥ २१ ॥

एवं संस्तूयमाना सा योगनिद्रा विरिञ्चिना ।
आविर्बभूव प्रत्यक्षं ब्रह्मणः परमात्मनः ॥ २२ ॥

देवी उवाच—

परितुष्टास्मि लोकेश स्तोत्रेणानेन ते विभो ! ।
वरं वृणीष्व भद्रं मे यत् ते मनसि वर्तते ॥ २३ ॥

ईश्वर उवाच—

मां समीक्ष्य वरं वव्रे जगत्संहारकारकम् ।
सृष्टिशक्ति मयि त्वं च विष्णौ पालनरूपिणीम् ॥ २४ ॥

संहारशक्तिमीशाने देहि मातर्नमोऽस्तु ते ।
एकश्चरति भूतेशो न द्वितीयां समीहते ।
तथा मोहय सर्वेशं दाराः स्वयं जिघृक्षति ॥ २५ ॥

देवी उवाच—

यदुक्तं भवता ब्रह्मन् ! तच्च सत्यं न चान्यथा ।
मोहयित्वाऽहमीशानं सतीरूपेण शङ्करम् ॥ २६ ॥

संहरिष्यामि लोकेश ! जगदेतच्चराचरम् ।
तत्रापि तां तनुं त्यक्त्वा सम्भविष्यामि पार्वती ॥ २७ ॥

इति तस्मै समाभाष्य ब्रह्मणे परमेश्वरी ।
वीक्ष्यमाणा जगत्स्रष्ट्रा तत्रैवान्तरधीयत ॥ २८ ॥

तस्यामन्तर्हितायां च ब्रह्मा लोकपितामहः ।
कृताञ्जलिपुटो भूत्वा विष्णुमाह प्रजापतिः ॥ २९ ॥

संहारकरणे योग्यं वीरभावं च यद् भवेत् ।
तन्निदेशे महादेवे विष्णो लोकेषु दुर्लभम् ॥ ३० ॥

इति तद् वचनं श्रुत्वा भगवान् हरिरीश्वरः ।
आदिष्टवान् मयि भद्रे वीरभावं सुदुर्लभम् ॥ ३१ ॥

वीरभावे स्थितः सोऽहं मातस्त्वां समुपास्महे ।
अद्यापि परमेशानि ! मातस्तुभ्यं नमो नमः ॥ ३२ ॥

प्रकृतिः[1] सर्वभूतानां त्वं हि सर्वजगत्प्रसूः ।
या मुक्तिर्मम देवेशि ! क्षितिरूपा तु जीयते ।
स त्वमेव न मे नाहं मातः ! सत्यं नमो नमः ॥ ३३ ॥

या मे मूर्त्तिर्द्वितीया च जलमयीति कथ्यते ।
सा त्वमेव न मे नाहं मातः सत्यं नमो नमः ॥ ३४ ॥

आग्नेयी या तृतीया मे जगत्क्षोभणकारिणी ।
सा त्वमेव न मे नाहं मातः सत्यं नमो नमः ॥ ३५ ॥

चतुर्थी वायवी मूर्तिः सृष्टिसंहारकारिणी ।
सा त्वमेव न मे नाहं मातः सत्यं नमो नमः ॥ ३६ ॥

पञ्चमी या च सर्वेषां परिणामस्वरूपिणी ।
सा त्वमेव न मे नाहं मातः ! सत्यं नमो नमः ॥ ३७ ॥

षष्ठी या सर्वदेवानामाप्यायनीति गीयते ।
सा त्वमेव न मे नाहं मातः ! सत्यं नमो नमः ॥ ३८ ॥

सप्तमी मम मूर्त्तिर्या जगदाह्लादकारिणी ।
सा त्वमेव न मे नाहं मातः ! सत्यं नमो नमः ॥ ३९ ॥

अष्टमी मम मूर्त्तिर्या स्थितिसंहारकारिणी ।
सा त्वमेव न मे नाहं मातः ! सत्यं नमो नमः ॥ ४० ॥

---

१. त्वं–क० अधिकः ।

तवैवाहं न मे किञ्चिद् यदिह जगतीतले ।
[1]त्वयैवेदं जगद् व्याप्तं जगत् सर्वं त्वमेव हि ॥ ४१ ॥

देवी उवाच

मया सर्वं जगद् व्याप्तं वत्स ! सत्यं प्रभाषसे ।
ममैवैतेऽवताराश्च मत्स्यकूर्मादयोऽपरे ॥ ४२ ॥
त्वमेवाहं न चान्योऽस्ति ब्रह्माहं विष्णुरप्यहम् ।
अहमेव जगत् सर्वं नास्ति किञ्चिन्मया विना ॥ ४३ ॥
यत्तु पश्यसि हे वत्स ! यत्किञ्चिज्जगतीतले ।
ब्रह्मादिस्तम्बपर्यन्तमहमेव न संशयः ॥ ४४ ॥
इहैकस्थो जगत् कृत्स्नं पश्याद्य सचराचरम् ।
इत्युक्त्वा दर्शयामास शम्भवे जगदीश्वरी ॥ ४५ ॥
स्वशरीरे जगत् कृत्स्नं सम्प्रविष्टमनेकधा ।
जगन्मयीं ततो दृष्ट्वा शम्भुर्मायाविमोहितः ॥
मामुद्धर जगन्मातर्मोहसागरमध्यतः ॥ ४६ ॥

॥ इति गन्धर्वतन्त्रे अष्टात्रिंशः पटलः ॥ ३८ ॥

---

१. तयैव-ख० ।

# अथ ऊनचत्वारिंशः पटलः

जगन्मयी उवाच

मा विषीद महादेव ! सर्वथा त्वं स्थिरो भव ।
कुलज्ञानी कथं त्वं हि भावज्ञानी कथं पुनः ॥ १ ॥
इत्येवं त्वं मया पृष्टस्त्वमात्मानं न विस्मर[1] ।
तदानन्दमयं धाम स्वविद्याभेदसङ्गते ॥ २ ॥
पुरुषः प्रकृतिश्चैव नित्यौ द्वौ समुपस्थितौ ।
सगुणाधिबला देवी निर्गुणो निर्बलः पुमान् ॥ ३ ॥
अविद्या नादरूपा सा मदंशाभेदरूपिणी ।
सिसृक्षा पापिनी चास्य सविधे समुपस्थिता[2] ॥ ४ ॥
सिसृक्षया मया पूर्वं प्रार्थितः पुरुषः खलु ।
मामानन्दय सानन्दमित्युक्त्वा धर्षितः प्रभुः ॥ ५ ॥
मया धर्षितमात्रोऽसौ बभूव सगुणो विभुः ।
तत्तदानन्दसन्दोहैरानन्दाहं पुनः पुनः ॥ ६ ॥
जडत्वादुभयोर्देव ! शून्यभावमुपागतम् ।
अथाऽऽनन्दात्मनोर्जाता शक्तिराद्या सनातनी ॥ ७ ॥
गुणत्रयमयी सा तु बिन्दुत्रयस्वरूपिणी ।
अधःकृत्वा[3] तु पुरुषं हकारार्द्धस्वरूपिणी ॥ ८ ॥
विपरीतेन रमते वह्नीन्द्वर्कस्वरूपिणी ।
अशिरस्कहकारान्यमशेषाकारसंस्थितम् ॥ ९ ॥

---

१. विस्मय–ख० ।
२. समुपास्थिता–ख० ।
३. कृत्या–क० ।

अन्तश्चरमजस्रं तं स्वमात्मानमुपास्महे ।
बिन्दुत्रये महादेव! सर्गमेतत् प्रतिष्ठितम् ॥ १० ॥

ब्रह्मादिस्तम्बपर्यन्तं जगत् स्थावरजङ्गमम् ।
शरीरं दृश्यते यद् यत् तत् सर्वं प्राकृतं विदुः ॥ ११ ॥

पञ्चभूतमयं विद्धि चासत्यं सत्यवद् भ्रमः ।
पृथिवीयं महादेव! प्रकृती न तु कस्तरी ॥ १२ ॥

ब्राह्मणी नैव चाण्डाली न देवी न तु मानुषी ।
रसमात्रं जलं विद्धि न द्विजं न च पुक्कशम् ॥ १३ ॥

रूपमात्रं तु यत् तेजस्तत्र किं जातिकल्पना ।
स्पर्शमात्रं तु यद्वायुर्नोत्तमो नाधमः खलुः ॥ १४ ॥

शब्दमात्रं यदाकाशं विभोस्तस्य महात्मनः ।
नीचतां कल्पते देवि! मूढोऽज्ञानविजृम्भितः ॥ १५ ॥

एभिः पञ्चभिरारब्धं देहं स्थावरजङ्गमम् ।
पञ्चानां सन्निपातं यन्न ब्राह्मणं न पुक्कशम् ॥ १६ ॥

तदसत्यं विजानीयात् सत्यं ब्रह्म न तन्न तत् ।
देहाद् भिन्नः शिवो देही परमानन्दरूपवान् ॥ १७ ॥

तद् ब्रह्मेति च यो विद्यात् स एव ब्राह्मणो मतः ।
यदिदं लक्ष्यसे देव! पञ्चभूतात्मविग्रहे ॥ १८ ॥

वायुभिरिन्द्रियग्रामे प्रेरिते पञ्चभिः शिवम् ।
कर्तृत्वमात्मनो देव! तदविद्याभ्रमो महान् ॥ १९ ॥

व्यापृतेष्विन्द्रियेष्वात्मा विवेकिनां चाविवेकिनाम् ।
दृश्यतेऽभ्रेषु[1] धावत्सु धावन्निव यथा शशी ॥ २० ॥

---

१. भेषु–ख० ।

आत्मचैतन्यमाश्रित्य देहेन्द्रियमनोधियः ।
स्वकीयार्थेषु वर्तन्ते सूर्यालोकं यथा जनाः ॥ २१ ॥

देहेन्द्रियगुणान् कर्माण्यमले सच्चिदात्मनि ।
अध्यास्यात्मविवेकेन गगने नीलतामिव ॥ २२ ॥

अज्ञानान्मानसोपाधेः कर्तृत्वादीनि चात्मनि ।
कल्पान्तेऽम्बुगते चन्द्रे चलनादिर्यथाम्भसः ॥ २३ ॥

रागेच्छासुखदुःखादिवृद्धौ सत्यात् प्रवर्तते ।
सुषुप्तौ नास्ति तन्नाशे तस्माद् बुद्धेस्तु नात्मनः[1] ॥ २४ ॥

प्रकाशोऽर्कस्य तोयस्य शैत्यमग्नेर्यथोष्णता ।
स्वभावसच्चिदानन्दनित्यनिर्मलतात्मनः ॥ २५ ॥

आत्मनः सच्चिदंशश्च बुद्धेर्वृद्धिरिति द्वयम् ।
संयोज्य चाऽविवेकेन जानामीति प्रवर्तते ॥ २६ ॥

आत्मनो विक्रिया नास्ति बुद्धेर्बोधो न जात्विति ।
जीवं सर्वमयं ज्ञात्वा ज्ञात्वा दृष्ट्वेति[2] मुह्यति ॥ २७ ॥

रज्जुसर्पवदात्मानं ज्ञात्वाजं यो भयं वहेत् ।
स हि जीवः परात्मेति ज्ञातश्च निर्भयो भवेत् ॥ २८ ॥

आत्मावभासयत्येको बुध्यादीनीन्द्रियाणि हि ।
दीपो घटादिवत् स्वात्मजातैस्तैर्नाऽवभास्यते ॥ २९ ॥

स्वबोधनान्यबोधश्च बोधरूपस्तथात्मनः ।
न दीपस्य तु दीपेच्छा यथा स्वात्मप्रकाशने ॥ ३० ॥

निषिध्य निखिलोपाधिं नेति नेतीति वाक्यतः ।
विद्यादैक्यान्महावाक्यैर्जीवात्मपरमात्मनोः ॥ ३१ ॥

---

१. नात्मन–ख० ।
२. दृष्टेति–क० ।

आविद्यकं शरीरादि दृश्यं बुद्बुदवत् क्षणम् ।
एतद् विलक्षणं विद्याद् देहं ब्रह्मेति निर्मलम् ।। ३२ ।।

देहात्मनो जन्मजरा·········नरादयः ।
शब्दादिविषयैः सङ्गो निरिन्द्रियतया न च ।। ३३ ।।

अमनस्त्वान्नु मे दुःखं रागद्वेषभयादयः ।
अप्राणो ह्यमनाः शुद्ध इत्यादिश्रुतिशासनात् ।। ३४ ।।

निर्गुणो निष्क्रियो नित्यो निर्विकल्पो निरञ्जनः ।
निर्विकारो निराकारो नित्यमुक्तोऽस्मि निर्मलः ।। ३५ ।।

नित्यशुद्धविमूढैकमखण्डानन्दमद्वयम् ।
सत्यं ज्ञानमनन्तं यत् परं ब्रह्माऽहमेव तत् ।। ३६ ।।

एवं निरन्तरं कृत्वा ब्रह्मैवाऽस्मीति वासना ।
हरत्यविद्याविक्षेपान् रोगानिव रसायनम् ।। ३७ ।।

शम्भुरुवाच

देहाद् भिन्नः कथं ह्यात्मा[1] कीदृशः कुत्र संस्थितः ? ।
कथं वा जायते ब्रह्म तन्मे वद जगन्मयि ! ।। ३८ ।।

जगन्मयी उवाच

अविच्छिन्न इवाज्ञानात् तन्नाशे सति केवलः ।
स्वयं प्रकाशते ह्यात्मा मेघापायेंऽशुमानिव ।। ३९ ।।

अज्ञानकलुषं जीवं ज्ञानाभ्यासाद्धि निर्मलम् ।
कृत्वा ज्ञानं स्वयं नश्येज्जलं केतकरेणुवत् ।। ४० ।।

संसारः स्वप्नतुल्यो हि रागद्वेषादिसङ्गतः ।
अबोधे सत्यवद् भाति सुबोधेऽसत्यवद् भवेत् ।। ४१ ।।

---

१. ह्यात्वा–ख० ।

तावत् सत्यं जगद् भाति शुक्तिका रजतं यथा ।
यावन्न जायते ब्रह्म सर्वाधिष्ठानमद्वयम् ॥ ४२ ॥

सच्चिदात्मन्यनुस्यूताः·························· ।
व्यक्तयो विविधाः सर्वा हाटके कटकादिवत् ॥
······ ···यथाकाशो नानोपाधिगतो विभुः ॥ ४३ ॥

तद्भेदाद् भिन्नवद् भाति तन्नाशे लोकवद् भवेत् ।
नानोपाधिवशादेव जातिवर्णाश्रमादयः ॥ ४४ ॥

आत्मन्यारोपितास्तोये रसवर्णविभेदवत् ।
पञ्चीकृतं महाभूतसम्भवं कर्मसञ्चितम् ॥ ४५ ॥

शरीरं स्वस्वदुःखानां भोगायतनमुच्यते ।
पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ॥ ४६ ॥

अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गभोगसाधनम् ।
अनाद्यविद्यानिर्वाच्या कारणोपाधिरुच्यते ॥ ४७ ॥

उपाधित्रितयादन्यदात्मानमवधारय ।
सर्वभूतस्थमात्मानमहमेव तथात्मनि ॥ ४८ ॥

सर्वभूतानि सञ्चिन्त्य चिन्तयस्वैकमेव हि ।
उत्पत्तिप्रलयाभ्यां च न सदिदं निशामय ॥ ४९ ॥

मनः करोति पापानि मनः पापेन लिप्यते ।
मनस्युन्मनीभूते[1] च न धर्मो न च पातकम् ॥ ५० ॥

॥ इति गन्धर्वतन्त्रे ऊनचत्वारिंशः पटलः ॥ ३९ ॥



---

१. उन्मननी—ख० ।

# अथ चत्वारिंशः पटलः

शम्भुरुवाच

कथ्यतां देवदेवेशि ! व्यक्तीभूतावुभौ कथम् ।
शिवशक्तिमयं ज्ञानं कथं वा जायते तथा ॥ १ ॥

जगन्मयी उवाच

पुंभावः शिवमित्याहुः स्त्रीभावः प्रकृतिः परा ।
शिवो ज्ञानमयो देहे शक्तिर्बुद्धिमयी परा ॥ २ ॥

शुक्रं शिवो महाभेदः शक्तिः कुण्डलिनी त्विति ।
लिङ्गं शिवस्तथा शक्तिर्योनिर्जगति दृश्यते ॥ ३ ॥

इत्येवं त्रिपुरा शक्तिरित्येवं त्रिपुरं शिवः ।
नानयोर्विद्यते भेदो या शक्तिः स शिवो ध्रुवम् ॥ ४ ॥

न शिवेन विना शक्तिर्न शक्तिरहितः शिवः ।
न सद्भूतस्तयोर्भेदश्चन्द्रचन्द्रिकयोरिव ॥ ५ ॥

एवं तौ सर्वभूतेषु द्विधाभूतौ व्यवस्थितौ ।
तस्मान्नास्ति तयोर्भेदो जगदेतच्चराचरम् ॥ ६ ॥

पिता माता स्वतश्चेति भावोऽयं विविधो मृषा[१] ।
स्वाविद्यासुदृढाभ्यासाद् दृढीभूतो हृदि स्थितः ॥ ७ ॥

गुरुवाक्येन तं विद्याद् दृढाभ्यासेन मानवः ।
जीवन्मुक्तः सर्वभूतमयो भवति वै ध्रुवम् ॥ ८ ॥

शरीरं विविधाङ्गं मे कथ्यते शृणु सादरम् ।
ब्रह्मैवाहं न चान्योऽस्मि शरीरं मे तदेव हि ॥ ९ ॥

---

१. मुषा-ख० ।

चैतन्यं सर्वभूतानां शब्दब्रह्मस्वरूपकम् ।
वर्णरूपेण तद् व्यक्तं मन्त्रविद्यादिभेदतः ॥ १० ॥

कुङ्कुमागुरुकस्तूर्या रोचनाचन्दनेन्दुभिः ।
प्रकाश्य तव पीठे तु शक्त्यन्तस्थं यथा भवेत् ॥ ११ ॥

तत्र पूजा सदा कार्या तत्तद्वर्त्मविधानतः ।
सर्वेषामेव देवानां मन्त्रमाद्यं शरीरकम् ॥ १२ ॥

पूजयेत् तद्गुरोर्मन्त्री देवतात्मस्वरूपतः ।
द्वितीयं कथ्यते देव ! यत् पुनर्ध्यानगोचरम् ॥ १३ ॥

कृत्वा रत्नमयं रूपं शुद्धकाञ्चननिर्मितम् ।
प्रत्यहं पूजयेद् देवमम्रुत्र मासि मासि च ॥ १४ ॥

वार्षिकं त्वथवा कुर्यान्महोत्सवमनुत्तमम् ।
विमुखो दम्भमाश्रित्य दोषो नास्त्ववशादुत ॥ १५ ॥

महोत्सवविधौ यो मे स्वस्माद् भग्नमनोरथः ।
विमुखास्तस्य दुर्बुद्धेः पितरः समराङ्गणाः ॥ १६ ॥

तस्मात् परदिनं प्राप्ते बोधयित्वा विधानतः ।
प्रत्यहं पूजयेद् भक्त्या पूर्णान्तं स्यान्महोत्सवम् ॥ १७ ॥

तृतीयं कथ्यते यन्त्रं रत्नं वा हेमनिर्मितम् ।
मदात्मरूपमात्रं तु विदित्वा सद्गुरोर्बुधः ॥ १८ ॥

पूजयेद् गन्धपुष्पाद्यैर्मदात्मा मदभेदतः ।
चन्दनागुरुकस्तूर्या रोचनाचन्द्रकुङ्कुमैः ॥ १९ ॥

कुलपुष्पैश्च संलिख्य त्वदुक्तविधिना यजेत् ।
वाराहस्कन्धजैर्दर्भै[1]रनुलेपं विघर्षयेत् ॥ २० ॥

---

१. दर्भे–ख० ।

वाराहदेहजैर्दर्भैः[1] कुर्यान्मलविघर्षणम् ।
प्रीतिर्मे जायते तत्र पूर्णा द्वादशवार्षिकी ॥ २१ ॥
सुगन्धिस्पर्शसुखदैः कुसुमैररुणैरपि ।
अशून्यं सर्वदा कुर्याच्छून्ये विघ्ना ह्यनेकशः ॥ २२ ॥
अत्यन्तसुखदैर्वस्त्रैराच्छाद्य भवनान्तरे ।
त्वल्लिङ्गेनातिशुद्धेन शुक्लेन चित्तहारिणा ॥ २३ ॥
स्थापयेत् पूजयेत् सार्द्धं यतो नाहं त्वया विना ।
नैव त्वमपि हे देव ! प्रभुर्देवो मया विना ॥ २४ ॥
तस्मादावां सदैवात्र स्थापयेत् सिद्धिमिच्छुकः ।
विद्रुममौक्तिकाभ्यां वा योजयेन्मन्त्रमुत्तमम् ॥ २५ ॥
समयाचारयोगेन त्वयोक्तेनैव शङ्कर ! ।
पूजां यः कुरुते नित्यं भक्तिश्रद्धासमन्वितः ॥ २६ ॥
चतुर्द्धा कालरूपैश्च हस्तैरालिङ्ग्य तं शिवम् ।
मामक्या कलया युक्तं करोमि पुरनायकम् ॥ २७ ॥
तुरीयं मे परं रूपं गुप्तं यज्जगतीतले ।
तत्र पूजा सदा कार्या कुलयागविधानतः ॥ २८ ॥
सर्वापायेषु सर्वत्र कौलो[2] धर्मः परो महान् ।
स्वागमा निगमाः सर्वे कौलधर्मस्तु दुर्गमः ॥ २९ ॥
निसर्गदुर्गमः कौलः [3]सुगमः खलु भात्यसौ ।
ब्रह्मविष्णुशिवादीनां प्रभवं यत्र कीर्तितम् ॥ ३० ॥
तद् रूपं मे परं धाम ब्रह्मणोऽव्यक्तजन्मनः ।
सद्गुरोः कृपया लब्ध्वा तत्र पूजा महोदया ॥ ३१ ॥

---

१. दर्भे-ख० ।
२. कौला-ख० ।
३. सुगम इव-क० ।

ब्रह्मप्रकाशकं तत् तु तन्निष्ठं ब्रह्म उच्यते ।
स्वयं प्रकाशते ब्रह्म यस्य दर्शनतः शिवः ॥ ३२ ॥

स्पर्शनात् पूजयेद् यस्य [1]ब्रह्मण्येव निमज्जति ।
आनन्दाब्धौ निमज्येव भवाब्धिं स न पश्यति ॥ ३३ ॥

कौलो धर्मस्त्वया प्रोक्तस्तमासाद्य कुलं यजेत् ।
मद्रूपा परमा शक्तिर्लिङ्गरूपी भवान् प्रभुः ॥ ३४ ॥

शुक्रं शिवो रजः शक्तिरिति जानीहि शङ्कर ! ।
त्वया मया जगदिदं परिपूर्णं महेश्वर ॥ ३५ ॥

एकैवाहं परं ब्रह्म शिवशक्तीति भेदतः ।
संप्रभिन्नं जगदिदं भ्रम एवात्र कारणम् ॥ ३६ ॥

त्वमहं चेति यत् प्रोक्तं तदविद्याभ्रमो महान् ।
तत्त्वमसि स एवाहं न त्वं नाहं तदेव यत् ॥ ३७ ॥

आवयोर्नहि भेदोऽस्ति युक्त्या बुध्यस्व शङ्कर ।
मदन्तस्त्वयि संलीने त्वमेवाहं भवान् प्रभुः ॥ ३८ ॥

आवयोः सरलाकारमभून्मिलितयोः शिव ! ।
तन्महामोक्षमाप्नोति भोगेनैव महेश्वर ॥ ३९ ॥

कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
पूजनान्नहि मे प्रीतिर्यदिहान्यप्रकारतः ॥ ४० ॥

मांसभारैर्न मे प्रीतिर्न तथा मद्यसागरैः ।
यथा मे जायते प्रीतिर्भगलिङ्गामृतैः शिव ! ॥ ४१ ॥

अहमेव महादेव ! स्त्रियः सर्वा जगत्स्विह ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ४२ ॥

---

१. ब्रह्मणेव–ख० ।

ये देवा मद्गतप्राणा मद्दासा मद्विभूषणाः ।
स्वधर्मानपरित्यज्य मामेव शरणं गताः ॥ ४३ ॥

ते पुनर्भोगिनो मुक्ता जीवन्तोऽपि महीतले ।
मदङ्गस्पर्शमात्रेण आत्मानं ज्ञातुमर्हसि ॥ ४४ ॥

मयि प्रविश विश्वेश ! मां भजस्व सनातनम् ।
जहि शङ्कां महादेव ! त्वमात्मानं न विस्मर ॥ ४५ ॥

विष्णुः पिबत्यसौ वामं ब्रह्मा मे दक्षिणं स्तनम् ।
त्वं तु पिब महादेव ! ममाधरसुतामृतम् ॥ ४६ ॥

स्त्रियं गच्छन् स्पृशन् पश्यन् ताभिरेव विहारवान् ।
ध्यानं पूजां जपं चैव कुर्यान्मे साधकोत्तमः ॥ ४७ ॥

शक्त्या युक्तः सदा मन्त्री न तया रहितो भवेत् ।
तया विरहितो देवः सर्वकर्मसु न क्षमः ॥ ४८ ॥

पतिहीना यथा नारी सर्वकर्मविवर्जिता ।
शक्तिहीनस्तथा मन्त्री तस्माच्छक्तियुतो भव ॥ ४९ ॥

एका चेद् वशगा साध्वी तस्याकृष्टिर्भवाय च ।
दुष्टभार्याकुलाकृष्टिर्विनाशायैव केवलम् ॥ ५० ॥

कूलभेदिनदीतीरे कोषागारो यथा शिवः ।
भगलिङ्गसमायोगाद् यदानन्दः प्रजायते ॥ ५१ ॥

ब्रह्मैव तद् विजानीयादनन्तं मोक्षसाधनम् ।
गुरुपूजा कराकृष्टिर्विघ्नोत्सारणकर्मकृत्[1] ॥ ५२ ॥

रहस्याख्यानकं कर्णे ह्यासनं गण्डचुम्बनम् ।
भूतशुद्धिः परीरम्भः सम्भाषेन्द्रियनिग्रहः ॥ ५३ ॥

---

१. विघ्नोत्साधारणकर्मकृत्-ख० ।

प्राणायामः स्तनाकृष्टिर्न्यासमत्र समीरितम् ।
नखदन्तक्षतादीनि धूपदीपप्रदीपनम् ॥ ५४ ॥

चाटुकानि रतान्ते च सुपुष्पाण्यङ्गसङ्गमम् ।
दर्शनं स्पर्शनं योनेर्विकाराल्लिङ्गघर्षणम् ॥ ५५ ॥

अधरामृतपानं च स्वयमावेशनं तथा ।
विक्षेपोत्क्षेपणं चैव पतनोत्पतनं तथा ॥ ५६ ॥

तर्पणाद्युपचारस्तु मथनं हवनं तथा ।
सीत्कारो मन्त्रजपनं ब्रह्मार्पणैकचित्तता ॥ ५७ ॥

कूजनं गायनं स्तुत्यं रेतःपातो विसर्जनम् ।
इत्थमेव महादेव ! पूजनं मे समीरितम् ॥ ५८ ॥

एकाया बहुरूपिण्याः प्रत्यहं यः समाचरेत् ।
जीवन्मुक्तः स्वयं देवोऽप्यसाध्यमपि साधयेत् ॥ ५९ ॥

भोगैश्च मधुपर्काद्यैर्वामाभावे स्थितो यजेत् ।
श्रुतिस्मृत्युदितं कर्म त्यजन् वाथ समाश्रयन् ॥ ६० ॥

तत्तत्कर्मपरित्यागाद् ध्यानं जातिषु जायते ।
ततो बहुसुखं भुक्त्वा परेषां च सुदुर्लभम् ॥ ६१ ॥

विद्याभ्यासप्रसादेन भोगेन मोक्षमाप्नुयात् ।
एवं बहुविधान् भोगी भोगान् वै सुमनोरमान् ॥ ६२ ॥

समासाद्य च तांस्तांस्तु वैराग्ये मन आविशेत् ।
असारांश्च तथा सारान् निःसारांश्च तथापरान् ॥ ६३ ॥

नानाविधैर्विवेकाद्यैर्विविच्य साधकस्ततः ।
सारभूते परे तत्त्वे मन आधाय योगवित् ॥ ६४ ॥

निःसारमसदाद्यन्तं जगदेतच्चराचरम् ।
सत्यं किमपि तत्रैव वस्तु साक्षान्निरक्षरम् ॥ ६५ ॥

तदानन्दमयं ब्रह्म विदितात्मनि साधकः ।
एकान्तविजने रम्ये मृदुकोमल आसने ॥ ६६ ॥
आसीनश्चिन्तयेद् ब्रह्म परमानन्दनिर्भरः ।
ब्रह्मचिन्तापरामोदभोगेषु विगतस्पृहः ॥ ६७ ॥
एकां भार्यां समादाय योगिनीं सहचारिणीम् ।
असाध्यं साधयेद् योगी योगिन्येव सहायिनी ॥ ६८ ॥
यथा त्वं [1]मयका नाथ ! पार्वत्या परमेश्वर ।
मोहयित्वा पुनर्देवी शङ्करं प्राह पार्वती ॥ ६९ ॥

इति गन्धर्वतन्त्रे चत्वारिंशः पटलः ॥ ४० ॥



१. कामय-क० ।

# अथ एकचत्वारिंशः पटलः

अतुलैकरसानन्दं कैवल्यायतनं शिवम् ।
नत्वा शिष्येव सानन्दा तमुवाच परा शिवा ॥ १ ॥

पार्वती उवाच

प्रसीद परमानन्द मयि संसक्तविग्रह ! ।
यद् यदेव परं तत्त्वं तत्त्वतो विदितं मया ॥ २ ॥

त्वया देव ! समाख्याताः सर्वे मन्त्राः क्रियाः पराः ।
योगाः समाधयो ज्ञानं तथा चान्ये मदीप्सिताः ॥ ३ ॥

तेषां हि कारणं तत्त्वं यदीशः परतः परम् !
वक्तुमर्हसि तत्त्वेन शाम्भवं चाप्यनुत्तरम् ॥ ४ ॥

वाच्यस्वरूपव्यापित्वं ज्ञातुमिच्छामि तत्त्वतः ।
प्रकाशो विमर्षाधीन इति सत्यं यदि प्रभो ॥
ममाधीनस्त्वमेव स्याद् यथोक्तं वद शङ्कर ! ॥ ५ ॥

शम्भुरुवाच

अतिगुह्यतमं सूक्ष्ममवाङ्मनसगोचरम् ।
मया यत्नेन गुप्तं यन्न तत् कस्यापि कथ्यते ॥ ६ ॥

अहमेव त्वमप्यस्य खलूक्तेति च मे मतिः ।
त्वमप्येवं स्मरस्यात्मा त्वयापि विदितं प्रिये ! ॥ ७ ॥

सच्चित्संयोगसंसिद्धिमवश्यामवसायतः ।
तदेव चोत्तरं प्राह सत्यं सत्यं मयोदितम् ॥ ८ ॥

तदेव चित्सदाद्यन्तौ............संस्थितं यदा ।
तदा शाम्भवमित्याहुर्मुनयस्तत्त्ववित्तमाः ॥ ९ ॥

तदेवाहमिदं भावपूर्णानन्दो यदा भवेत् ।
तदैव शम्भुभावं स्यादुक्तमेतत् पदत्रयम् ॥ १० ॥
शक्रत्रिशूलीसर्गान्तं तैरेवालङ्कृता यदि ।
सैव हि श्रीपरेत्युच्चैर्मुनिभिः परिकीर्तिता ॥ ११ ॥
प्रकाशानन्दसन्दोहकैवल्यमहदाश्रया ।
मत्परत्वान्महासिध्यै मातरेति च कथ्यते ॥ १२ ॥
ये मन्त्राः परमेशानि ! तेनादावपि संयुताः ।
ते जीवन्ति च मन्त्रेभ्यो ह्यन्योन्यमिति मे मतिः ॥ १३ ॥
सप्तषष्टिप्रकृत्यर्णा जगत्सृष्ट्यादिकर्तृकाः ।
एतेषां जीवभूतत्वादनुत्तरमिदं जगत् ॥ १४ ॥

पार्वती उवाच

सकला निष्कला चैव मुक्तिमार्गप्रबोधिका ।
मन्त्रास्तु बहवः सन्ति वद तेषामनुत्तरम् ॥ १५ ॥

शम्भुरुवाच

केषाञ्चिदस्मदुक्तानामेतेऽप्यनर्थदर्णवा ! ।
आवयोर्देवदेवेशि ! मनूनां कारणं मनोः ॥ १६ ॥
सर्वेषामेव मन्त्राणां प्राप्यावावां महेश्वरि ! ।
आवयोरपि तत् प्राप्यमनुत्तरमिति स्मृतम् ॥ १७ ॥
अप्येतदक्षरावृत्तेर्गम्यागम्यतया स्थितम् ।
अगम्याकारणत्वाच्च गम्यावावां प्रति प्रिये ! ॥ १८ ॥
इदन्तयाऽहन्तया वा सर्वेषामन्तरात्मनि ।
प्रतीयमानमर्थो यः स एव शिवनिर्णयः ॥ १९ ॥
पूर्णाहन्तास्वभावेन कृत्रिमाहन्तया विना ।
+ + यः पश्यति स पश्यति ॥ २० ॥

अहन्तायां महादेवि ! त्वमेव प्राणिनां प्रिया ।
अज्ञानादपि चात्मानं सर्वे तेऽनुत्तरप्रियाः ॥ २१ ॥

पार्वती उवाच

त्वया पूर्वोपदिष्टं यत् तत्त्वं श्रीमत् परामयम् ।
तदेव निर्वाणपदमिति प्रोक्तं तदा मया ॥ २२ ॥

इदानीमतिगुह्यानां तदेवाद्याप्यनुत्तरम् ।
प्रसंशसे परानन्दविमर्षाविष्टविग्रह ! ।
एतस्मिन्नेव कैवल्यं चेतःश्लेषं न मे विभो ! ॥ २३ ॥

शम्भुरुवाच

सत्यमेव त्वया ख्यातमुभयं तव सुन्दरि ! ।
परया न्वपि तत् प्राप्यं पूर्वोदितमनुत्तमम् ॥ २४ ॥

यत् सम्मतं तथाऽप्येतत् तयोरप्यन्तरं महत् ।
परा तु सप्तविंशत्या अन्तर्बाह्या क्रिया गुणैः ॥ २५ ॥

पूज्या चास्मत्कलांशेति केषाञ्चिद् योगिनीमतम् ।
मानरूपक्रियोपाधिविहीनत्वान्महेश्वरि ! ॥ २६ ॥
परया अपि तत् प्राप्यं पूर्वोदितमनुत्तरम् ।

पार्वती उवाच

अस्य [1]माहात्म्यमेवोक्तं त्वया मे बहुधा विभो ! ।
उपायेनामुना पश्येद् युक्तं नैव तु जातुचित् ॥ २७ ॥

यदिष्टं सर्वमाख्यातं यदप्युक्तमनुत्तरम् ।
नैव शक्नोमि निर्णेतुं तत्त्वतः कथयस्व मे ॥ २८ ॥

शम्भुरुवाच

अत्यन्ताभावतो भेदादावयोः परमार्थतः ।
इदमीदृशमित्युक्तं पुरोवाहमुपादितम् ? ॥ २९ ॥

---

१. महात्म्य–ख० ।

संप्राप्ता स्वरदेवता नैव कार्या विचारणा ।
यद्यन्यभवस्थैर्येण प्राप्तव्यं गुणकार्यतः ॥ ३० ॥

तर्हि भूयोऽपि वक्ष्यामि मयोक्तार्थस्य निर्णयम् ।
मनोवाग्विषयातीतं पूर्वोक्तं यदनुत्तरम् ॥ ३१ ॥

तत् त्रिधा भेदमायाति बिन्दुनादाख्यबीजतः ।
तान्येव सच्चिदानन्दभेदेन विभवानि तु ॥ ३२ ॥

मत्स्वरूपो हि यद्बिन्दुस्तस्मान्नादस्तु भाविनि ।
द्वयोः समरसाकारः मुखं बीजाख्यभावयोः ॥ ३३ ॥

ऐक्यज्ञानपथे चैनां देवि शाम्भवि ! वाचके ।
वर्णक्रमेण सम्भाव्य कुर्यान्मथनभावनाम् ॥ ३४ ॥

एवं क्रमे महेशानि ! तामनुत्तरतां व्रजेत् ।
वह्निवत् कण्ठसम्बद्धे समुन्नद्धोऽवनिं तरत् ॥ ३५ ॥

वार्जने मथनोद्धाते तन्तुशक्तिपदात्मिकाम् ।
व्रतहोमेन सम्भाव्ये स्वभावं स्वयमाचरेत् ॥ ३६ ॥

प्रकाशान्ता विमर्षान्तास्तस्मादेवाप्रकाशकम् ।
उत्तरोत्तरमेकैकं नयामि तत् क्रमात् क्रमात् ॥ ३७ ॥

सङ्कोचः सविकाशस्य स्वरूपौ सूर्यसङ्गतौ ।
तत् तु योगतया स्यातां प्रकाशानन्दमन्दिरौ ॥ ३८ ॥

सच्चिन्मयौ क्रियासारावधूतात्मक्रियापरौ ।
एतयोरावयोर्यत् तत् कारणं स्यादनुत्तरम् ॥ ३९ ॥

हृदयाननभार्यान्तं शिवदण्डी बिलं फलम् ।
अन्तः प्रतीयमानं तदमेयं सर्वतोमुखम् ॥ ४० ॥

आदिमध्यान्तनिर्मुक्तं निस्तरङ्गाब्धिसन्निभम् ।
सन्मात्रं चैव चिन्मात्रं तयोरैक्यरसावृतम् ॥ ४१ ॥

तमःप्रकाशहीनं यदमो[1] बहुतरं परम् ! ।
महतां च महत्त्वाच्च ब्रह्मसंज्ञमनुत्तरम् ॥ ४२ ॥
तदेवावहितेन त्वं स्वान्तेन परिभावय ।
अनेन भाववानाशु मन्त्रस्तन्मयतां व्रजेत् ॥ ४३ ॥
यदा तन्मयसिध्यादि विश्वं त्वयि विभावयेत् ।
तेन विश्रान्तभावेन तदैकानन्दमाप्स्यथ ॥ ४४ ॥
आकाशे निर्मले यद्वत् सहसा धनसंकुलम् ।
उत्पत्य नीयते तद्वज्जगदात्मन्यनुत्तरे ॥ ४५ ॥
इत्येवं प्रत्यभिज्ञानसिद्धिः स्यात् तव सुव्रते ! ।
सुखं वेद्यं सुखं पश्चान्नैव शक्नोमि वेदितुम् ॥ ४६ ॥
परा त्वं परमर्द्धिः स्यान्न त्वस्य विहितं यतः ।
इतः परं न जानामि त्वयाऽहं बहुधा शपे ॥ ४७ ॥
एतत् श्रुत्वा महादेव्या ह्येतदर्थविमर्षणम् ।
प्रकाशितं तदेवाशु विस्मयाविष्टचेतसा ॥ ४८ ॥
महदाश्चर्यमेतन्मे सम्पूर्णोऽयं यदा स्थितः ।
इति सञ्चिन्त्य देवस्य पादमाश्लिष्य सुन्दरी ॥ ४९ ॥
तव चान्योन्यमथनात् सान्द्रानन्दाभिनन्दिता ।
यत् प्रकाशात्मकं सर्वं तत्त्वं केवलतां गतम् ॥ ५० ॥
विमर्षमवनिप्राप्तमित्येषा तात्त्विकी स्थितिः ।
अवधानैकभावानां मतिः सा साक्षिरूपिणी ॥ ५१ ॥
तत् प्रमाणैर्वगाकैस्तैश्चिदेव[2] हि प्रमाणकः ।
नहि वैकर्तनं ज्योतिर्दीपानेव समीक्षते ।
आदर्शे विमलाभोगे यथा [3]सर्वं प्रकाशते ॥ ५२ ॥

१. यदनो–क० ।
२. चिदेवाम्–क० ।
३. चर्वं–ख० ।

ईश्वर उवाच

इत्थं चिदात्मकं विश्वं षट्त्रिंशत्तत्त्वभेदनम् ।
आदौ शुद्धात्मकं तत्त्वं पञ्चधा तमसः परम् ॥ ५३ ॥

शिवः शक्तिश्च तत्त्वाख्या ईशो विद्येति भिद्यते ।
हक्षादिशान्तवर्णात्मा निरमायि यदा शिवे ! ॥ ५४ ॥

कला विद्या रागकालौ नियतिर्वर्ष्म उच्यते ।
मायापूर्वो वकारादिः सकारान्ताक्षरात्मकम् ॥ ५५ ॥

प्रमाणं च मनो बुद्धिरहं तन्मात्रपञ्चकम् ।
श्रोत्रादिपञ्चकं [1]तादि [2]वादि वागादिपञ्चकम् ॥ ५६ ॥

तन्मात्रपञ्चकं मादि भूतादि यादिपञ्चकम् ।
सिसृक्षोः प्रथमः स्पन्दः शिवतत्त्वं प्रभोः स्मृतम् ॥ ५७ ॥

इच्छैवास्य परिम्लाना शक्तितत्त्वं मदङ्कुशम् ।
स्वेच्छया सूचितं विश्वमाच्छाद्याहन्तया स्थितः ॥ ५८ ॥

स एव तत्त्वं सादाख्यं सर्वानुग्रहणोन्मुखम् ।
स एवेश्वरतत्त्वं स्यात् पश्यन् विश्वमहन्तया ॥ ५९ ॥

अहन्तेदन्तयोरैक्यमविद्येति निगद्यते ।
[3]स्वाङ्गभूतेषु भावेषु मायातत्त्व[4]विभेदिनी ॥ ६० ॥

मायागृहान्तः सङ्कोचः शिवः पुंस्तत्त्वमुच्यते ।
अयमेव हि संसारी जीवो भोक्तेति दृश्यते ॥ ६१ ॥

ज्ञातृकर्तृत्वपूर्णत्वनित्यत्वाद्याश्च शक्तयः ।
तत्सङ्कोचात् सङ्कुचिता कलाविद्यात्मना स्थिता ॥ ६२ ॥

---

१. लादि–क० ।
२. टादि –क० ।
३. साङ्ग–क० ।
४. तत्र–क० ।

मायात्मनः कला नाम किञ्चित् कर्तृत्वलक्षणम् ।
विद्या किञ्चिज्ज्ञताहेतू रागोऽभिष्वङ्गकारणम् ॥ ६३ ॥

कालः परिच्छेदको वा नियतिश्चेदमेव मे ।
कर्तव्यं नान्यदित्येषा व्यवस्था यन्त्रणाकृतिः ॥ ६४ ॥

प्रकृतिर्गुणसाम्यं[1] स्यादहङ्कारादिजन्मभूः ।
अहिंसा मदमित्येतद् बुद्धिहेतुरहङ्कृतिः ॥ ६५ ॥

बुद्धिरध्यवसायस्य कारणं नियतात्मनि ।
सङ्कल्पस्य विकल्पस्य बीजं मन उदीर्यते ॥ ६६ ॥

वचनादेश्च शब्दादेर्वागादिश्रवणादिकम् ।
करणश्रवणादीनां ग्राह्यं तन्मात्रपञ्चकम् ॥ ६७ ॥

आकाशाद्यवसानादिकारणं भूतपञ्चकम् ।
परापराशक्तिमये शुद्धे विद्यादिपञ्चकम् ॥ ६८ ॥

तदन्यदपरा शक्तिर्विद्यातत्त्वमुदीरितम् ।
अथ देवी परा शक्तिः शुद्धाशुद्धार्द्धहारिणी ॥ ६९ ॥

पृथिव्यादीनि तत्त्वानि सदा लीनानि कारणे ।
तदा कारणमात्राणि बहिरुद्गमते बहिः ॥ ७० ॥

अनुत्तरेच्छे उन्मेषे आनन्देषणमूनता ।
क्रियेच्छाज्ञानशक्तीनां सदा चोन्मूलता च षट् ॥ ७१ ॥

इच्छेशतोनतारूढा स्फुटास्फुटजगन्मयी ।
चत्वारः षण्ढवर्णाः स्युः शुद्धात्मानः प्रचोदिताः ॥ ७२ ॥

अनुत्तरानन्दशक्ती इच्छाशक्तौ[2] नियोजिते ।
त्रिकोणमथ षट्कोणमिच्छायां रूढिमागते ॥ ७३ ॥

---

१. साम्यः–ख० ।
२. शक्त्यौ–ख० ।

अनुत्तरानन्दपङ्क्तित्रिकोणद्वययोगतः ।
एतेषामेव योगेन क्रियाशक्तेः स्फुटं वपुः ॥ ७४ ॥

उक्तं द्विशक्तिसंघट्टत्रिशूलिद्वैतघस्मरम् ।
परस्परविरोधेन कार्ये च प्रसवे हते ॥ ७५ ॥

न केषाञ्चिदुपायेन यासां रूपमिदं भवेत् ।
बिन्दुरेतस्य संस्कारो विमर्षः सर्ग इत्यसौ ॥ ७६ ॥

कला षोडशकाकारा शक्तेर्बीजाय ते परा ।
तिथयः प्रतिपत्पूर्वाः पञ्चदश्यन्तिमा यथा ॥ ७७ ॥

सूर्याचन्द्रमसौ स्वान्तश्चरन्तौ स्थितिहेतवे ।
तथा विमर्षवपुषः सर्गस्याद्याः कलाः स्मृताः ॥ ७८ ॥

विद्येयं मातृका देवी बीजयोन्यात्मना स्थिता ।
नित्यप्रभुर्दीप्तवपुर्विश्वस्य हि च जन्मभूः ॥ ७९ ॥

हृदयं बीजमेतस्याः स विदेत् परमं महः ।
बटबीजे यथा वृक्षस्तद्वत् सन्निहितं जगत् ॥ ८० ॥

विचार्यमाणो यो वेद कारणादतिरिच्यते ।
मृदादेः कलशादीनां तत्त्वं नान्यद् निवापणे ॥ ८१ ॥

इत्याहुस्तत्त्ववादिन्यः श्रुतीनामन्तिमा गिरः ।
इदं सर्वं स एवाह नासीदिति विनिश्चयात् ॥ ८२ ॥

सत्तावाचिनि बीजेशि ! क्षादिमायान्तिमं जगत् ।
विलुप्तप्रत्ययाकारमेतत् सम्परिशिष्यते ॥ ८३ ॥

ततो ज्ञानात् क्रियासारा विद्येश्वरसदाशिवाः ।
शक्तित्रिशूलिनीमन्ते चतुर्दशकलात्मनि ॥ ८४ ॥

ऊर्ध्वाधःशक्तिवपुषः सा कुलीनमतः परम् ।
इत्थं परस्यां संवित्तौ सर्वसङ्कुचितिः क्रमात् ॥ ८५ ॥

अथ वाङ्मनसातीते यत्र कापि निरञ्जने ।
षट्त्रिंशत्तत्त्वलहरीकलहातीतगोचरे ॥ ८६ ॥

विश्वात्मनि महामन्त्रे स्वभावे सा विलीयते ।
कुतश्चिन्मथिते धाम्नि दीप्ते केनापि हेतुना ॥ ८७ ॥

सर्वं हविरिदं जुह्वन् न दारिद्र्येण पीड्यते ।
पञ्चपञ्चात्मकं देवि ! पञ्चस्पन्दविजृम्भितम् ॥ ८८ ॥

सङ्कोचयन् परामर्शी सामान्यस्पन्दकेवलम् ।
अहमि प्रलयं कुर्वन्निदमः प्रतियोगिनः ॥
पराक्रमपरो भुङ्क्ते स्वभावमशिवापहम् ॥ ८९ ॥

॥ इति गन्धर्वतन्त्रे एकचत्वारिंशः पटलः ॥ ४१ ॥



## द्विचत्वारिंशः पटलः

पार्वती उवाच

कथमुत्पद्यते वाणी कथं वा सा विलीयते।
वाचां विनिर्णयं ब्रूहि पश्चात् तत्त्वमुदीरय ॥ १ ॥

ईश्वर उवाच

अव्यक्तात् प्राण उत्पन्नः प्राणादुत्पद्यते मनः।
मनस उत्पद्यते वाक् च वाङ् मनसि विलीयते ॥ २ ॥

देवी उवाच

आहारं काङ्क्षते कोऽसौ भुङ्क्ते चापि रतीश ! कः।
जागर्ति सुप्यते कोऽसौ सुप्तः कोऽसौ प्रबुध्यते ॥ ३ ॥

ईश्वर उवाच

आहारं काङ्क्षते प्राणो भुङ्क्ते चैव हुताशनः।
जागर्ति सुप्यते वायुः सुप्तं तेजः प्रबोधयेत् ॥ ४ ॥

देवी उवाच

को वा करोति पापानि को वा पापेन लिप्यते।
को वा बद्धो विमुक्तः कः को वा पापैः प्रमुच्यते ॥ ५ ॥

ईश्वर उवाच

मनः करोति पापानि मनः पापेन लीयते।
मनस्युन्मनीभूते न धर्मो नापि पातकम् ॥ ६ ॥

देवी उवाच

यदिदं शक्तिमाकाशं देहस्थं देहवर्जितम्।
तं स्थितं तु कथं देहं देहिदेहविवर्जितम् ॥ ७ ॥

कथं जीवः स्थितो देहे को वा जीवः प्रकीर्तितः ।
केन पश्यत्यसौ जीवः केन मार्गेण सञ्चरेत् ॥ ८ ॥

सकलं तु कथं जीवो निष्कलं तु कथं भवेत् ।
केन जीवत्यसौ जीवः किं वा जीवस्य भोजनम् ॥ ९ ॥

कुतो वा लीयते जीवो जायते कुत एव हि ।
को वा जीवः कथं प्राणाः केन जीवः प्रकीर्तितः ॥ १० ॥

एतत् सर्वं यथातत्त्वं तत्त्वं मे ब्रूहि शङ्कर ! ।
संसारार्णवमग्ना हि येन मुञ्चाम्यहं प्रभो ! ॥ ११ ॥

ईश्वर उवाच

शृणु देवि ! प्रवक्ष्यामि यत् त्वया समुदाहृतम् ।
कथयामि न सन्देहः सारात् सारतरं शुभम् ॥ १२ ॥

वायुस्तेजस्तथाऽऽकाशं तृतीयं जीवसंज्ञकम् ।
स जीवः प्राण इत्युक्तो बालार्कशतकल्पितः ॥ १३ ॥

जीवः शुक्रं च विज्ञेयं यावत् सत्त्वेन संस्थितम् ।
रजसा च समायुक्तो वायुर्जीवः प्रकीर्तितः ॥ १४ ॥

तमसा च समायुक्तस्तदा हृष्टो भवेद् ध्रुवम् ।
सत्त्वेन च समायुक्तो धर्मज्ञानप्रवर्तकः ॥ १५ ॥
रजसा च समायुक्तो भुङ्क्ते च विषयान् प्रभुः ।
तमसा च समायुक्तस्तदा पापेन लिप्यते ॥ १६ ॥
नासाग्रं चैव नाभिं च हृदयं च तृतीयकम् ।
स्थानान्येतानि जीवस्य कल्पितानि शिवेन तु ॥ १७ ॥
हृत्कमलं शिरश्चैव सत्त्वे यावद् व्यवस्थितम् ।
देहसंत्यक्त इत्युक्तः शिवेन परमात्मना ॥ १८ ॥
यावन्न चलते जीवस्तावन्निश्चलतां गतः ।
नाभिस्थो निष्कलं ज्ञात्वा मुच्यते जन्मबन्धनात् ॥ १९ ॥

नाभिस्थः सर्वकालेषु हृदि तिष्ठति सर्वगः ।
वक्त्रनासापुटान्तःस्थो भुङ्क्ते च विषयान् प्रभुः ॥ २० ॥

जीवः पश्यति देहस्थो जीविते च महेश्वरः ।
भुङ्क्ते भोगं शुभं जीवो देहिदेहे व्यवस्थितः ॥ २१ ॥

देहं त्यक्त्वा यदा जीवो बहिराकाशमाश्रितः ।
तदात्मविषयो जीवो जायते नात्र संशयः ॥ २२ ॥

तदिदं निष्कलं ब्रह्म ध्यायेदिति सदाशिवम् ।
ध्यात्वा शिवं च सहजं मुच्यते भवबन्धनात् ॥ २३ ॥

सर्वगः सर्वदेहस्थो नासाग्रे च प्रतिष्ठितः ।
प्रत्यक्षः सर्वभूतानां दृश्यते न च लक्ष्यते ॥ २४ ॥

नाभिमध्ये स्थितं जीवं शुद्धतत्त्वं तु निर्मलम् ।
आदित्यमिव दीप्तं तु रश्मिभिर्ज्वलितं शुभम् ॥ २५ ॥

हकारार्द्धनिभं जीवं जीवो देहे च संस्थितः ।
नाभिरन्ध्रं चितं ख्यातं विषयान् प्राप्य संस्थितम् ॥ २६ ॥

तेनेदमखिलं व्याप्तं क्षीरं च सर्पिषा यथा ।
कारणं नात्मनश्चैव प्राणापानैस्तु पञ्चभिः ॥ २७ ॥

श्वासनिःश्वासयोगेन अध ऊर्ध्वं प्रवर्तते ।
शुष्कपत्रं तु वातेन नीयते गगनं यथा ॥ २८ ॥

तथा भ्रमति जीवाख्यं प्राणापानैस्तु पञ्चभिः ।
चतुष्कलासमायुक्तो भ्राम्यते हृदये स्थितः ॥ २९ ॥

गोलकं तु यथा देवि ! स्वेन दण्डेन ताडितः ।
ततस्तु पतने शीघ्रमविश्रान्तः पुनः पुनः ॥ ३० ॥

पार्वती उवाच—

यदिदं निष्कलं ब्रह्म व्योमातीतं निरञ्जनम् ।
निष्कलं निर्मलं शान्तं निष्प्रपञ्चमलक्षणम् ॥ ३१ ॥

अप्रत्यक्षमविज्ञेयं विनाशोत्पत्तिवर्जितम् ।
कैवल्यं केवलं शान्तं शुद्धस्फटिकसन्निभम् ॥ ३२ ॥

करणयोगनिर्मुक्तं हेतुसाधनवर्जितम् ।
तत्क्षणान्मुच्यते येन तद् ज्ञानं ब्रूहि शङ्कर ! ॥ ३३ ॥

ईश्वर उवाच

एतदेव महाभागे ! कुमारो ब्रह्मणः सुतः ।
परिसमेत्य योगेशं विष्णुं विश्वैककारणम् ।
उवाच परया भक्त्या ब्रह्मविद्यां वद प्रभो ! ॥ ३४ ॥

ययाऽचिरात् सर्वपापं व्यपोह्य परात् परं पुरुषं याति विद्वान् ।
तस्मै स होवाच जगत्प्रभुश्च श्रद्धाभक्तिध्यानयोगादवैहि ॥ ३५ ॥

न कर्मणा न प्रजया धनेन त्यागेनैकेन अमृतत्वमानशुः ।
परेण [1]चक्रि निहितं गुहायां विभ्राजते यद् यतयो विशन्ति ॥ ३६ ॥

वेदान्तविज्ञानविनिश्चितार्थाः संन्यासयोगाद् यतयो विशुद्धाः ।
ते ब्रह्मलोकेषु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे ॥ ३७ ॥

विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरःशरीरः ।
अत्याश्रमस्थः[2] सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य ॥ ३८ ॥
हृत्पुण्डरीकं विरुजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम् ।
अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् ॥ ३९ ॥

---

१. नाकं–ख० ।
२. स्वस्वाश्रमस्थः–ख० ।

[1]तमादिमध्यान्तविहीनमेकं विभुं[2] चिदानन्दमरूपमद्भुतम्[3] ।
उमासहायं [4]परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ॥
ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः [5]परस्तात् ॥ ४० ॥
स ब्रह्मा शिवः स इन्द्रः सोऽक्षरः परमः स्वराड् विष्णुः स प्राणः ।
स कालोऽग्निः स चन्द्रमाः स सर्वं यद् भूतं यच्च भाव्यं सनातनम् ॥ ४१ ॥
ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ॥ ४२ ॥
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
संपश्यन् परमं ब्रह्म याति नान्येन हेतुना ॥ ४३ ॥
आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ज्ञाननिर्मन्थनाभ्यासात् [6]पाशं दहति पण्डितः ॥ ४४ ॥
स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् ।
स्त्रीस्वन्नपानादिविचित्रभोगैः स एव जाग्रन् परितृप्तिमेति ॥ ४५ ॥
स्वप्ने च जीवः सुखदुःखभोक्ता स्वमायया कल्पितं[7] विश्वलोके ।
सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति ॥ ४६ ॥
पुनश्च जन्मान्तरकर्मयोगात् स एव जीवः [8]स्वपिति प्रबुद्धः ।
पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं विचित्रम् ॥
आधारमानन्दमखण्डरोधं यस्मिन् लयं याति पुरत्रयं च ॥ ४७ ॥

---

१. अथादि—ख० ।
२. विधिं—ख० ।
३. अद्भुतः—ख० ।
४. परमेशं—ख० ।
५. पुरस्तात्—ख० ।
६. पापं—ख० ।
७. कल्पितो—ख० ।
८. स्वपति—ख० ।

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
एवं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी ॥ ४८ ॥
यत् पुनर्ब्रह्म सर्वात्मा सर्वस्यायतनं महत् ।
सूक्ष्मात् सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत् ॥ ४९ ॥
जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत् प्रकाशते ।
तद् ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥ ५० ॥
त्रिषु धामसु यद् भोग्यं भोक्ता भोगश्च यद् भवेत् ।
तेभ्यो विलक्षणः सोऽहं चिन्मात्रोऽहं सदाशिवः ॥ ५१ ॥
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद् [1]ब्रह्माद्वयमस्म्यहम् ॥ ५२ ॥
अणोरणीयानहमेव तत्तन्महानहं विश्वमिदं[2] विचित्रम् ।
पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोऽहं पुरुषोऽहमस्मि॥ ५३ ॥
अपाणिपादोऽहमचिन्त्यशक्तिः पश्याम्यचक्षुः स श्रृणोम्यकर्णः ।
अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम चित् सदाहम् ॥ ५४ ॥
वेदैरनेकैरहमेव वेद्यो वेदान्तकृद् वेदविदेव चाहम् ।
न पुण्यपापे मम नास्ति नाशो न जन्म देहेन्द्रियबुद्धिरास्ते ॥ ५५ ॥
न भूमिरापो मम नास्ति वह्निर्न चानिलो मेऽस्ति न चाम्बरं च ।
एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम् ।
समस्तसाक्षिं सदसद्विहीनं प्रयाति शुद्धं परमात्मरूपम् ॥ ५६ ॥
य एतत् तन्त्रं समधीते सोऽग्निपूतो भवति । सुरापानात् पूतो भवति ।
कृत्याकृत्यात् पूतो भवति । अगम्यागमनात् पूतो भवति ॥ ५७ ॥

इति श्रीगन्धर्वतन्त्रे द्विचत्वारिंशत्तमः पटलः समाप्तः ॥ ४२ ॥
॥ समाप्तश्चायं ग्रन्थः ॥



---

१. ब्रह्माद्वयेऽस्म्यहम्–ख० ।
२. विश्वमहम्–ख० ।

# मुण्डमालातन्त्रम्

## प्रथमः पटलः

॥ ॐ नमः परमदेवतायै ॥

कैलासशिखरे रम्ये गन्धर्वगणसेविते ।
हरवक्षःस्थिता देवी पृच्छति स्म नगात्मजा ॥ १ ॥

श्रीदेवी उवाच

देवदेव महादेव ! सृष्टिस्थित्यन्तकारक ।
नीलकण्ठ जगन्नाथ प्रभो शङ्कर भो हर ॥ २ ॥
नमस्तुभ्यं जगन्नाथ ! मम नाथामरप्रभो ! ।
शरणाऽऽगत-दीनार्त्त-परित्राण-परायण ! ॥ ३ ॥
सर्वाधार निराधार साधार धरणीधर ।
वेदविद्याधराधार गङ्गाधर ! नमोऽस्तु ते ॥ ४ ॥
श्रुतं परमतन्त्रं वै सारात् सारं परात् परम् ।
यत् श्रुत्वा शीघ्रमायाति शिवलोकमनामयम् ॥ ५ ॥
कालीतन्त्रे कुब्जिकायां तथा कालीविलासके ।
डामरे यामले कालीसर्वस्वे योनितन्त्रके ॥ ६ ॥
सम्मोहने विक्रमे च तन्त्रे चैव कुलार्णवे ।
मातृकाभेदतन्त्रे च समयाचारतन्त्रके ॥ ७ ॥
वीरतन्त्रे तोडले च तथा भैरवतन्त्रके ।
ज्ञानतन्त्रे च निर्वाणे श्रुतं परममादरात् ॥ ८ ॥

इदानीं श्रोतुमिच्छामि गुह्याद् गुह्यतरं परम्।
सारात् सारतरं देव! पावनं सर्वदेहिनाम्।
श्रुत्वा जीवः शिवत्वं च लभते नात्र संशयः॥ ९॥

श्रीशिव उवाच

धन्यासि पतिभक्तासि प्राणतुल्यासि शङ्करि!।
योषिच्चपलभावत्वात् पुरा नोक्तं त्वयि प्रिये!॥ १०॥

इदानीं स्थिरतां ज्ञात्वा कथयामि त्वयि प्रिये!।
अस्ति चैकं मुण्डमालातन्त्रं परमसाधनम्॥ ११॥

ज्ञात्वा जीवः शिवो भूत्वा विहरेत् क्षितिमण्डले।
अतिगोप्यं महेशानि! तन्त्रराजं मनोहरम्॥ १२॥

मुण्डे मुण्डे च कथितं कथितं मुण्डमालया।
श्रृणु गुह्यं वरारोहे! किं पृच्छसि नगात्मजे॥ १३॥

श्रीपार्वती उवाच

देवदेव महादेव विश्वनाथ! महेश्वर।
त्रयाणामेवमाचारं त्रयाणां भावशोधनम्।
त्रयाणां समयाचारं येन दुर्गा प्रसीदति॥ १४॥

श्रीशिव उवाच

यथा काली तथा तारा तथा त्रिपुरसुन्दरी।
भैरवी तु वना विद्या छिन्ना च बगलामुखी॥ १५॥

धूमा भीमाऽन्नपूर्णा च दुर्गा च कमलात्मिका।
मातङ्गी धनदा पर्णावती सर्वार्थसिद्धिदा॥ १६॥

नानादेवी महाविद्या उपविद्याः पृथक् पृथक्।
नानातन्त्रे महेशानि! कथिता शिवसुन्दरि!॥ १७॥

आचारं विविधं दुर्गे! दक्षिणं दक्षिणेतरम्।
मुण्डमालामहातन्त्रं सर्वेषां ज्ञानसाधनम्॥ १८॥

एका दुर्गा महेशानि ! एको देवः सदाशिवः ।
अहमेकः शिवो देवो नान्यो देवः कथञ्चन ॥ १९ ॥

सा वै भवानी मे पत्नी सर्वदा ज्ञानमालभेत् ।
तदैव जायते सिद्धिर्भक्तिरव्यभिचारिणी ॥ २० ॥

ज्ञानं विना परं तत्त्वं न जानामि महीतले ।
अत एव परं ज्ञानं भावयेत् सर्वकोविदः ॥ २१ ॥

दुर्लभ्यं शृणु देवेशि ! मम साधनकारणम् ।
अतः परतरं देवि ! दुर्गमं परसाधनम् ॥ २२ ॥

सर्वशान्तिकरं चैव सर्वदुःखहरं परम् ।
सर्वरोगक्षयकरं सर्वसाधनशोधनम् ॥ २३ ॥

ब्रह्मादीनां च दुर्लभ्यं सर्वेषां शिवदुर्लभम् ।
यः शाक्तो धरणीमध्ये स शिवो नात्र संशयः ॥ २४ ॥

यासां विज्ञानमात्रेण जीवन्मुक्तः प्रजायते ।
भक्त्या भक्त्या जपेन्मन्त्रं साधको धरणीतले ॥ २५ ॥

जीवन्मुक्तः सदा मुक्तः सर्वकर्मसु कोविदः ।
योऽन्येभ्यो दर्शयेद् यश्च भुक्तिं मुक्तिं च काङ्क्षति ॥ २६ ॥

स्वप्नलब्धधनेनैव धनवान् स भवेद् यदि ।
शुक्तौ रजतविभ्रान्तिर्यथा जायेत पार्वति ! ॥ २७ ॥

तथान्यदर्शनेभ्यश्च भुक्तिं मुक्तिं च काङ्क्षति ।
विना दुर्गां न मे ज्ञानं विना दुर्गां न मे रतिः ॥ २८ ॥

विना दुर्गां न निर्वाणं सत्यं सत्यं वदाम्यहम् ।
न त्र्यक्षा भक्तिरमला प्रेयसी परमा क्रिया ॥ २९ ॥

शक्तिद्वयं समाश्रित्य शक्तेः परमपूजकः ।
आद्यं देवि ! सुदुर्ज्ञेयं मध्यं पञ्च विभूषितम् ॥ ३० ॥

शेषं कुलमयेनेशं नास्ति नास्ति वरानने ! ।
सत्यं वेद्मि हितं वेद्मि पुनर्वेद्मि वरानने ! ॥ ३१ ॥

विना दुर्गापरिज्ञानात् को वा तरति कोविदः ।
को वेद परमं तत्त्वं को वेद निखिलं पदम् ॥ ३२ ॥

को वेद भैरवाचारं यो वेद स च कोविदः ।
स कुलीनः स शूरश्च स पञ्चमविभूषितः ॥ ३३ ॥

यो जानाति जगद्धात्रि ! जगदीशे जयावहे ।
मध्यस्थः पार्वतीतत्त्वं न पुनर्देहभाग् भवेत् ॥ ३४ ॥

आदौ गुरुं समभ्यर्च्य अन्ते परमसाधनम् ।
क्रियाशक्तिरतो जन्तुः सर्वभाग् जायते खलु ॥ ३५ ॥

निदानं नास्ति दुर्गाया ममैव जगदम्बिके ।
अन्येषामस्ति वै स्वर्गे धरणीतलकेतने ॥ ३६ ॥

अतः सत्यं पुनः सत्यं पुनः सत्यं वदाम्यहम् ।
भावाभावसमायुक्ता यान्ति मोक्षं निरामयम् ॥ ३७ ॥

या पृच्छा ते निगदिता सर्वं जानामि शङ्करि ! ।
विदिता परमा विद्या करालवदना शिवा ॥ ३८ ॥

एतस्याश्चरितं यस्तु एतस्याः साधकस्य च ।
चरितं दुर्लभं लोके तेषां मध्ये वदाम्यहम् ॥ ३९ ॥

गुरुरेकः शिवः साक्षाद् गुरुः सर्वार्थसाधकः ।
गुरुरेव परं तत्त्वं सर्वं गुरुमयं जगत् ॥ ४० ॥

विना गुरुप्रसादेन कोटिपुरश्चरणेन किम् ।
गुरुपूजां विना देवि ! नहि सिध्यति भूतले ॥ ४१ ॥

गुरुपूजां विना देवि ! इष्टपूजां करोति यः ।
मन्त्रस्य तस्य तेजांसि हरते भैरवः स्वयम् ॥ ४२ ॥

देवतागुरुमन्त्राणामैक्यं सम्भावयन् धिया ।
तदा सिद्धो भवेन्मन्त्रः प्रकटे हानिरेव च ॥ ४३ ॥

श्रीपार्वती उवाच

ऐक्यज्ञानं महादेव ! कथमुत्पद्यते प्रभो ! ।
नराकृतिगुरुर्मन्त्रे देवता ध्यानरूपिणी ॥
मन्त्राश्चाक्षररूपेण कथमैक्यं भवेच्छिव ! ॥ ४४ ॥

श्रीशिव उवाच

धन्यासि प्राणतुल्यासि पतिभक्तासि पार्वति ! ।
एकजातिस्वरूपेण स्वभावादेकजन्मतः ॥ ४५ ॥
एतेषां भावयोगे तु एकसाधनमेव हि ।
गुरोर्जातश्च मन्त्रश्च मन्त्रा जाता तु सुन्दरि ! ॥ ४६ ॥
अत एव वरारोहे ! देवतायाः पितामहः ।
पितुश्च भावनाद् देवि ! तथा चैव पितुः पितुः ॥ ४७ ॥
तदुद्भवं तोषमेति विपरीते विपर्ययः ।
गुरुः कर्ता गुरुर्हर्ता गुरुः पाता महीतले ॥ ४८ ॥
गुरोः सन्तोषमात्रेण तुष्टाः स्युः सर्वदेवताः ।
गुरौ तुष्टे शिवस्तुष्टो रुष्टे रुष्टस्त्रिलोचनः ॥ ४९ ॥
गुरौ तुष्टे शिवा तुष्टा रुष्टे रुष्टा च सुन्दरी ।
अतो गुरुर्महेशानि ! संसारार्णवलङ्घने ॥ ५० ॥
कर्ता पाता च हर्ता च गुरुर्मोक्षप्रदायकः ।
जीवः शिवः शिवो देवः सजीवः केवलः शिवः ॥ ५१ ॥
पाशबद्धो भवेज्जीवः पाशमुक्तः सदाशिवः ।
प्रणम्य गुरुपादाब्जं ध्यात्वा च गुरुपादुकाम् ॥ ५२ ॥
ज्ञात्वा परमतत्त्वं वै यो भजेत् कुलचण्डिकाम् ।
स कृतार्थः स धन्यश्च स कृतज्ञः स पण्डितः ॥ ५३ ॥

स्वभावज्ञो महादेवि ! जायते नात्र संशयः ।
ध्यातः स्मृतः पूजितो वा नमितो वापि यत्नतः ॥ ५४ ॥

ज्ञानतोऽज्ञानतो वापि पूजाकालं विमुक्तिदः ।
चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः ॥ ५५ ॥

उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना ।
सर्वदेवमयीं देवीं सर्वदेवमयीं पराम् ॥ ५६ ॥

अज्ञानां चिन्तयेद् देवीं परंब्रह्मस्वरूपिणीम् ।
नित्या च निष्कलङ्का च निराधारा निराश्रया ॥ ५७ ॥

सर्वाधारा निराधारा विजया च जयावहा ।
सगुणा निर्गुणा चेति महामाया द्विधा मता ॥ ५८ ॥

सगुणा मायया युक्ता तया हीना च निर्गुणा ।
सगुणा च यदा देवी सगुणोऽयं सदाशिवः ॥ ५९ ॥

निर्गुणा त्वं महामाये ! निर्गुणोऽहं न संशयः ।
त्वमेव निर्गुणो शक्तिरहमेव च निर्गुणः ॥ ६० ॥

यो भजेत् सगुणो देवि ! चाचिरात् सोऽपि निर्गुणः ।
गुणातीतं परं ब्रह्म निरीहं वर्णवर्जितम् ॥ ६१ ॥

तदेव परमा विद्या काल्यादिसगुणान्विता ।
साधकस्य हितार्थाय शाक्तस्यानुग्रहाय च ॥
उत्थिता परमा विद्या सगुणा नात्र संशयः ॥ ६२ ॥

॥ इति मुण्डमालातन्त्रे पार्वतीश्वरसंवादे प्रथमः पटलः ॥ १ ॥



# अथ द्वितीयः पटलः

एकदा पार्वती देवी करालवदना शिवा।
पप्रच्छ पार्वती देवी हसन्ती कालिका परा ॥ १ ॥

श्रीपार्वती उवाच

महादेव ! महेशान महेश्वर सदाशिव।
पृच्छाम्येकं महाभाग कृपया कथय प्रभो ॥ २ ॥

विना ध्यानं कुम्भकं च प्राणायामं च कुल्लुकाम्।
जपं तपो धारणं च सेतुं चैव विना करम् ॥ ३ ॥

विना हंसं विना पिण्डं विना भावं विना पदम्।
कथं वा जायते सिद्धिर्वद नाथ ! जगद्गुरो ॥ ४ ॥

श्रीशिव उवाच

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरेव च जातिभिः।
वामराशिप्रभावेण कर्तव्यं जपपूजनम् ॥ ५ ॥

ये शाक्ता ब्राह्मणा देवि ! क्षत्रिया ब्राह्मणाः स्मृताः।
वैश्याश्च ब्राह्मणाश्चण्डि ! सर्वे शूद्राश्च ब्राह्मणाः ॥ ६ ॥

ब्राह्मणाः शङ्कराश्चण्डि ! त्रिनेत्रश्चन्द्रशेखरः।
रक्तपुष्पैर्जगद्धात्रीं पूजयेद्धरवल्लभाम् ॥ ७ ॥

वज्रपुष्पेण देवेशि ! देवीं त्रिभुवनेश्वरीम्।
पूजयेद् भक्तिभावेन दुर्गां मोक्षविधायिनीम् ॥ ८ ॥

हरसम्पर्कहीनाया लतायाः काममन्दिरे।
जातं कुसुममादाय महादेव्यै निवेदयेत् ॥ ९ ॥

स्वयम्भुकुसुमं देवि ! रक्तचन्दनसंज्ञकम् ।
यथा त्रिशूलपुष्पं च वज्रपुष्पं वरानने ! ॥ १० ॥

अनुकल्पं लोहिताग्रं चन्दनं हरवल्लभम् ।
कदाचित् कस्य मुक्तिः स्यात् कदाचिद् भुक्तिरेव च॥ ११ ॥

एतस्याः साधकस्याथ भुक्तिर्मुक्तिः करे स्थिता ।
योगी चेन्नहि भोगी स्याद् भोगी चेन्नहि योगवान् ॥ १२ ॥

योगभोगात्मकं कौलं तस्मात् कौलं समभ्यसेत् ।
नहि योगी न वा भोगी न योगी योगवानिति ॥ १३ ॥

योगी भोगी न वा भोगी भवेद् भोगी न संशयः ।
शिवभक्तिं विना देवि ! यो धावति च मूढधीः ॥ १४ ॥

न योगी स्यान्न भोगी स्यात् कल्पकोटिशतैरपि ।
रुद्रस्य चिन्तनाद् रुद्रो विष्णुः स्याद् विष्णुचिन्तनात्॥ १५ ॥

दुर्गायाश्चिन्तनाद् दुर्गा भवत्येव न संशयः ।
यथा शिवस्तथा दुर्गा या दुर्गा शिव एव सा ॥ १६ ॥

तत्र यः कुरुते भेदं स एव मूढधीर्नरः ।
देवि ! विष्णुशिवादीनामेकत्वं परिचिन्तयेत् ॥ १७ ॥

भेदकृन्नरकं याति रौरवं पापपूरुषः ।
नहि दुर्गासमा पूजा नहि दुर्गासमं फलम् ॥ १८ ॥

नहि दुर्गासमं ज्ञानं नहि दुर्गासमं तपः ।
दुर्गायाश्चरितं यत्र तत्र कैलासमन्दिरम् ॥ १९ ॥

इदं सत्यमिदं सत्यमिदं सत्यं वरानने ! ।
स्वर्गे मर्त्ये च पाताले नास्ति शाक्तात् परः प्रियः ॥ २० ॥

सौगणां गाणपत्यानां वैष्णवानां तथैव च ।
ततोऽन्ते चैव शाक्तानां क्रमशः क्रमशः प्रिये ! ॥ २१ ॥

शृणु देवि! वरारोहे नास्ति शाक्तात् परो जनः ।
शाक्तोऽपि शङ्करः साक्षात् परंब्रह्मस्वरूपभाक् ॥ २२ ॥

आराधिता येन काली तारा त्रिपुरसुन्दरी ।
षोडशी चैव मातङ्गी छिन्ना च बगलामुखी ॥ २३ ॥

आराधिता महेशानि ! स शिवो नात्र संशयः ।
अतिगोप्यं वरारोहे ! शाक्तानां परमं पदम् ॥ २४ ॥

यो जानाति महीमध्ये स शिवो नात्र संशयः ।
ब्रह्माद्यर्चितपादाब्जं यो भजेत् सततं मुदा ॥ २५ ॥

स यात्यचिरकालेन मुक्तिमन्दिरमेव हि ।
एका विद्या च प्रकृतिरेकस्तु पुरुषः शिवः ॥ २६ ॥

एकोऽहं वैष्णवत्वं च एकमेव प्रभाषते ।
एवं च मनसा दुर्गां यो भजेद्धरवल्लभाम् ॥ २७ ॥

पूजयेद् यन्त्रपुष्पैस्तु साधको भुवि मण्डले ।
काककञ्चुं विधायैवं प्राणायामं विशुद्धिदम् ॥ २८ ॥

कुम्भकं मातृकान्यासं प्राणायामं पुनः पुनः ।
प्राणायामत्रयं भद्रे ! अधमोत्तममध्यमम् ॥ २९ ॥

अधमाद् जायते स्वेदो मध्यमाद् गात्रचालनम् ।
उत्तमाच्च क्षितित्यागो जायते नात्र संशयः ॥ ३० ॥

प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ।
नागः कूर्मोऽथ कृकरो देवदत्तो धनञ्जयः ॥ ३१ ॥

प्राणायामेन सर्वेषां विश्रामो जायते भृशम् ।
जवापुष्पैर्द्रोणपुष्पैः करवीरैर्मनोहरैः ॥ ३२ ॥

कृष्णापराजितापुष्पैर्वज्रैश्च मुनिपुष्पकैः ।
पूजयेत् परया भक्त्या चण्डिकां परमेश्वरीम् ॥ ३३ ॥

कालीं करालवदनां मुण्डमालाविभूषिताम् ।
प्रणमेद् भक्तिभावेन पूजयेद्धरवल्लभाम् ॥ ३४ ॥

हिमदिग्विहितो जन्तुः सर्वालङ्कारभूषितः ।
रक्ताम्बरपरीधानो रक्तामाल्यानुलेपनः ॥ ३५ ॥

क्रमेणैवं महेशानि ! सोऽहमित्येव चिन्तयन् ।
एवमीशासने दुर्गां स्थित्वा च साधकोत्तमः ॥ ३६ ॥

श्मशानं शवमारुह्य मध्यस्थो नरसाधकः ।
जप्त्वा महामनुं गुह्यं वसेत् कैलासमन्दिरे ॥ ३७ ॥

शिवोऽहं च शिवेयं च सदा वै मध्यभावना ।
आद्यामाद्यां समास्थाय ध्यायेत् कुण्डलिनीं मुदा ॥ ३८ ॥

कदाचित् तारिणीं विद्यां दुर्गां तारकतारिणीम् ।
पूजयेत् क्रियया शक्त्या ब्रह्मविद्यां मनोरमाम् ॥ ३९ ॥

सहस्रारे महादेवं नीलकण्ठं सदाशिवम् ।
ब्रह्मादिगोप्यं देवेशं ध्यायेत् शक्तिसमन्वितम् ॥ ४० ॥

इदं च दुर्लभं तन्त्रं मन्त्रं यन्त्रं महीतले ।
वाक्यं परमनिर्वाणं दाम्भिके पशुसङ्कटे ॥ ४१ ॥

गोप्तव्यं वै वरारोहे स्वयोनिरिव पार्वति ! ।
दिवा रात्रौ महाभागे प्रजपेत् परमं मनुम् ॥ ४२ ॥

जप्त्वा भवेन्महाज्ञानी गाणपत्यं लभेत् तु सः ।
अहमेव शिवं ब्रह्म शिवोऽहं भैरवो ह्यहम् ॥ ४३ ॥

भैरवोऽहं भैरवोऽहं रमणी मम भैरवी ।
मनसा ज्ञानमासाद्य साधकेन्द्रो भवेद् भुवि ॥ ४४ ॥

एवं ज्ञानं परं नित्यं निर्विकारं मनोरमम् ।
प्राप्यैवं सर्वदा जीवो विहरेत् क्षितिमण्डले ॥ ४५ ॥

पाद्यार्घ्याचमनीयाद्यैः पूजयेत् परमेश्वरीम् ।
सदानन्दः स विज्ञेयः सर्वधर्मार्थसाधकः ॥ ४६ ॥

भक्त्या च क्रियया चण्डि ! प्रणमेद् यस्तु कालिकाम् ।
जीवः शिवत्वं लभते सत्यं सत्यं न संशयः ॥ ४७ ॥

क्व यमः क्व तपो विष्णुः क्व कलिः कर्महिंसकः ।
सर्वं च मानसं क्लेशं सदा सत्यं विभावयेत् ॥ ४८ ॥

एवं विधानमासाद्य प्रजपेत् भावयेत् सुधीः ।
सोऽचिरेणैव कालेन शिवत्वं लभते जनः ॥ ४९ ॥

सदा क्रिया प्रकर्त्तव्या क्रियया सिद्धिमुत्तमाम् ।
प्राप्नोति सर्वदा शुद्धिमत एवं न वा त्यजेत् ॥ ५० ॥

श्मशानसिद्धिर्वैराग्यं शवसिद्धिर्वरानने ! ।
दुर्गानुग्रहमात्रेण भविष्यति न संशयः ॥ ५१ ॥

दिव्यस्तु देववत् प्रायो वीरश्चोद्धतमानसः ।
पशुभावस्तथा देवि ! शुद्धश्च धरणीतले ॥ ५२ ॥

श्रुत्वा हसन्ती काली सा करालकमला कला ।
दिगम्बरा दिव्यदेहा प्राह देवं त्रिलोचनम् ॥ ५३ ॥

गोप्यं यत् कथितं नाथ ! श्रुतं परममादरात् ।
अतिगोप्यं रहस्यं च श्रोतुमिच्छाम्यहं पुनः ॥ ५४ ॥

दिव्यं च दुर्लभं नाथ ! वीरो जातिविहिंसकः ।
पशौ नाधिष्ठिता दुर्गा वीरतन्त्रे पुरा श्रुतम् ॥
इदानीं श्रोतुमिच्छामि ब्रह्मवाक्यं सदाशिवम् ॥ ५५ ॥

श्रीशिव उवाच

श्रुतं भैरवतन्त्रं च योनितन्त्रं कुलार्णवम् ।
कुलाचारं तथा गुप्तसाधनं गुरुतन्त्रकम् ॥ ५६ ॥

निर्वाणं समयाचारं वीरतन्त्रं श्रुतं पुरा ।
डामरं डमरं डीनं श्रुतं कालीविलासकम् ॥ ५७ ॥

सप्तकोटिमहाग्रन्था मम वक्त्राद् विनिर्गताः ।
यामलं देवि ! ब्रह्मोद्यं यामलं विष्णुयामलम् ॥ ५८ ॥

शिवयामलकं देवि ! यामलं मित्रयामलम् ।
शक्तियामलकं दुर्गे ! कथितं च श्रुतं त्वया ॥ ५९ ॥

तथापि हृदयग्रन्थिरस्ति ते परमेश्वरि ! ।
पुरा सुकथितं तन्त्रं पुरा देवि ! त्वया श्रुतम् ॥ ६० ॥

सङ्केतं समयाचारं तन्त्रं सङ्केतकं तथा ।
कुलसङ्केतकं नाम सङ्केतं बहुविस्तरम् ॥ ६१ ॥

श्मशानसाधनं भद्रे ! शवसाधनमेव च ।
एतत् ते कथितं देवि ! नानाभावं पृथग्विधम् ॥ ६२ ॥

किन्त्वेकं शृणु चार्वङ्गि ! कथयामि समासतः ।
मत्स्यं मांसं च मद्यं च मुद्रा मैथुनमेव च ॥ ६३ ॥

दिव्यानां चैव वीराणां साधनं भावसाधनम् ।
न मद्यं प्रपिबेद् विप्रो न मुद्रां भक्षयेद् सदा ॥ ६४ ॥

न मैथुनमगम्यासु कर्तव्यं सिद्धिनाशनम् ।
अवधूतः शिवः साक्षादवधूतः सदाशिवः ॥ ६५ ॥

अवधूती शिवा देवी अवधूताश्रमो महान् ।
अवधूतश्च द्विविधो गृहस्थश्च हितानुगः ॥ ६६ ॥

सचेलश्चापि दिग्वासो विधियोनिविहारवान् ।
सदारः सर्वदावस्थो ह्यर्द्धहासो दिगम्बरः ॥ ६७ ॥

गृहावधूतो देवेशि ! द्वितीयस्तु सदाशिवः ।
न कलौ साधनं मद्यं प्रत्यक्षं वरवर्णिनि ॥ ६८ ॥

गृहावधूतः सर्वत्र कर्तव्यं च दिगम्बरि ! ।
अत एव वरारोहे ! मिश्राचारं प्रकल्पयेत् ॥ ६९ ॥

एवमाचारमिश्रेण पूजयेद् यस्तु कालिकाम् ।
सन्तुष्टा सा जगद्धात्री मोक्षमार्गविधायिनी ॥ ७० ॥

स्वकरस्थश्च भोगश्च स्वकरस्थश्च मोक्षकः ।
देवीमन्त्रप्रसादेन किं न सिध्यति भूतले ॥ ७१ ॥

सुराणां चाऽसुराणां च किन्नराणां च पार्वति ! ।
शरण्यं तारिणीपादपद्मं मोक्षप्रदायकम् ॥ ७२ ॥

जवापराजिताद्रोणकरवीरैः सितेतरैः ।
गन्धैर्मल्लूरपत्रैश्च नैवेद्यैर्विविधैरपि ॥ ७३ ॥

एवं विधिर्विधातव्यः क्रियासिद्धिकरात्मकः ।
तदैव जायते सिद्धो जीवन्मुक्तः सदाशिवः ॥ ७४ ॥

नारिकेलोदकं चार्द्रं जलं सर्वार्थसाधनम् ।
कांस्ये गुडे सव्यकरे कृत्वा कारणकल्पनम् ॥ ७५ ॥

तदा पूजा विधातव्या मद्येन नगनन्दिनि ! ।
ब्राह्मणी क्षत्रिया वैश्या शूद्राणी सर्वमङ्गला ॥ ७६ ॥

शुक्लं रक्तं तथा पीतं कृष्णं च भद्रमीरितम् ।
शुक्लपुष्पं ब्राह्मणे तु रक्तपुष्पं च क्षत्रिये ॥ ७७ ॥

वैश्ये च पीतपुष्पं च शूद्रे कृष्णं तदीरितम् ।
संविदासुरयोर्मध्ये संविदेव गरीयसी ॥ ७८ ॥

अनुकल्पानि चान्यानि न दद्यात् केवलां सुराम् ।
संविदापानमात्रेण स वीरः स च मद्यपः ॥ ७९ ॥

वाग्जालशास्त्रे कथितं निषिद्धं नगनन्दिनि ! ।
न ग्राह्यं तस्य वाक्यं च ग्राह्यं तन्त्रात्मकं वचः ॥ ८० ॥

शिवा कर्त्री शिवा हर्त्री शिवा शिवविधायिनी ।
शिवेयं रमणी देवी शिवोऽहं शिवकामिनी ॥ ८१ ॥

सदाशिवशिवाराध्या शिवानन्दविधायिनी ।
वामानन्दः शिवानन्दो भवेद् भवसमो जनः ॥
त्रयाणां भावतत्त्वज्ञो भवत्येवं वरानने ! ॥ ८२ ॥

॥ इति मुण्डमालातन्त्रे पार्वतीश्वरसंवादे द्वितीयः पटलः ॥ २ ॥



## अथ तृतीयः पटलः

कैलासशिखरासीनमिन्दुखण्डविभूषितम् ।
पार्वती परया भक्त्या प्राह देवं त्रिलोचनम् ॥
श्रोतुमिच्छाम्यहं नाथ ! तन्त्रान् बहु परिप्लुतान् ॥ १ ॥

श्रीपार्वती उवाच

देवदेव महादेव ! संसारार्णवतारक ।
नमस्ते देव देवेश नीलकण्ठ त्रिलोचन ॥ २ ॥
नमस्ते पार्वतीनाथ ! दशविद्यापते नमः ।
गङ्गाधर जगत्स्वामिन् प्रभो शङ्कर ! भो हर ॥ ३ ॥
निःशेषजगदाधार निराधार निरीहक ।
निर्बीज निर्गुणाभाष सगुणान्तकर प्रभो ! ॥ ४ ॥
नमस्ते विजयाधार विजयेश जयात्मक ।
विजयानन्द सन्तोष विजयाप्राणवल्लभ ॥ ५ ॥
जगदीश जगद्वन्द्य ! जयेश जगदीश्वर ।
विश्वनाथ ! प्रसीद त्वं प्रसन्नो भव शङ्कर ॥ ६ ॥

श्रीशिव उवाच

सप्तकोटिमहाविद्या उपविद्या तथैव च ।
श्रीविष्णोः कोटिमन्त्रेषु कोटिमन्त्रे शिवस्य च ॥ ७ ॥
शूद्राणामधिकारोऽस्ति स्वाहाप्रणववर्जिते ।
सर्वेषां दुर्लभो मार्गो दुर्गमार्गो महेश्वरि ! ॥ ८ ॥
भक्तानां खलु शाक्तानां सुलभात् सुलभः प्रिये ! ।
नातः परतरो देवो नातः परतरं सुखम् ॥ ९ ॥

नातः परतरा विद्या नातः परतरं पदम् ।
शृणु देवि ! वरारोहे ! परात् परं प्रिये ! ॥ १० ॥
केवलं दक्षिणं सव्यमाश्रित्य यदि साधकः ।
भावयेत् परमां विद्यामुमेशो नात्र संशयः ॥ ११ ॥
शृणु चण्डि ! वरारोहे ! करालास्ये दिगम्बरे ।
स्तौति त्वां सततं भक्त्या नमस्ते जगदम्बिके ॥ १२ ॥

श्रीशिव उवाच

घोरदंष्ट्रे करालास्ये सुरामांसबलिप्रिये ।
चण्डमुण्डक्षयकरे मुण्डमालाविभूषिते ॥ १३ ॥
नमस्तेऽस्तु महामाये दुर्गे ! महिषवाहिनि ।
नमस्ते जगदीशानदयिते सर्वमङ्गले ॥ १४ ॥
वक्ष्ये परमतत्त्वं वै सारात् सारं परात् परम् ।
शृणु देवि जगद्धात्रि ! सावधानाऽवधारय ॥ १५ ॥
योनिमुद्राप्रकरणं पूर्वं च गदितं मया ।
त्रिकोणं गुणसंयुक्तं योनिं परमकारणम् ॥ १६ ॥
संगच्छेत् तु शिवाबुद्ध्या शिवरूपी न संशयः ।
तुषेण बद्धो व्रीहिः स्यात् तुषाभावे तु तण्डुलः ॥ १७ ॥
कर्मबद्धो भवेज्जीवः कर्ममुक्तः सदाशिवः ।
जीवानां परमो रोगः कर्मभोगः सुदारुणः ॥ १८ ॥
तस्मात् तारां जगद्धात्रीं पूजयेद् भक्तिभावतः ।
जटा-भस्म-व्याघ्रचर्मधारी परमपावनः ॥ १९ ॥
निरन्तरं जपेद् यस्तु साधकेन्द्रो धरातले ।
स धन्यः स कविर्वीरो दिव्यस्तु परमः पशुः ॥ २० ॥
भावशुद्धिर्ज्ञानशुद्धिः परशुद्धिस्तु सङ्गता ।
चिताशुद्धिः पीठशुद्धिर्ध्यानशद्धिस्तु सच्छिवा ॥ २१ ॥

ज्ञात्वा परमतत्त्वं वै ज्ञानं मोक्षैकसाधनम्।
भवेत् तु परया बुद्ध्या जीवः शिवत्वमालभेत् ॥ २२ ॥

विहारं जगदम्बायाः सहस्रारे मनोरमम्।
सदाशिवेन संयोगं यः करोति स पण्डितः ॥ २३ ॥

ज्ञानिनां च मतं वक्ष्ये ज्ञानिनां च मतं मुदा।
ज्ञानाऽज्ञानसमायुक्तः सर्वदा विहरेद् भुवि ॥ २४ ॥

इडा वामे स्थिता नाडी विधुस्तत्रापि तिष्ठति।
दक्षेऽपि पिङ्गला नाडी सूर्यस्तत्रापि तिष्ठति ॥ २५ ॥

मध्ये सुषुम्ना तन्मध्ये ब्रह्मनाडी मनोहरा।
मध्यमं खं विदध्याद् यो जनो मृत्युञ्जयो भवेत् ॥ २६ ॥

चित्रिणीमध्यगं वायुं पूरणं रेचनं यदा।
करोति वामनासाग्रैरपि सत्यं सुरेश्वरि ! ॥ २७ ॥

दक्षे तु दक्षिणा वामा विरामा चाऽसितासिता।
नाडी वामे कपाला च विजिह्वा शूलकारिणी ॥ २८ ॥

कङ्काला निष्कलङ्का च सव्यदक्षिणतः क्रमात्।
भित्वा च क्रमशश्चक्रं योगीन्द्रैरप्यलभ्यगम् ॥ २९ ॥

नभोमध्यगतं चक्रं सहस्राब्जं मनोरमम्।
कालीपुरं तत्र रम्यं सर्ववर्णात्मकं प्रिये ॥ ! ३० ॥

विधाय चैनां मनसा बुद्ध्या कायेन चण्डिकाम्।
तत्रैव ध्यानमासाद्य प्रकरोति जपार्चनम् ॥ ३१ ॥

यदि ध्यानं वरारोहे ! करोति सततं मुदा।
तदैव जायते सिद्धिर्मुक्तिरव्यभिचारिणी ॥ ३२ ॥

न च ध्यानं न वा पूजा न स्तुतिः परमार्थिका।
पूजयेत् तां जगद्धात्रीं कुसुमैर्मानसोद्भवैः ॥ ३४ ॥

कामरूपे द्विजागारे श्वपचस्य गृहेऽथवा ।
गङ्गाद्वारे प्रयागे च या मुक्तिः पावनी मुखे ॥ ३५ ॥
यत्र कुत्र मृतो ज्ञानी तत्रैव मोक्षमाप्नुयात् ।
दुर्गास्मरणजं पुण्यं दुर्गास्मरणजं फलम् ॥ ३६ ॥
दुर्गायाः स्मरणेनैव किं न सिध्यति भूतले ।
शैवो वा वैष्णवो वापि शाक्तो वा गिरिनन्दिनि ! ॥ ३७ ॥
भजेद् दुर्गां स्मरेद् दुर्गां यजेद् दुर्गां शिवप्रियाम् ।
तत्क्षणाद् देवदेवेशि ! मुच्यते भवबन्धनात् ॥ ३८ ॥
क्षीरोद्धृतं यद्व × × × तत्र क्षिप्तं न पूर्ववत् ।
पृथक् त्वया गुणेभ्यः स्यात् तद्वदात्मा इहोच्यते ॥ ३९ ॥
क्षीरेण सहितं तोयं क्षीरमेव यथा भवेत् ।
अविशेषो भवेत् तद्वद् जीवात्मपरमात्मनोः ॥ ४० ॥
यथा चन्द्रार्कयोर्बिम्बो जलपूर्णघटेषु च ।
घटे भग्ने जलेष्वेव प्रलीनौ चन्द्रसूर्यकौ ॥ ४१ ॥
न जायते न म्रियते आत्मा तु परमः शिवः ।
आत्मज्ञानं समासाद्य संसारार्णवलङ्घने ॥ ४२ ॥
तरत्येवं सदा चण्डि ! जीवः शिवत्वमालभेत् ।
पार्वतीचरणद्वन्द्वभजनात् किन्नरो भवेत् ॥ ४३ ॥
स्वर्गो भोगश्च मोक्षश्च शाक्तानां न भवेत् किमु ।
शाक्तानां चैव निन्दा वै ये कुर्वन्ति नराधमाः ॥ ४४ ॥
तेषां लोहितपानं वै कुर्वन्ति भैरवा गणाः ।
भैरवाश्चैव भैरव्यः सदा हिंसन्ति पामरान् ॥ ४५ ॥
तेषां क्षतजपानं वै कुर्वन्ति बहुरक्तपाः ।
शाक्तान् हिंसन्ति गर्जन्ति निन्दति बहुजल्पकाः ॥ ४६ ॥

भिनत्ति तेषां देवेशि शिरांसि शिववल्लभा ।
शाक्तानामुत्तमो नास्ति स्वर्गे मर्त्ये रसातले ॥ ४७ ॥

शाक्तस्तु शङ्करो ज्ञेयस्त्रिनेत्रश्चन्द्रशेखरः ।
स्वयं गङ्गाधरो भूत्वा विहरेत् क्षितिमण्डले ॥ ४८ ॥

नास्ति तन्त्रसमं शास्त्रं न भक्तः केशवात् परः ।
न योगी शङ्करो ज्ञानी न दुर्गा देवता परा ॥ ४९ ॥

दक्षिणांशे यद्विक्षीणा उरो बाह्यमधः क्षिपेत् ।
गतिर्मृत्युः पलाङ्कोऽर्द्धं खेदयुक्ता च मुक्तिदा ॥ ५० ॥

दुर्गाया मन्त्रनिकरं नानातन्त्रे त्वया श्रुतम् ।
नानामन्त्रं न कुत्रापि कथितं न श्रुतं त्वया ॥ ५१ ॥

दुर्गा दुर्गेति दुर्गेति दुर्गानाम परं मनुम् ।
यो भजेत् सततं चण्डि ! जीवन्मुक्तः स मानवः ॥ ५२ ॥

महोत्पाते महाघोरे महाविपदि सङ्कटे ।
महादुःखे महाशोके महाभयसमुत्थिते ॥ ५३ ॥

यः सदा संस्मरेद् दुर्गां यो जपेत् परमं मनुम् ।
स जीवलोके देवेशि ! नीलकण्ठत्वमाप्नुयात् ॥ ५४ ॥

जीवः शिवः शिवा वामाऽभिरामा शिवनन्दिनि ! ।
एवं भावं समाश्रित्य क्रियाभक्तिसमन्वितः ॥ ५५ ॥

भवत्येवं क्व वा दुःखं क्व भयं नरकं क्व वा ।
क्व कलिश्च क्व कालश्च सर्वं सत्यमयं वपुः ॥ ५६ ॥

काल्याश्चैव हि तारायास्त्रिपुरायाश्च सुन्दरि ! ।
भैरव्या भुवनायाश्च चरितं मुक्तिदायकम् ॥ ५७ ॥

मुक्तिशय्यां ज्ञानमयीं सदा सन्तोषकारिणीम् ।
येनैव भावमासाद्य गच्छेद् दुःखविनाशिनीम् ॥ ५८ ॥

जपनं पार्वतीदेव्याः पूजनं पार्वतीपदम् ।
शरणं पार्वतीदेव्याश्चरणं भवनाशनम् ॥ ५९ ॥

कालस्य यन्त्रणात् काली करालारिविमर्दनात् ।
तस्मात् पदाङ्घ्रिभजनाद् देवीपुत्रो भवेद् ध्रुवम् ॥ ६० ॥

पुरा निगदितं ! चण्डि ! नानाचारं पृथग्विधम् ।
इदानीं यागवृत्तान्तं मनसः शृणु शङ्करि ! ॥ ६१ ॥

हृत्पद्मे भावयेद् दुर्गां देवीं दुर्गतिनाशिनीम् ।
करालां घोरदंष्ट्रां च मुण्डमालाविभूषिताम् ॥ ६२ ॥

शवारूढां श्मशानस्थां तारिणीं च दिगम्बराम् ।
अर्द्धहासां ललज्जिह्वां मेघश्यामां वरप्रदाम् ॥ ६३ ॥

भवानीं यः स्मरेन्नित्यमन्ते स पार्वतीपतिः ।
सहस्रारे स्थितं लिङ्गं तप्तचामीकरप्रभम् ॥ ६४ ॥

कदा शुक्लं कदा कृष्णं पीतं नीलं कदा कदा ।
कदा वर्णमयं लिङ्गं स्वरादिपरिभूषितम् ॥ ६५ ॥

पद्ममध्यस्थितं लिङ्गं ज्योतिर्मयमचिन्तकम् ।
जीवादिभूषितं लिङ्गं कर्णिकोपरि संस्थितम् ॥ ६६ ॥

सदाशिवं ततो भक्त्या प्रणमेद् भक्तिसंयुतः ।
तदा सिद्धिमवाप्नोति नान्यथा कल्पकोटिभिः ॥
किं बहूक्त्या महेशानि ! गुरुभक्त्या च सिध्यति ॥ ६७ ॥

॥ इति मुण्डमालातन्त्रे पार्वतीश्वरसंवादे तृतीयः पटलः ॥ ३ ॥

# अथ चतुर्थः पटलः

देवी उवाच

पृच्छाम्येकं महाभाग ! योगेन्द्र भक्तवत्सल ।
पृच्छामि परमं तत्त्वं देवदेव सदाशिव ॥ १ ॥

श्रीशिव उवाच

कथयिष्ये जगद्धात्रि ! दुर्गायाश्चरितं शृणु ।
एका दुर्गा जगद्धात्री एको हि परमः शिवः ॥ २ ॥
मदंशाश्चैव ये भूतास्ते शैवा नात्र संशयः ।
त्वदंशाश्चैव शाक्ताश्च सत्यं वै गिरिनन्दिनि ! ॥ ३ ॥
बहुवर्षसहस्रान्ते शैवाः शक्तिपरायणाः ।
शाक्ताश्च शाङ्करा देवि ! यस्य कस्य कुलोद्भवाः ॥ ४ ॥
चाण्डाला ब्राह्मणाः शूद्राः क्षत्रिया वैश्यसम्भवाः ।
एते शाक्ता जगद्धात्रि ! न मानुष्याः कदाचन ॥ ५ ॥
पश्यन्ति मानुषान् लोके केवलं चर्मचक्षुषा ।
श्रद्धयाऽश्रद्धया वापि यः कश्चिन्मानवः स्मरेत् ॥ ६ ॥
दुर्गां दुर्गशतोत्तीर्य स याति परमां गतिम् ।
यथेन्द्रश्च कुबेरश्च वरुणः साधको यथा ॥ ७ ॥
तथा च साधको लोके दुर्गाभक्तिपरायणः ।
अभक्त्यापि च भक्त्या वा यः स्मरेद् रुद्रगेहिनीम् ॥ ८ ॥
सुखं भुक्त्वेह लोके तु स यास्यति शिवालयम् ।
इहैव स्वर्गं नरकं मोक्षं वा गिरिनन्दिनि ! ॥ ९ ॥
इह लोके तु वासः स्यात् सर्वशक्तिमयं जगत् ।
दुर्गायाः शतनामानि शृणु त्वं भवगेहिनि ! ॥ १० ॥

दुर्गा भवानी देवेशी विश्वनाथप्रिया शिवा ।
घोरदंष्ट्रा करालास्या मुण्डमालाविभूषिता ॥ ११ ॥

रुद्राणी तारिणी तारा माहेशी भववल्लभा ।
नारायणी जगद्धात्री महादेवप्रिया जया ॥ १२ ॥

विजया च जयाराध्या शर्वाणी हरवल्लभा ।
असिता चाणिमा देवी लघिमा गरिमा तथा ॥ १३ ॥

महेशशक्तिर्विश्वेशी गौरी पर्वतनन्दिनी ।
नित्या च निष्कलङ्का च निरीहा नित्यनूतना ॥ १४ ॥

रक्ता रक्तमुखी वाणी वसुयुक्ता वसुप्रदा ।
रामप्रिया रामरता रघुनाथवरप्रदा ॥ १५ ॥

बाह्येश्वरी बाह्यरता कृष्णा कृष्णवरप्रदा ।
यशोदा राधिका चण्डी द्रौपदी रुक्मिणी तथा ॥ १६ ॥

गुहप्रिया गुहरता गुहवंशविलासिनी ।
गणेशजननी माता विश्वरूपा च जाह्नवी ॥ १७ ॥

गङ्गा काली च काशी च भैरवी भुवनेश्वरी ।
निर्मला च सुगन्धा च देवकी देवपूजिता ॥ १८ ॥

दक्षजा दक्षिणा दक्षा दक्षयज्ञविनाशिनी ।
सुशीला सुन्दरी सौम्या मातङ्गी कमलात्मिका ॥ १९ ॥

निशुम्भनाशिनी शुम्भनाशिनी चण्डनाशिनी ।
धूम्रलोचनसंहर्त्री महिषासुरमर्दिनी ॥ २० ॥

उमा गौरी कराला च कामिनी विश्वमोहनी ।
जगदीशप्रिया जन्मनाशिनी भवनाशिनी ॥ २१ ॥

घोरवक्त्रा ललज्जिह्वा अट्टहासा दिगम्बरा ।
भारती स्वर्गता देवि ! भोगदा मोक्षदायिनी ॥ २२ ॥

इत्येवं शतनामानि कथितानि वरानने ! ।
नामस्मरणमात्रेण जीवन्मुक्तो न संशयः ॥ २३ ॥

यः पठेत् प्रातरुत्थाय स्मृत्वा दुर्गापदद्वयम् ।
मुच्यते जन्मबन्धेभ्यो नात्र कार्या विचारणा ॥ २४ ॥

सिद्धिकाले दिवाभागे निशायां वा निशामुखे ।
पठित्वा शतनामानि मन्त्रसिद्धिं लभेद् ध्रुवम् ॥ २५ ॥

अज्ञात्वा स्तवराजं तु दशविद्यां लभेद् यदि ।
तथा नैव च सिद्धिः स्यात् सत्यं सत्यं महेश्वरि !॥ २६ ॥

कामरूपे कामभागे कामिनीकाममन्दिरे ।
कामिनीवल्लभो भूत्वा विहरेत् क्षितिमण्डले ॥ २७ ॥

वामभागे तु रमणीं संस्थाप्य वरवर्णिनि ! ।
ताम्बूलपूरितमुखः सर्वदा तारिणीं भजेत् ॥ २८ ॥

महानिशाभागमध्ये वामे तु वामलोचनाम् ।
कृत्वा जपति तन्मन्त्रं सिद्धिदं सर्वदेहिनाम् ॥ २९ ॥

विलोक्य मुखपद्मं च वामाया रमणीमुखः ।
प्रकरोत्यट्टहासं च ततो दुर्गा प्रसीदति ॥ ३० ॥

परं ब्रह्म परं धाम परमानन्दकारकम् ।
नित्यानन्दं निर्विकारं निरीहं तारिणीपदम् ॥ ३१ ॥

ध्यात्वा मोक्षमवाप्नोति सत्यं परमसुन्दरि ! ।
यथा दुर्गा तथा वामा यथा वामा तथा शिवा ॥ ३२ ॥

शिवभक्तिमयो भूत्वा विहरेत् सर्वदा शुचिः ।
विना कालीपदद्वन्द्वं कः शाक्तो धरणीतले ॥ ३३ ॥

शक्तिहीनः शवः साक्षात् शक्तियुक्तः सदाशिवः ।
शक्तियुक्तो भवेद् विष्णुरथवा विष्णुरेव हि ॥ ३४ ॥

राजमार्गं शक्तिमार्गं जानीहि जगदम्बिके ! ।
अन्यपूजा न कर्तव्या न स्तुतिर्न च भावना ॥ ३५ ॥

न च ध्यानं योगसिद्धिर्नान्यमन्त्रं विचक्षणैः ।
केवलं कालिकापादपद्मं भवविघट्टनम् ॥ ३६ ॥

नान्यो देवो न वा तीर्थं न ध्यानं न च जल्पना ।
न तीर्थभ्रमणं चण्डि ! न वात्र योगधारणा ॥ ३७ ॥

स्तुतिर्दुर्गा मतिर्दुर्गा स्थितिर्दुर्गा सदाशिवः ।
क्षुधा निद्रा दया भ्रान्तिः क्षान्तिर्दुर्गा यतो गतिः ॥ ३८ ॥

शक्तिः शिवः शिवः शक्तिः शक्तिर्ब्रह्मा जनार्दनः ।
शक्तिः सूर्यश्च चन्द्रश्च कुबेरो वरुणश्च यः ॥ ३९ ॥

शक्तिरूपं जगत् सर्वं यो न वेत्ति स पातकी ।
एवं शक्तिमयं विश्वं यो वेद धरणीतले ॥ ४० ॥

स वेद धरणीमध्ये कालिकां जगदम्बिकाम् ।
स एव सर्वशास्त्रेषु कोविदः सर्ववल्लभः ॥ ४१ ॥

श्मशानसिद्धिं लभते नात्र कार्या विचारणा ।
शून्यागारं श्मशानं वा तुल्यं परमकोविदैः ॥ ४२ ॥

यो वा गच्छति तत्रैव स विश्वेशो भवेद् ध्रुवम् ।
निशाभागे चतुर्दश्याममायां हरवल्लभे ॥ ४३ ॥

जपेदयुतसंख्यं च स सिद्धः सर्वकर्मसु ।
स योगीन्द्रः स भावज्ञः स धीरः सर्वकर्मसु ॥ ४४ ॥

नित्यानन्दः स विज्ञेयः सर्वकार्यविशारदः ।
प्रभातेऽश्वत्थमूले तु गत्वा परमकोविदः ॥ ४५ ॥

पूजयेत् परया भक्त्या सामिषैर्लोहितैरपि ।
बिल्वैर्बिल्वदलैर्वापि बिल्वपुष्पं वरानने ! ॥ ४६ ॥

जपेल्लक्षं चतुर्दश्यामारभ्य नगनन्दिनि ! ।
पञ्चमेन यजेद् देवीं बिल्वमूले दिवानिशम् ॥ ४७ ॥

तदा वाक्सिद्धिमाप्नोति क्षुद्रो वाचस्पतिर्भवेत् ।
आसनं द्वादशविधं सङ्केतासनमुत्तमम् ॥ ४८ ॥

भद्रपीठासनं पद्मासनं सिद्धासनं तथा ।
सिद्धसिद्धासनं देव्यासनं च कुक्कुटासनम् ॥ ४९ ॥

वीरासनं परं भद्रे ! चासनं वरदासनम् ।
सिंहासनं परं देवि ! श्मशानासनमुत्तमम् ॥ ५० ॥

शवासनं वरारोहे ! देवानामपि दुर्लभम् ।
यत्राश्रयेत् परं ब्रह्मासनं परमभूषितम् ॥ ५१ ॥

वामभागे स्त्रियं स्थाप्य धूमामोदसुगन्धिभिः ।
ताम्बूलचर्वणाद्यैश्च पूजयेद् भवगेहिनीम् ॥ ५२ ॥

भवानीं तारिणीं विद्यां ब्रह्मविद्यां मनोहराम् ।
स्तुत्वा मोक्षमवाप्नोति तत्क्षणादेव शाङ्करि ! ॥ ५३ ॥

विश्वमातर्जयाधारे विश्वेश्वरि ! नमोऽस्तु ते ।
करालवदने घोरे चन्द्रशेखरवल्लभे ॥ ५४ ॥

मां तारय महाभागे ! देहि सिद्धिमनुत्तमाम् ।
कामकल्पलतारूपे कामेश्वरि ! कलामते ॥ ५५ ॥

कामरूपे च विजये निस्तारे यशवाहिनी ।
गृहीत्वा शवचाण्डालं धृत्वा भालं मुखं शिरः ॥ ५६ ॥

नासां कर्णौ च हृत्पद्मं नाभिं लिङ्गं गुदं तथा ।
बाहू पृष्ठं च जठरं धृत्वा धृत्वा मुहुर्मुहुः ॥ ५७ ॥

आदौ मायां पुनर्मायां पुनर्मायां नियोजयेत् ।
वधूबीजं तथा लज्जा सर्वाङ्गे निक्षिपेन्मनुम् ॥ ५८ ॥

अष्टोत्तरमनुं जप्त्वा कृत्वा च वन्दनं शिवम् ।
पुनर्विहारबीजेन नीलद्रव्येण चक्षुषा ॥ ५९ ॥

तत्क्षणाद् देवदेवेशि ! जायते नात्र संशयः ।
शून्यागारे महेशानि ! भवेद् धनददिङ्मुखः ॥ ६० ॥

शङ्खमाला गृहीतव्या स्फाटिकी वाऽथ राजती ।
चामीकरमयी माला प्रवालघटिताऽथवा ॥ ६१ ॥

मूर्ध्नि देशे कुल्लुकां च जप्त्वा शतमनुत्तमम् ।
तदा मन्त्रं जपेन्मन्त्री महेशो नात्र संशयः ॥ ६२ ॥

स शक्तः शिवभक्तश्च भैरवश्च सदाशिवः ।
कुलीनश्च कुलज्ञश्च यो जपेत् तारिणीमनुम् ॥ ६३ ॥

हृत्पद्मगां जगद्धात्रीं मूर्ध्नि संस्थां सुरेश्वरीम् ।
भुजङ्गिनीं जागरिणीं भुजगादिविभूषिताम् ॥ ६४ ॥

नारदाद्यैः साधकेन्द्रैः सेवितां सिद्धसेविताम् ।
अश्वत्थे बिल्वमूले वा स्वजायामन्दिरेऽथवा ॥ ६५ ॥

देवीं वा कामिनीं वापि ध्यायेत् परमदेवताम् ।
आद्यां ज्योतिर्मयीं विद्यामभयां वरदां शिवाम् ॥ ६६ ॥

प्रणमेत् स्तुतिभिश्चण्डीं सर्वदोषनिकृन्तनीम् ।
श्मशानस्थः शिवस्थोऽपि पठेत् कवचमुत्तमम् ॥ ६७ ॥

तदा श्मशाने देवेशि ! शवे वा वरवर्णिनि ! ।
सिद्धिर्भविष्यति तदा परपक्षा न भैरवाः ॥ ६८ ॥

उन्मत्तः क्रोधनश्चैव भैरवो बटुकात्मकः ।
संहारो भीषणश्चैव तथा च कालभैरवः ॥ ६९ ॥

महाकालभैरवश्च एते वै वसुसङ्ख्यकाः ।
दृष्ट्वा श्मशानं देवेशि ! शवसाधनमेव च ॥ ७० ॥

नृत्यन्ति भैरवाः सर्वे गर्जन्ति रक्तलोचनाः।
अद्य मत्सदृशो वापि अद्यैव वातुलोऽपि वा ॥ ७१ ॥

शवश्मशानयोर्मध्ये न जानामि कथञ्चन।
मा भैषीर्भैरवाः सर्वे वदिष्यन्ति च बन्धनात् ॥ ७२ ॥

सिंहव्याघ्रवराहाद्याः के वा गर्जन्ति सर्वतः।
मा भैषीश्चैव मा भैषीर्मा भैषीश्चैव साधक ! ॥ ७३ ॥

यो वा वदिष्यति पुरः स गुरुस्तत्त्वकोविदः।
विना तन्त्रपरिज्ञानाद् विना गुरुनिषेवणात् ॥ ७४ ॥

प्राणायामाद् विना ध्यानाद् विना मन्त्रविचालनात्।
विना ज्ञानाद् विना न्यासाद् विना शवविबन्धनात् ॥ ७५ ॥

विना भावाद् विना लाभाद् विना सत्सङ्गसेवनात्।
विना जापाद् विना तापाद् विनापि काममन्दिरात् ॥ ७६ ॥

नहि सिध्यति देवेशि ! प्रत्यक्षं हरवल्लभा।
यदि भाग्यवशाद् देवि ! प्रत्यक्षं हरवल्लभा ॥
तदैव जायते सिद्धिर्महाविद्या प्रसीदति ॥ ७७ ॥

॥ इति मुण्डमालातन्त्रे पार्वतीश्वरसंवादे चतुर्थः पटलः ॥ ४ ॥



# अथ पञ्चमः पटलः

एकदा पार्वती देवी कैलासनिलयाश्रया ।
अट्टहासं प्रकुर्वन्ती प्राह गद्गदया गिरा ॥ १ ॥

श्रीपार्वती उवाच

देवदेव महादेव विश्वनाथ ! सदाशिव ।
पृच्छामि जगदीशान ! मम मन्दिरघर्षणम् ॥ २ ॥

किंविधं वापि भो नाथ ! कस्मिन् काले महेश्वर ।
शिवशक्तिमयं ब्रह्म नित्यानन्दमयं वपुः ॥ ३ ॥

नवकन्यापूजनं च श्रुतं विश्वेश्वर ! प्रभो ।
कुमारीपूजनं देव ! श्रुतं तव प्रसादतः ॥ ४ ॥

श्रीशिव उवाच

शृङ्गारं द्वादशविधं विपरीतं चतुर्विधम् ।
चतुर्विधं च शैवानां नवेषु च करेषु च ॥ ५ ॥

यो न जानाति विश्वेशि ! स पशुर्नात्र संशयः ।
पशोरग्रे न प्रकाश्यं न प्रकाश्यं कथञ्चन ॥ ६ ॥

पशुस्तु दारुणः शत्रुः सर्वभावविलोपकृत् ।
कल्पकोटिशतेनापि वत्सरेणापि शाङ्करि ! ॥ ७ ॥

नहि सिध्यति विश्वेशि ! सत्यं सत्यं वदाम्यहम् ।
शृङ्गाररसलावण्यं यो न जानाति पण्डितः ॥ ८ ॥

स मूर्खः सर्वशास्त्रेषु शक्तिभ्रष्टो न संशयः ।
शृङ्गाररसलावण्ये शाक्तानन्दो यथा भवेत् ॥ ९ ॥

न शैवे वैष्णवे वापि सौरे वा गाणपत्यके ।
तथानन्दो महेशानि ! जायते न कथञ्चन ॥ १० ॥

शिवो जातिः शिवो गात्रं शिवो धर्मः शिवो रतिः ।
शिवः कर्ता शिवः पाता शिवो हर्ता शिवात्मकः ॥ ११ ॥

शिवो बुद्धिः शिवः शान्तिः शिवो गतिः शिवो मतिः ।
शिवः क्रिया शिवः शक्तिः शिवो मुक्तिः शिवात्मिका ॥१२॥

शिवोऽहं नात्र सन्देहो जीवोऽहं शिव एव हि ।
इत्येवं यस्य मनसि वर्तते गिरिनन्दिनि ! ॥ १३ ॥

तदैव जायते सिद्धिर्मुक्तिरव्यभिचारिणी ।
शक्तिमार्गे वरारोहेऽवधूतः शङ्करः स्वयम् ॥ १४ ॥

अवधूती यस्य वामाऽवधूतस्तु स्वयं भवेत् ।
यत्र कुत्र निवासश्च कैलासो नात्र संशयः ॥ १५ ॥

मन्दिरं तस्य कैलासं स्तम्भं मणिमयं स्मृतम् ।
वृक्षाश्च पर्वताश्चैव क्षुद्राः सर्वप्रिये शिवे ! ॥ १६ ॥

क्षुद्राश्च बान्धवा रुद्राः सुप्रधानाः सदाशिवाः ।
भैरवाः किङ्कराः सर्वे भैरव्यश्चेटिकादिकाः ॥ १७ ॥

एवं कैलासभवनं सर्वानन्दकरं परम् ।
मनोहरं सुखमयं सर्वशान्तिमयं तथा ॥ १८ ॥

सर्वप्रियं गुणमयं सर्वसौख्यादिसम्भवम् ।
एवं सर्वमयं सौख्यं यो वै द्रक्ष्यति हे प्रिये ! ॥ १९ ॥

सर्वशक्तियुतो भूत्वा विहरेत् क्षितिमण्डले ।
कृष्णाष्टम्यां नवम्यां वा प्रजपेदयुतं निशि ॥ २० ॥

तदा सिद्धिमवाप्नोति मन्त्रकालपुरःसरः ।
एवं क्रिया प्रकर्तव्या गुप्ता गुप्ततरा स्मृता ॥ २१ ॥

गुप्ता गुप्ततरा पूजा प्रकरात् सिद्धिनाशिनी ।
अन्तःशाक्ता बहिःशैवाः सभायां वैष्णवा मताः ॥ २२ ॥

नानारूपधराः कौला विचरन्ति महीतले ।
एवं विधानसम्भूतं श्रुतं तन्त्रं च मोहनम् ॥ २३ ॥

कुलज्ञानं कुलीनस्य योगिनीहृदयं श्रुतम् ।
सम्मोहनं वीरतन्त्रं श्रुतं श्रीतन्त्रमुत्तमम् ॥ २४ ॥

कुलार्णवस्तथा कालीतन्त्रं कालीविलासकम् ।
श्रीकालीकल्पलतिका श्रुता परममादरात् ॥ २५ ॥

मतभेदे च गुप्ता सा पूजा प्रकटनाशिनी ।
अन्तःशाक्ता बहिःशाक्ताः क्रियाशाक्ता वरानने ! ॥ २६ ॥

भक्तिशाक्ताः कामशाक्ता ध्यानशाक्ता महेश्वरि ! ।
रतिशाक्ताः शक्तिशाक्ताः सर्वकर्मसु नान्यथा ॥ २७ ॥

अन्तःशैवा बहिःशैवाः सभायां वा गृहेऽथवा ।
वैष्णवास्तादृशा एव सर्वकालेषु शङ्करि ! ॥ २८ ॥

इत्येवं परमो भावो गदितः सर्वयोनिषु ।
एवं भावं समाश्रित्य शाक्ताः परमपूजकाः ॥ २९ ॥

नित्यानन्दमयाः सर्वे त्रिनेत्राश्चन्द्रशेखराः ।
सदा शक्तिविहारं च सदानन्दपरिप्लुताः ॥ ३० ॥

सदानन्दः स विज्ञेयः सर्वकर्मसु कौशलः ।
कुलधर्मं समाश्रित्य ये वसन्ति महीतले ॥ ३१ ॥

ते शिवास्ते शिवा जीवा भवन्ति कुलधर्मतः ।
कुलीनः शङ्करो देवः कुलीनस्तु हरिः स्वयम् ॥ ३२ ॥

कुलीनो वासवो देवः कुलीनस्तु पितामहः ।
कुलीना मुनयः सर्वे कुलीनाः पितरः स्मृताः ॥ ३३ ॥

किन्नराश्च कुलीनाश्च नराश्च पशुजीविनः ।
असुराश्च कुलीनाश्च कुलजा न कुलीनकाः ॥ ३४ ॥

अतो न भक्तिर्नो मुक्तिरसुराणां कदाचन ।
राक्षसाश्च कुलीनाश्च गन्धर्वाप्सरयक्षजाः ॥ ३५ ॥

देवीभक्तिं समास्थाय कृतार्थश्च महीतले ।
विना दुर्गापरिज्ञानाद् विफलं पूजनं जपः ॥ ३६ ॥

तपः क्रिया विशुद्धिः स्यादेतत् सर्वमनर्थकम् ।
मूर्खो वा पण्डितो वापि ब्राह्मणो वा वरानने ! ॥ ३७ ॥

क्षत्रियो वैश्यजः शूद्रश्चाण्डालो वरवर्णिनि ! ।
सर्वे तुल्याश्च शाक्ताश्च ह्येतत् सर्वार्थसाधकम् ॥ ३८ ॥

शृणु देवि ! वरारोहे मम वाक्यं सुनिश्चितम् ।
शृङ्गाररसलावण्यं कोविदः सर्वकर्मसु ॥ ३९ ॥

शृङ्गाराज्जायते सृष्टिः शृङ्गाराज्जायते रतिः ।
शृङ्गाराच्छङ्करस्तुष्टः शृङ्गारादपि पार्वति ! ॥ ४० ॥

सन्तुष्टा त्वं च सन्तुष्टो ह्यहमेव वरानने ! ।
शृङ्गारशब्दं ललितं कर्कशं वा सुरेश्वरि ! ॥ ४१ ॥

शृङ्गारशब्दमात्रेण जना यास्यन्ति सद्गतिम् ।
स्त्रियो देव्यः स्त्रियः प्राणाः स्त्रिय एव हि भूषणम् ॥ ४२ ॥

स्त्रीद्वेषो नैव कर्तव्यस्तासु निन्दां प्रहारकम् ।
वर्जयेद् देवदेवेशि ! घृणालज्जाविवर्जितः ॥ ४३ ॥

स्त्रीरूपं तारिणीरूपं यो वेत्ति धरणीतले ।
स स्त्रीपतिश्च विज्ञेयः स एव पार्वतीपतिः ॥ ४४ ॥

कुजे शनैश्चरे वारे गुरौ वा भार्गवे तथा ।
तृतीयां वा द्वितीयां वा पूजयेद् भक्तिभावतः ॥ ४५ ॥

प्रथमो भक्तिसम्पन्नो जनो वापि जनार्दनः ।
आद्यां ज्योतिर्मयीं देवीं चतुर्थीं वापि शाङ्करि ! ॥ ४६ ॥

पूजयेत् पञ्चमीं विद्यां पञ्चमेन विभूषिताम् ।
पञ्चाननप्रियां दुर्गां पूजयेद् भक्तिभावतः ॥ ४७ ॥

एषा क्रिया वरारोहे ! सात्त्विकी राजसी तथा ।
तामसी चैव देवेशि ! श्रुता पूजा महेश्वरि ! ॥ ४८ ॥

या या पूजा निगदिता सा सा पूजा त्वया श्रुता ।
इदानीं कुण्डपुष्पेण गोलपुष्पेण शाङ्करि ! ॥ ४९ ॥

चक्रपुष्पेण शूलेन वज्रपुष्पेण पार्वति ! ।
कालपुष्पेण देवेशि ! पूजयेद्धरवल्लभाम् ॥ ५० ॥

तदा सिद्धिमवाप्नोति सत्यं सत्यं न संशयः ।
कुलमार्गे रतो जीवः शिव एव न संशयः ॥ ५१ ॥

कुलधर्मार्थगो जन्तुर्विहरेत् कुलमार्गके ।
कुलपुष्पं समाश्रित्य कुलीनाश्रममाश्रयेत् ॥ ५२ ॥

कलौ मत्स्यं कलौ मांसं मद्यं मुद्रां च मैथुनम् ।
यथा दिव्यस्तथा वीरो नास्ति भिन्नः शुचिस्मिते ! ॥ ५३ ॥

भक्षणात् पञ्चमस्यापि न दोषो जायते नृणाम् ।
अशक्तानामकर्तव्यं सर्वयोनिविवर्धनम् ॥ ५४ ॥

मद्यपानमकर्तव्यमकर्तव्यं कलौ युगे ।
शाक्तानां चैव शाक्तानां कर्त्तव्यं सर्वसिद्धिदम् ॥ ५५ ॥

महापीठाश्रयं वापि महापीठस्य दर्शनम् ।
महापीठे यजेद् देवीं भक्त्या परमया युतः ॥ ५६ ॥

पूजयेद् रक्तपुष्पैश्च रक्तगन्धानुलेपनैः ।
बिल्वपत्रैस्तथा पुष्पैर्मणिपुष्पैश्च चम्पकैः ॥ ५७ ॥

रक्ताम्बुजै रक्तमाल्यै रक्ताभरणभूषणैः ।
महिषैश्च यजेद् देवीं मेषजैः क्षतजैरपि ॥ ५८ ॥

छागजैर्लोहितैर्देवीं गात्रजैर्ब्राह्मणैरपि ।
एवं विधिविधानेन पूजनं तव सुन्दरि ! ॥ ५९ ॥

कर्तव्यं द्विजलोकेषु गुह्यं तव महेश्वरि ! ।
एवं तव विधातव्या पूजा त्रिभुवनेश्वरि ! ॥ ६० ॥

तदा सिद्धीश्वरो भूत्वा गाणपत्यं लभेत् तु सः ।
न प्रकाश्यं पशोरग्रे मम दिव्यं सुरेश्वरि ! ॥ ६१ ॥

पशोर्दर्शनमात्रेण नश्यन्ति वीरशुद्धयः ।
महासिद्धिकरी पूजा मानसी मुक्तिदायिनी ॥ ६२ ॥

अन्तर्यागात्मिका सर्वजीवत्वपरिनाशिनी ।
बाह्यपूजा राजसी च सर्वसौभाग्यदायिनी ॥ ६३ ॥

भुक्तिमुक्तिप्रदा चैव सर्वापत्परिनाशिनी ।
सर्वदोषक्षयकरी सर्वशत्रुविनाशिनी ॥ ६४ ॥

सर्वरोगक्षयकरी सर्वबन्धविमोचनी ।
न वीराणां पशूनां च बाह्यपूजाऽधमाधमा ॥ ६५ ॥

केवलानां च दिव्यानां बाह्यपूजाऽधमा इति ।
तोडले यामले देवि ! श्रुता पूजा च विस्तरात् ॥ ६६ ॥

तथापि पूजा संक्षेपाद् मयोक्ता गिरिनन्दिनि ! ।
स्तुतिपाठाद् दृढज्ञानात् पूजनाच्छिवसुन्दरि ! ॥ ६७ ॥

सुप्रसन्ना महाविद्या जपात् सिद्धिर्भविष्यति ।
जपाद् भक्तिर्जपाद् मुक्तिर्जपान्मुक्तिर्जपात् क्रिया ॥ ६८ ॥

जपात् तन्त्रं जपान्मन्त्रं जपाद् यन्त्रं सुरेश्वरि ! ।
जपात् कान्तिर्जपात् शान्तिर्जपात् श्रद्धा जपाद् दया ॥ ६९ ॥

जपात् तुष्टिर्जपात् पुष्टिर्जपाद् गतिर्जपान्मतिः ।
जपाद् बुद्धिर्जपाल्लक्ष्मीर्जपाज्ज्ञातिर्जपात् स्थितिः ॥
जपाच्छान्तिर्जपाच्छान्तिर्जपाच्छान्तिर्न संशयः ॥ ७० ॥

॥ इति मुण्डमालातन्त्रे पार्वतीश्वरसंवादे पञ्चमः पटलः ॥ ५ ॥



## अथ षष्ठः पटलः

देवी उवाच

पुरा श्रुतं महादेव ! शवसाधनमेव च ।
श्मशानसाधनं नाथ श्रुतं परममादरात् ॥ १ ॥

न स्तोत्रं कवचं नाथ ! श्रुतं न शवसाधने ।
कवचेन महादेव ! स्तोत्रेणैव च शङ्कर ॥
कथं सिद्धिर्भवेद् देव ! कवचं ब्रूहि साम्प्रतम् ॥ २ ॥

श्रीशिव उवाच

श्रृणु देवि वरारोहे दुर्गे ! परमसुन्दरि ।
सिद्ध्यर्थे विनियोगश्च कवचस्य नियन्त्रणात् ॥ ३ ॥

सिद्धिं सिद्धेश्वरी पातु मस्तकं पातु कालिका ।
कपालं कामिनी भालं पातु नेत्रं नगेश्वरी ॥ ४ ॥

कर्णौ विश्वेश्वरी पातु हृदयं जगदम्बिके ।
काली सदा पातु मुखं जिह्वां नीलसरस्वती ॥ ५ ॥

करौ करालवदना पातु नित्यं सुरेश्वरी ।
दन्तं गुह्यं नखं नाभिं पातु नित्यं हिमात्मजा ॥ ६ ॥

नारायणी कपोलं च गण्डा गण्डं सदैव तु ।
केशं मे भद्रकाली च दुर्गा पातु सुरेश्वरी ॥ ७ ॥

पुमान् रक्षतु मे चण्डी धनं पातु धनेश्वरी ।
स्तनौ विश्वेश्वरी पातु सर्वाङ्गं जगदीश्वरी ॥ ८ ॥

उग्रतारा सदा पातु महानीलसरस्वती ।
पातु जिह्वां महामाया पृष्ठं मे जगदम्बिका ॥ ९ ॥

हरप्रिया पातु नित्यं श्मशाने जगदीश्वरी ।
शवे पातु च शर्वाणी सदा रक्षतु चण्डिका ॥ १० ॥

कात्यायनी कुलं पातु सदा च शववाहिनी ।
घोरदंष्ट्रा करालास्या पार्वती पातु सर्वदा ॥ ११ ॥

कमला पातु राज्यं मे मन्त्रं मन्त्रेश्वरी तथा ।
इत्येवं कवचं देवि ! देवानामपि दुर्लभम् ॥ १२ ॥

यः पठेत् सततं देवि ! सिद्धिमाप्नोति निश्चितम् ।
सिद्धिकाले समुत्पन्ने कवचं प्रपठेद् यदि ॥ १३ ॥

अज्ञात्वा कवचं देवि ! यश्च सिद्धिमुपक्रमः ।
यश्च सिद्धिमवाप्नोति न मुक्तिर्न च सद्गतिः ॥ १४ ॥

अत एव महामाये ! कवचं सिद्धिकारकम् ।
देवानां च नराणां च किन्नराणां च दुर्लभम् ॥ १५ ॥

पठित्वा कवचं चण्डि ! शीघ्रं सिद्धिमवाप्नुयात् ।
महोत्पाते महादुःखे महाविपदि सङ्कटे ॥ १६ ॥

प्रपठेत् कवचं देवि ! पठित्वा मोक्षमाप्नुयात् ।
शून्यागारे श्मशाने वा कामरूपे महाघटे ॥ १७ ॥

स्ववामामन्दिरे कालेऽप्यथवा काममन्दिरे ।
मन्त्रं मन्त्री जपेद् बुद्ध्या भक्त्या परमया युतः ॥ १८ ॥

मूले दले फले वापि नले कालेऽनिले मले ।
जले पठेत् प्राणबुद्ध्या मनसा साधकोत्तमः ॥ १९ ॥

नाडीशुद्धिं ततः कृत्वा भावशुद्धिं महेश्वरि ! ।
विहरेद्धरिमध्ये च सर्वशास्त्रार्थकोविदः ॥ २० ॥

चितामारुह्य सिद्धेशो नीलकण्ठत्वमाप्नुयात् ।
वामे चलति का नाडी दक्षिणे खलु जाह्नवी ॥ २१ ॥

मध्ये कुलाचला नाडी दुर्लभा धरणीतले ।
चित्रिणी पद्मिनी शङ्खा विजृम्भा शोणदा तथा ॥ २२ ॥

कङ्काला कूटजा नाडी कपोला गोलजा खला ।
निजदेहे वसन्त्येता ब्रह्मनाडीं समाश्रिताः ॥ २३ ॥

सर्वासां धरणीमध्ये गौरी सूक्ष्मा च तारिणी ।
घण्टाकर्णा लोलजिह्वा विकटा चन्द्रवल्लभा ॥ २४ ॥

महानीला वीरभद्रा सुलज्जा नखदा शुभा ।
बलाका काकिनी राका कालघण्टा शिवा सिता ॥ २५ ॥

दर्दुरा च दुराराध्या विशोकवदनाऽनघा ।
जम्भिनी पुक्कसा शोणा यशोदा मखदा खदा ॥ २६ ॥

खगा खरवती नाडी कोला हेला हलाहला ।
इडा च पिङ्गला चैव सुषुम्ना प्रागरूपिणी ॥ २७ ॥

गान्धारी कोटराक्षी च कुलजा कुलपण्डिता ।
सव्ये कनखला नाडी दक्षिणे कामपालिका ॥ २८ ॥

विहारं नीलकण्ठस्य देवानामपि दुर्लभम् ।
क्रोडे विश्वम्भरा कामा कराला मेघवाहिनी ॥ २९ ॥

घनभा घनदा चण्डी सुशीला वरपण्डिता ।
विश्वारण्या विश्ववसनी बहुपादा कटाक्षजा ॥ ३० ॥

नन्दिनी शोणदा गङ्गा काशी कमलवासिनी ।
एवं यदि महामाये भावयेत् सुरपूजिताम् ॥ ३१ ॥

तदैव जायते सिद्धिः सत्यं सत्यं न संशयः ।
बहुपादकटा घोरा निर्जिता घनभेदिनी ॥ ३२ ॥

नाडीविहारसम्पर्काज्जीवन्मुक्तो न संशयः ।
शृणु देवेशि ! घोराभे करालाभे दिगम्बरे ॥ ३३ ॥

चिन्तामणिप्रसादेन किं न सिध्यति भूतले ।
मूले चतुर्दले पद्मे स्वाधिष्ठाने च षड्दले ॥ ३४ ॥

मणिपूरेऽनाहते च आज्ञाचक्रे महेश्वरि ! ।
एवं चक्रे परिन्यस्तैर्दशद्वादशषोडशैः ॥ ३५ ॥

दलैस्तु मङ्कुरं वर्णं न्यस्तं गावशतं मतम् ।
यत्र कालीपुरं देवि ! ब्रह्माद्यैरपि सेवितम् ॥ ३६ ॥

नीलकण्ठं त्रिलोकेशं सहस्राब्जनिवासिनम् ।
कोटीशं कुलकोटीशं साधकेन्द्रैः सुशोभितम् ॥ ३७ ॥

ध्यायेत् परमनिर्विण्णो देवः परमपावनः ।
जीवः शिवस्तु विज्ञेयो विश्वेशः सर्वदा रतिः ॥ ३८ ॥

ब्रह्मतत्त्वं वरारोहे ! देवानामपि दुर्लभम् ।
स्वरादिनिष्ठितं लिङ्गं स्वरव्यञ्जनभूषितम् ॥ ३९ ॥

वर्णमालापरिन्यस्तं लिङ्गं भुवनशोभितम् ।
महाबीजं महोत्साहैर्नादितं परमात्मकम् ॥ ४० ॥

नीलकण्ठं महादेवं सदा शक्तिसमन्वितम् ।
ध्यायेत् तु पूजयेद् देवं मनसा वचसा इति ॥ ४१ ॥

तदैव साधको लोके चान्तर्यागपरायणः ।
अन्तर्यागं महामाये ! साधकानामगम्यकम् ॥ ४२ ॥

ब्रह्माण्डं वै शरीरं तु सर्वेषां प्राणधारिणाम् ।
ब्रह्माण्डे ये गुणाः सन्ति ते तिष्ठन्ति कलेवरे ॥ ४३ ॥

शरीरं तत्त्वघटितं नानारसपरिप्लुतम् ।
चन्द्रबिन्दुसमायुक्तं नादबिन्दुविभूषितम् ॥ ४४ ॥

शरीरं शङ्करस्यापि दुर्लभं मुक्तिदायकम् ।
यावन्मुक्तिर्महामाये तावदेव हि साधकः ॥ ४५ ॥

तावत् क्रिया च भुक्तिश्च मुक्तिरव्यभिचारिणी ।
महाघोरे समाक्लेशे शरीरं ब्रह्मणः पदम् ॥ ४६ ॥

पावितं च प्रसूनं च देहजं सर्वमङ्गजम् ।
गृहीत्वा कालिकां देवीं मुण्डमालाविभूषिताम् ॥ ४७ ॥

पूजयेत् परया भक्त्या शिव एव न संशयः ।
ब्रह्माण्डघटितां मूर्तिमङ्गदैश्च विभूषिताम् ॥ ४८ ॥

चतुर्भुजां लोलजिह्वां नानाशक्तिसमन्विताम् ।
पूजयेत् परमानन्दो निजशक्तिसमन्वितः ॥ ४९ ॥

वामे स्ववामां देवेशि ! नानालङ्कारभूषिताम् ।
कुलचक्रस्य देवेशि ! प्रजपेत् तु समः शिवः ॥ ५० ॥

निशि चक्रे करालास्यां मुक्तकेशो दिगम्बरः ।
सहस्रं वाऽयुतं वापि जपेन्मदनमन्दिरे ॥ ५१ ॥

श्वेतं वा लोहितं वापि कुसुमं पञ्चमान्वितम् ।
एवं विधिविधानेन महाकाल्यै निवेदयेत् ॥ ५२ ॥

दिवा पूजा विधातव्या निशि पूजा महेश्वरि ! ।
सन्ध्या पूजा प्रकर्तव्या तदा सिद्धिमवाप्नुयात् ॥ ५३ ॥

न दिवा न निशाभागे न सन्ध्यायां कदाचन ।
पूजयेन्न जगद्धात्रीं हेलायां परिपूजयेत् ॥ ५४ ॥

दिवा न पूजयेद् देवीं रात्रौ नैव च नैव च ।
सर्वदा पूजयेद् देवीं दिवा रात्रौ विवर्जयेत् ॥ ५५ ॥

यथा इडा पिङ्गला च सुषुम्ना ब्रह्मभेदिनी ।
नाडीभ्रमणसम्पर्कान्मुक्तिं प्राप्नोति साधकः ॥ ५६ ॥

विना नाडीपरिज्ञानं विना नाडीनिषेवणम् ।
विना विश्वकरं देवि ! नहि सिध्यति भूतले ॥ ५७ ॥

सव्ये बिल्वं करे दक्षे मालां संगृह्य साधकः ।
प्रजपेत् पार्वतीमन्त्रं सर्वकार्याय भूतले ॥ ५८ ॥

घोरदंष्ट्रां करालास्यामट्टहासां दिगम्बराम् ।
प्रणम्य भक्त्या देवेशीं जपेच्चिन्तामणिं मनुम् ॥ ५९ ॥

चिन्तामणिप्रसादेन किं न सिध्यति भूतले ।
चिन्तामणिं कल्पलतां गृहीत्वा परमां शिवाम् ॥ ६० ॥

जप्त्वा महामनुं चण्डि ! देवदेवेश्वरो भवेत् ।
जीवः शिवत्वं लभते ज्ञानस्य वरवर्णिनि ! ॥ ६१ ॥

गुरुपादाब्जकं देवि ! रहस्यं परमाद्भुतम् ।
विचित्रं चारुपादाब्जं पार्वत्याः शङ्करस्य च ॥ ६२ ॥

भजेदैक्यं विधानेन जीवन्मुक्तः स एव हि ।
पिण्डे युक्ताः पदे युक्ता रूपे युक्ता वरानने ! ॥
गुणातीताश्च ये भक्तास्ते मुक्ता नात्र संशयः ॥ ६३ ॥

श्रीपार्वती उवाच

न पिण्डं न पदं रूपं न जानामि सुरोत्तम ! ।
कथ्यतां मे दयासिन्धो ! निश्चितं मतमुत्तमम् ॥ ६४ ॥

श्रीशिव उवाच

गुह्याद् गुह्यतरं देवि ! सारमेकं वदाम्यहम् ।
पिण्डं कुण्डलिनी शक्तिः पदो हंसः प्रकीर्तितः ॥ ६५ ॥

रूपं चापि वरारोहे ! ध्यानमेव न संशयः ।
महाकुण्डलिनीं देवीं यो भजेत् तु भुजङ्गिनीम् ॥ ६६ ॥

स कृतार्थः स धन्यश्च स देवो वीरसत्तमः ।
स गुणी साधको ज्ञानी स मानी स च पण्डितः ॥ ६७ ॥

स कृती सर्वब्रह्माण्डे देवत्वं लभते ध्रुवम् ।
ये दिव्याः साधकेन्द्राश्च ये वीराः साधकोत्तमाः ॥ ६८ ॥

पशवः पशवो ज्ञेयाः सर्वशास्त्रार्थकोविदाः ।
भावशुद्धिं समास्थाय सर्वकार्यार्थकोविदः ॥ ६९ ॥

साधको मुक्तिमाप्नोति सत्यं सत्यं वरानने ! ।
शृणु देवि ! जगद्धात्रि ! सर्वमङ्गलमङ्गलम् ॥ ७० ॥

तन्त्रं शृणुयाद् देवेशि ! ब्रह्मनिर्वाणमाप्नुयात् ।
निशाभागे जपेन्मन्त्रं वामायुक्तो महेश्वरि ! ॥ ७१ ॥

अयुतं भक्तिभावेन जीवन्मुक्तः स एव हि ।
सहस्रमयुतं वापि कुजवारे निशामुखे ॥ ७२ ॥

जपेच्चिन्तामणिं मन्त्रं क्ष्मातले नात्र संशयः ।
चिन्तामणिप्रसादेन किं न सिध्यति भूतले ॥ ७३ ॥

यथाविधि विधानं च कृत्वा च मन्मथालयम् ।
व्रजेत् तु भक्तिभावेन स गच्छेत् परमां गतिम् ॥ ७४ ॥

नभोगतं महापद्मं सर्वदेवसुपूजितम् ।
तन्मध्यस्थं महादेवं नीलकण्ठं सदाशिवम् ॥ ७५ ॥

यथा शक्तियुतं देवि ! सर्वानन्दमनोहरम् ।
शुक्लं रक्तं नीलवर्णं पीतादिवर्णशोभितम् ॥ ७६ ॥

मनसा चिन्तितं देवि ! देवं परमकारणम् ।
ध्यानं च मनसा देवि ! मनसा परिपूजितम् ॥ ७७ ॥

मनसा पूजयेल्लिङ्गं मनसा तर्पणादिकम् ।
मनसा कालिकां तारां मनसा तु भुजङ्गिनीम् ॥ ७८ ॥

मनसा ब्रह्मनाडीं वै विदध्यात् सर्वकामदाम् ।
इत्येवं ध्यानयोगेन मनसा जगदम्बिकाम् ॥ ७९ ॥

पूजयेत् परया बुद्ध्या स विश्वेशो भवेद् ध्रुवम् ।
सुषुम्नामध्यगां कालीं करालवदनां शिवाम् ॥ ८० ॥

प्रणमेत् पार्वतीं देवीं महानीलसरस्वतीम् ।
उग्रताराक्रमं वक्ष्ये देवानामपि दुर्लभम् ॥ ८१ ॥

त्रिकोणवलयाम्भोजे महानीलसरस्वतीम् ।
मया बुधस्वरूपेण भावयेत् तामहर्निशम् ॥ ८२ ॥

हृत्पद्मे भावयेत् चण्डीं हृत्पद्मे भावयेच्छिवम् ।
हृत्पद्मे भावमासाद्य पूजयेद् वरवर्णिनि ! ॥ ८३ ॥

यावन्नानात्वभावं च तावदेवं पृथग्विधम् ।
तावत् क्रियाः पृथग्भावास्तावन्नानाविधा मताः ॥ ८४ ॥

तावद् भिन्नाश्च देवाश्च ब्रह्मविष्णुमहेश्वराः ।
गणेशं च दिनेशं च वह्निं वरुणमेव च ॥ ८५ ॥

कुबेरं चापि दिक्पालमेतत् सर्वं पृथक् पृथक् ।
तावन्नानाविधाश्चेष्टाः स्त्रीपुंनपुंसकात्मकम् ॥ ८६ ॥

तावद् बिल्वदलं भिन्नं देवेशि ! तुलसीदलात् ।
तावज्जवा द्रोणकृष्णा करवीराणि भूतले ॥ ८७ ॥

विभिन्नानि च देवेशि ! सत्यं वै तुलसीदलात् ।
तावद् दिव्यशरीरश्च तावत् तु पशुभावकः ॥ ८८ ॥

तावत् तन्त्रे भेदबुद्धिस्तावदेव पृथक् क्रिया ।
हरौ हरे भेदबुद्धिर्जायते जगदम्बिके ! ॥ ८९ ॥

करालवदना काली श्रीमदेकजटा शिवा ।
षोडशी भैरवी भिन्ना भिन्ना च भुवनेश्वरी ॥ ९० ॥

छिन्ना भिन्नाऽन्नपूर्णा च भिन्ना च बगलामुखी ।
मातङ्गी कमला भिन्ना भिन्ना वाणी च राधिका ॥ ९१ ॥

भिन्ना चेष्टा क्रिया भिन्ना भिन्नो वाचारसंग्रहः ।
यावन्नैक्यं पादपद्मे भवान्या नैव जायते ॥ ९२ ॥

अद्वैते तारिणीपादपद्मे परमपावने ।
ज्ञानपारे समुत्पन्ने हृत्पद्मनिलयं तथा ॥ ९३ ॥
ऐक्यं भवति चार्वङ्गि ! सर्वं ब्रह्ममयात्मकम् ।
..............................जीवेषु शाङ्करि ! ॥ ९४ ॥
न च पापं न वा पुण्यं न यमो नरकं न च ।
न सुखं नापि दुःखं च न रोगेभ्यो भयं तथा ॥ ९५ ॥
न भयं नापि शोकं च सर्वं ब्रह्ममयात्मकम् ।
ब्राह्मणी क्षत्रिया वैश्या वैश्यजा शूद्रजाऽन्त्यजा ॥ ९६ ॥
तथैव तारिणी विद्या यथा विद्या तथा तथा ।
एवं ज्ञानं महेशानि ! यथा वै जायते प्रिये ! ॥ ९७ ॥
तथैव विद्या देवेशि ! विद्याऽविद्याविरोधिनी ।
जायते नात्र सन्देहो ब्रह्मानन्दमयो भवेत् ॥ ९८ ॥
अद्वैतं च गुणातीतं निर्गुणं प्रकृतेः परम् ।
परमानन्दसंयुक्तो मुक्तिं यास्यति निश्चितम् ॥ ९९ ॥
इति सत्यं पुनः सत्यं सत्यं चण्डि ! वरानने ! ।
तत्त्वज्ञानात् परं नास्ति नास्ति देवः सदाशिवात् ॥१००॥
नास्ति भावस्तु मध्यस्थाद् नास्ति दुर्गासमं पदम् ।
सोऽहं सोऽहं पुनः सोऽहं सोऽहमित्येव जायते ॥१०१॥
तदेव चिरकालेन सोऽहं ज्ञानं प्रजायते ।
नानात्वबुद्धिं कृत्वा वै सात्त्विकीं परमात्मिकाम् ॥१०२॥
गृहीत्वा च वरारोहे ! जायते परमार्थवित् ।
ज्ञानात् परतरं नास्ति नास्ति नास्ति वरानने ! ॥१०३॥
लब्ध्वा हि तत्त्वं परमं मुच्यते देहबन्धनात् ।
कुलवारे कुलीनस्तु कुलधर्मं कुलव्रतः ॥१०४॥

आश्रयेत् परमानन्दः परमानन्दमेव च ।
न कुलीने परा बुद्धिर्न कुलीनपरा गतिः ॥१०५॥

न कुलीने परा भक्तिर्न कुलीने परा क्रिया ।
एवं वदति यो यस्तु स मुक्तिं न च याति वै ॥१०६॥

इहैव स्वर्गो देवेशि ! इह कैलासमन्दिरम् ।
इहैव मुक्तिर्भक्तिश्च मुक्तिरव्यभिचारिणी ॥१०७॥

भोगः स्वर्गश्च मोक्षश्च करस्थश्चैव शाङ्करि ! ।
शाक्तानां त्रिपुरेशानि ! सत्यं चण्डि ! न संशयः ॥१०८॥

श्रीपार्वती उवाच

नीलकण्ठ ! महादेव ! महेश्वर ! जगद्गुरो ! ।
पृच्छामि परमं तत्त्वं ब्रूहि नाथ ! जगत्प्रभो ! ॥१०९॥

कथं वा जायते मुक्तिर्भुक्तिर्भक्तिर्महेश्वरे ।
जीवः शिवत्वं लभते केन रूपेण शङ्कर ! ॥११०॥

श्रीशिव उवाच

विश्वेश्वरि ! जगद्धात्रि ! महामाये ! महेश्वरि ! ।
गुह्याद् गुह्यतरं वाक्यं शृणुष्व नगनन्दिनि ! ॥१११॥

शान्तं दान्तं कुलीनं च सर्वशास्त्रार्थकोविदम् ।
एवं गुह्यं महेशानि ! आश्रयेद् भक्तिभावतः ॥११२॥

ततः प्रथमतो लब्ध्वा गुरुं परमकारणम् ।
गृह्णीयात् परमं मन्त्रं देव्याश्च वरवर्णिनि ! ॥११३॥

सेतुं च कुल्लुकां ज्ञात्वा मन्त्रसङ्केतकं तथा ।
समयाचारसङ्केतं ज्ञानभावं समभ्यसेत् ॥११४॥

पूजयेत् परया भक्त्या पार्वतीं पटलक्रमात् ।
यथा गुरुविधानेन पूजयेत् परदेवताम् ॥११५॥

चतुर्भुजां दशभुजां सहस्रभुजसंयुताम् ।
लोलजिह्वां करालास्यां मुण्डमालाविभूषिताम् ॥११६॥

प्रणमेत् प्रजपेद् ध्यायेद् देवीं द्रव्यैः प्रपूजयेत् ।
जवापराजिताद्रोणकरवीरैर्मनोहरैः ॥११७॥

पूजयेद् रक्तकुसुमैः सुगन्धैश्चारुशोभनैः ।
नानापुष्पैश्च देवेशि ! पूजयेद् भक्तिभावतः ॥११८॥

पाद्यार्घ्याचमनीयाद्यैर्नानाद्रव्यैर्मनोहरैः ।
गन्धैः पुष्पैश्च धूपैश्च दीपैरम्बरभूषणैः ॥११९॥

नैवेद्यैर्विविधैर्द्रव्यैस्ताम्बूलैश्चर्वणोत्कटैः ।
पुनराचमनीयैश्च पूजयेज्जगदम्बिकाम् ॥१२०॥

एवं पूजा विधातव्या यथाशक्त्या वरानने ! ।
पूजयित्वा तु प्रणमेत् पार्वतीं तन्त्रजैः स्तवैः ॥१२१॥

स्तोत्रस्य कवचस्यापि पठनाज्जगदम्बिका ।
भुक्तिमुक्तिप्रदा चण्डी भक्तिदा सर्वमङ्गला ॥१२२॥

बाह्यपूजा प्रकर्तव्या गुरुवाक्यानुसारतः ।
अन्तर्यागात्मिका पूजा बाह्यपूजा महेश्वरि ! ॥१२३॥

सर्वपूजा विधातव्या यावज्ज्ञानं न जायते ।
एवं विप्रप्रणामेन जपेन तपसाऽपि वा ॥१२४॥

माहेशी सा प्रसन्नाऽभूत् स्तवेन कवचेन च ।
ततो देवि महेशानि ! सिद्धिविद्या यदा भवेत् ॥१२५॥

तदैव पूजया सिद्धिः क्रियया बुद्धियुक्तया ।
एवं देव्यनुग्रहतो ज्ञानमुत्पद्यते खलु ॥१२६॥

तदा कालात्यये चण्डि ! क्रियाभक्तिश्च निष्फला ।
केवला प्रेयसी मुक्तिर्महादेवस्य भाविनी ॥१२७॥

श्रीपार्वती उवाच

श्रुतं परमतन्त्रं वै सारात् सारं परात् परम् ।
यत् श्रुत्वा मोक्षमाप्नोति कर्मपाशनिकृन्तनात् ॥१२८॥

श्रीशिव उवाच

शृणु देवि! वरारोहे ममैव निश्चितं तव ।
दुर्गा हि परमं मन्त्रं दुर्गा हि परमो जपः ॥१२९॥
दुर्गा हि परमं तीर्थं दुर्गा हि परमा क्रिया ।
दुर्गा हि परमा भुक्तिर्दुर्गा मुक्तिर्महीतले ॥१३०॥
बुद्धिर्निद्रा क्षुधा छाया शक्तिस्तृष्णा तथा क्षमा ।
क्रिया सर्ववरिष्ठा च वैदिकी तान्त्रिकी च या ॥१३१॥
एवं सर्वं हि दुर्गा हि दुर्गाभिन्नं न तज्जपः ।
भजेद् दुर्गापदद्वन्द्वं स्मरेद् दुर्गामहर्निशम् ॥१३२॥
प्रजपेद् देवि! दुर्गेति मन्त्रं परमकारणम् ।
य एवं भक्तिमास्थाय प्रकरोति क्रियां शिवे! ॥१३३॥
सर्वसिद्धियुतो भूत्वा विहरेत् क्षितिमण्डले ।
नानातन्त्रे पृथक् चेष्टा मयोक्ता गिरिनन्दिनि! ॥१३४॥
ऐक्यं ज्ञानं यदा देवि! तदा सिद्धिमवाप्नुयात् ।
स्थावरे जङ्गमे चैव यदा तुल्यमना भवेत् ॥१३५॥
किं न सिध्यति विश्वेशि! परत्रेह च पार्वति! ।
एवं भुक्तिश्च मुक्तिश्च भक्तिश्च जगदम्बिके! ॥१३६॥
तव ज्ञानं तदैवान्ते ततो निर्वाणमाप्नुयात् ॥
एवं वै कथितं चण्डि! किं भूयः श्रोतुमिच्छसि ॥१३७॥

श्रीपार्वती उवाच

श्रुतं परमतत्त्वं वै श्रुतं परममादरात् ।
श्रुतं काल्याश्च चरितं तारायाश्च श्रुतं मया ॥१३८॥

इदानीं श्रोतुमिच्छामि मन्त्रसिद्धिः कथं भवेत् ।
विद्यासिद्धिः कथं देव ! तद् वदस्व दयानिधे ! ॥१३९॥

श्रीशिव उवाच

इदानीं शृणु देवेशि ! मन्त्रसिद्धेस्तु कारणम् ।
मन्त्रार्थं मन्त्रचैतन्यं यामले कथितं मया ॥१४०॥
डामरे च श्रुतं चण्डि ! कुलोड्डीशे कुलार्णवे ।
संक्षेपेण वदिष्यामि मन्त्रसिद्धेस्तु कारणम् ॥१४१॥
किं बहूक्त्या महेशानि ! गुरुभक्त्या च सिध्यति ।
कुलवारे महेशानि सहस्रमयुतं जपेत् ॥१४२॥
शनैश्चरे चतुर्दश्याममायां कुजवासरे ।
स्थित्वा कुशासने ज्ञानी मन्त्रसिद्धिपरायणः ॥१४३॥
अयुतं भक्तिभावेन सहस्रं वा वरानने ! ।
अन्तर्यागं ततः कृत्वा सर्वसिद्धीश्वरो भवेत् ॥१४४॥
अश्वत्थे वटमूले वा निम्बबिल्वमूलेऽथवा ।
पूजयेत् परया बुद्ध्या मन्त्रसिद्धिं जनो लभेत् ॥१४५॥
विश्वेश्वरि ! महामाये ! सर्वविघ्नविनाशिनि ! ।
एवं मासत्रयं कुर्यादन्तर्यागेन शुध्यति ॥१४६॥
तदा सिद्धिमवाप्नोति सत्यं सत्यं न संशयः ।
सुषुम्नान्तः स्थितां देवीं पद्मकिञ्जल्कवासिनीम् ॥१४७॥
ध्यायेन्नाडीविशुद्धेन मन्त्रसिद्धिरनुत्तमा ।
अथवा शृणु चार्वङ्गि ! क्रियाहीनं मतं मम ॥१४८॥
केवलं ध्यानमास्थाय मन्त्रसिद्धिर्भवेद् ध्रुवम् ।
कालिकां हृदयाम्भोजे ध्यायेत् परमदेवताम् ॥१४९॥
योगसिद्धिं समास्थाय मन्त्रसिद्धिर्भवेन्नृणाम् ।
पुरा पृच्छामि गदिता दुर्लभा या महीतले ॥१५०॥

सा पृच्छा ते निगदिता किं न सिध्यति भूतले ।
शक्तियामलके सिद्धेश्वरतन्त्रे कुलाचले ॥१५१॥

विद्यासिद्धिर्निगदिता दुर्लभा धरणीतले ।
काली तारा महाविद्या षोडशी भुवनेश्वरी ॥१५२॥

भैरवी छिन्नमस्ता च विद्या धूमावती तथा ।
बगला सिद्धिविद्या च मातङ्गी कमलात्मिका ॥१५३॥

एता दश महाविद्याः सिद्धिविद्याः प्रकीर्तिताः ।
एषा विद्या प्रकथिता सर्वतन्त्रेषु गोपिता ॥१५४॥

सर्वसिद्धिप्रदा नित्या नित्यानन्दमयी शिवा ।
विद्यासिद्धिर्महेशानि ! भविष्यति यदा भवेत् ॥१५५॥

ऐन्द्रत्वं चन्द्रवदने चन्द्रतत्त्वं वरानने ! ।
कुबेरत्वं शिवत्वं वा विष्णुत्वं विश्वगेहिनी ॥१५६॥

तत्क्षणाद् देवदेवेशि ! जायते नात्र संशयः ।
विद्यासिद्धेः प्रकरणं पूर्वोक्तं त्रिपुरेश्वरि ! ॥१५७॥

इदानीं कथयाम्यत्र विद्यासिद्धिमनुत्तमाम् ।
श्मशानेऽश्वत्थमूले वा शवे वा शून्यमन्दिरे ॥१५८॥

प्रजपेत् कालिकां तारां महाविद्या प्रसीदति ।
जपेन तपसा स्तोत्रैरन्तर्यागैर्मनोहरैः ! ॥१५९॥

पूजनैः कवचैर्देवि ! महाविद्या प्रसीदति ।
अनेनैव विधानेन पूजनं यः करोत्यहो ! ॥१६०॥

सुप्रसन्ना जगद्धात्री महामाया प्रसिध्यति ।
मन्त्रसिद्धेर्महाविद्या सिद्धेः कारणमग्रतः ॥
कथितं ते जगद्धात्रि ! किं भूयः श्रोतुमिच्छसि ॥१६१॥

श्रीपार्वती उवाच

श्रुतं सिद्धेः कारणं तु सर्वसिद्धिकरं परम्।
यज्ज्ञात्वा मोक्षमाप्नोति जीवः परमकोविदः ॥१६२॥

नानातन्त्रं श्रुतं देवदेव! विश्वेश्वर! प्रभो!।
इदानीं श्रोतुमिच्छामि नीलकण्ठ! सदाशिव! ॥१६३॥

माहात्म्यं कालिकायाश्च तारायाश्च सुरेश्वर!।
श्रोतुमिच्छाम्यहं नाथ! यतस्त्वं कालिकापतिः ॥
तारापतिस्त्वं देवेश! वद शीघ्रं सदाशिव ॥१६४॥

श्रीशिव उवाच

धन्यासि पतिभक्तासि चार्वङ्गि! शृणु मद्वचः।
कालिकायाश्च ताराया माहात्म्यं सिद्धिदायकम् ॥१६५॥

यथा काली तथा तारा एकदैव हि भिन्नता।
दक्षांशा चैव वामांशा यथानुक्रमसारतः ॥१६६॥

नहि कालीसमा पूजा नहि कालीसमं फलम्।
नहि कालीसमं ज्ञानं नहि कालीसमं तपः ॥१६७॥

तस्यैव धन्या जननी धन्यस्तस्य पितामहः।
धन्यं कुलं यशश्चण्डि! येन काली समर्चिता ॥१६८॥

काली तारासमा विद्याचारे स्तुतिविचारणे।
यन्त्रे मन्त्रे फलं तुल्यं न विशेषः कथञ्चन ॥१६९॥

इत्येवं भेदबुद्ध्या तु कथितं चरितं प्रिये!।
अभेदबुद्ध्या देवेशि! सर्वास्तुल्या न संशयः ॥१७०॥

श्रीमदेकजटा देवी उग्रतारा सरस्वती।
व्यालानां दमने कृष्णरक्षणे यमुनाजले ॥१७१॥

पपात तारिणी विद्या नीलवर्णा सरस्वती।
देवैश्चैव हि देवेन्द्रैर्योगीन्द्रैः साधकोत्तमैः ॥१७२॥

साधकैर्मुनिभिः सर्वैर्गन्धर्वैः किन्नरैः खगैः ।
विद्याधरैर्नर्तकैश्च नानाऋषिगणैरपि ॥१७३॥
आराधिता महाकाली महानीलसरस्वती ।
वदन्ति साधकाः सर्वे कालीं कालविनाशिनीम् ॥१७४॥
नीलां सरस्वतीं विद्यामुग्रतारां मनोहराम् ।
कालिकायाश्च ताराया माहात्म्यं देवदुर्लभम् ॥१७५॥
कः शक्नोति महीमध्ये तस्य माहात्म्यकोविदः ।
दशविद्याऽष्टादशधा विद्यारूपां सुरेश्वरीम् ॥१७६॥
भजते यः साधकेन्द्रो भवत्येवं सुरेश्वरि ! ।
इत्येवं शृणु देवेशि ! माहात्म्यं भुवि दुर्लभम् ॥१७७॥
यासां विज्ञानमात्रेण जीवन्मुक्तः प्रजायते ।
यथा शिवस्तथा जीवो जीवस्तु शिव एव हि ॥१७८॥
जायते परमं ज्ञानं भावज्ञानाद् वरानने ! ।
अपरं शृणु चार्वङ्गि ! सावधानाऽवधारय ॥१७९॥
स्तोत्रं च कवचं देव्याः कालिकाया महेश्वरि ! ।
ताराया न श्रुतं चण्डि ! सर्वमोहनकारणम् ॥१८०॥
षट्कर्मसिद्धिदं मन्त्रं स्तोत्रं कवचमुत्तमम् ।
न प्रकाश्यं च कुत्रापि सर्वसम्पत्प्रदं प्रिये ! ।
इदानीं कथयाम्यत्र जीवमोहनकारणम् ॥१८१॥

श्रीपार्वती उवाच

वद नाथ जगत्स्वामिन् ! प्रभो श्रीकण्ठ शङ्कर ! ।
मोहनं कवचं नाथ स्तोत्रं कवचमेव हि ॥१८२॥
सर्वविघ्नहरं देवि ! सर्वशान्तिकरं तथा ।
देवानामपि दुर्ज्ञेयं वद नाथ जगद्गुरो ! ॥१८३॥

श्रीशङ्कर उवाच

नमस्ते जगदीशानदयिते ! हरवल्लभे ।
विश्वेश्वरि ! जगद्धात्रि ! त्रैलोक्यमोहनं कुरु ॥१८४॥
मन्त्रोद्धारं प्रवक्ष्यामि सावधाना सुरेश्वरि ! ।
लान्तं वान्तं मान्तयुक्तं स्वर.........त्मकं प्रिये ॥१८५॥
कान्तं शक्तियुतं देवि ! जलयं चापि वाऽन्वितम् ।
ऋणग्रजं षाग्रजं कुकयुगाग्रजमेव हि ॥१८६॥
शक्तियुक्तं मन्त्रयज्ञशेषं समुदीरयेत् ।
इत्येवं मन्त्रराजं च यो जपेज्जगदम्बिके ! ॥१८७॥
त्रैलोक्यमोहनो भूत्वा सर्वसम्पल्लभेत्ं तु सः ।
धारणं युगलं फान्तं तान्तं बिन्दुद्वितीयकम् ॥१८८॥
वाक्वादिन्यमुकं मे वशमानय वै फकी ।
मन्त्रं चायुतमेवं च सहस्रं वाऽयुतं निशि ॥१८९॥
तदैव देवीं देवं वा नरं वा वशमानयेत् ।
इयं वशकरी विद्या सर्वतन्त्रेषु गोपिता ॥१९०॥
पूजयेद् भक्तिभावेन प्रणमेद् राजमोहिनीम् ।
स्मृत्वा तु मनसा देवीं जपेन्मन्त्रं कुजे दिने ॥१९१॥
शनैश्चरदिने देवि ! रात्रौ स्तोत्रं पठेद् यदि ।
अचिरेणैव कालेन स भवेद् राजवल्लभः ॥१९२॥
घोरदंष्ट्रे करालास्ये मत्स्यमांसबलिप्रिये ! ।
नमस्ते विश्वजननि ! नमस्ते विश्वभाविनि ॥१९३॥
नमस्ते जगदीशानदयिते ! भक्तवत्सले ।
नमस्ते परमानन्ददायिनि ! राजमोहिनि ॥१९४॥
नमस्तेऽस्तु सदानन्दे ! नमस्ते शङ्करप्रिये ! ।
नमस्ते मङ्गले ! तुभ्यं सर्वमङ्गलमङ्गले ॥१९५॥

विश्वमातर्जगद्धात्रि ! नमस्ते त्रिपुरेश्वरि ।
नमस्ते ब्रह्मनमिते ! नमस्ते वरदे शिवे ॥१९६॥

मेघश्यामे जगद्धात्रि ! कराले विकटे शुभे ।
हरभार्ये हराराध्ये ! नमस्ते हरपूजिते ॥१९७॥

हरीन्द्र-ब्रह्म-चन्द्रादि-पञ्चाननसुपूजिते ! ।
नमस्तेऽस्तु महारौद्रे ! महाघोरे महोत्सवे ॥१९८॥

महानन्दे महाकालि ! महाकालप्रपूजिते ।
विश्वेश्वरि ! नमस्तेऽस्तु नमस्ते भुवनेश्वरि ॥१९९॥

कामरूपे च कामाक्षे ! कामपुष्पविभूषिते ।
सर्वकामप्रदे देवि ! काममन्दिरवन्दिते ॥२००॥

सर्वकामस्वरूपे ! च कामदेवप्रपूजिते ।
कामेश्वरि ! कलानाथवदने कामवल्लभे ॥२०१॥

क्रियामार्गरते कामे निष्ठाकामे ! कलात्मिके ।
नमस्ते चण्डिके ! चण्डे चण्डमुण्डविनाशिनि ॥२०२॥

राजेश्वरि ! रमे रामपूजिते राजवल्लभे ।
रामप्रिये रामरते ! बलरामप्रपूजिते ॥२०३॥

नभश्छिन्नकराले ! च कराले चण्डि पार्वति ! ।
नमस्ते सगुणे देवि ! निर्गुणे निर्गुणात्मिके ॥२०४॥

जगद्धात्रि ! जये ! देवि ! विजये ! हरवल्लभे ।
नमस्ते शङ्करानन्ददायिके ! शङ्करप्रिये ॥२०५॥

नमः कृष्णे पीतवर्णे ! शुक्लरक्तस्वरूपिणि ।
महानीले नीलवर्गे महानीलसरस्वति ! ॥२०६॥

वागीश्वरि ! नमस्तेऽस्तु पद्मे ! पद्मनिवासिनि ।
इति ते कथितं देवि ! स्तोत्रं वै जनमोहनम् ॥२०७॥

पठनात् स्तवराजस्य किं न सिध्यति भूतले ।
मन्दे चन्द्रात्मजे जीवे निशाभागे निशामुखे ॥२०८॥

प्रपठेत् स्तवराजं तु सर्वसिद्धीश्वरो भवेत् ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा वरवर्णिनि ! ॥२०९॥

स्तोत्रप्रपठनाद् देवि ! जगद्वशनयो भवेत् ।
वशीकरणमेतत् तु स्तवराजं मनोहरम् ॥२१०॥

यं यं मन्त्रेण देवेशि ! परमाकर्षयत्यहो ! ।
स एव वशतां याति देवराजसमो यदि ॥
इत्येवं कथितं स्तोत्रमधुना कवचं शृणु ॥२११॥

श्रीशिव उवाच

शृणु देवि ! प्रवक्ष्यामि अप्रकाश्यं महीतले ।
श्रुत्वा पठित्वा कवचं शवसिद्धिमवाप्नुयात् ॥२१२॥
पार्वती मस्तकं पातु कपालं जगदम्बिका ।
कपालं चापि गण्डं च दुर्गा पातु महेश्वरी ॥२१३॥

विश्वेश्वरी सदा पातु वक्षोमूलं शिवप्रिया ।
नाभिदेशं जगद्धात्री जगदानन्दवल्लभा ॥२१४॥
हृदयं चण्डिका पातु बाहू परमदेवता ।
केशांश्च पञ्चमी विद्या सभायां पातु भैरवी ॥२१५॥
नित्यानन्दा यशः पातु लिङ्गं लिङ्गेश्वरी मुदा ।
भवानी पातु मे पुत्रं पत्नीं मे पातु दक्षजा ॥२१६॥

कामाख्या देहसकलं पातु नित्यं नभोगतम् ।
महाकुण्डलिनी नित्यं पातु मे जठरं शिवा ॥२१७॥
वह्निजाया सदा यज्ञे पातु कर्म स्वधा पुनः ।
अरण्ये विजने पातु दुर्गा देवी रणे वने ॥२१८॥

जले पातु जगन्माता देवी त्रिभुवनेश्वरी ।
इत्येवं कवचं देवि ! दुर्ज्ञेयं राजमोहने ॥२१९॥

कवचस्यापि पठनाद् राजराजेश्वरो भवेत् ।
यत्र कुत्र दिने स्तोत्रं कवचं वरवर्णिनि ! ॥२२०॥

पठित्वा सर्वसौभाग्यं लभते नात्र संशयः ।
एवं निरन्तरं स्तोत्रं कवचं राजमोहनम् ॥२२१॥

जपेन्मन्त्रं क्षितितले वश्यं याति महीपतिः ।
पूजायाः परया भक्त्या क्रियया च विना शिवे ! ॥२२२॥

केवलं जपमात्रेण सिध्यत्येवं न संशयः ।
या पृच्छा ते निगदिता कथिता वरवर्णिनि ! ॥
इदानीं देवदेवेशि ! किं भूयः श्रोतुमिच्छसि ॥ २२३ ॥

॥ इति मुण्डमालातन्त्रे षष्ठः पटलः ॥ ६ ॥



# अथ सप्तमः पटलः

श्रीदेवी उवाच

कथ्यतां मे दयासिन्धो ! जगदीश जगद्गुरो ।
जगत्कर्ता जगत्पाता जगद्धाता त्वमेव हि ॥ १ ॥
त्रिषु लोकेषु विश्वेश ! त्वत्तो भिन्नः कदाचन ।
नास्ति कर्ता महादेव ! किमेतत् कथयामि ते ॥ २ ॥
गोलोके न च कैलासे न ब्रह्ममन्दिरे प्रभो ! ।
न वैकुण्ठे न वा सौरे नक्षत्रे न शशिपुरे ॥ ३ ॥
वक्ता कर्ता च पाता च हर्ता च त्रिपुरेश्वर ! ।
पृच्छामि परमं तत्त्वं योगिनीयोगसाधनम् ॥
योगिनीहृदयाम्भोजे योगिनोहृदये तथा ॥ ४ ॥

श्रीशिव उवाच

सेयं गोप्या च देवेशि ! ब्रह्मेति यां विदुः शिवे ! ।
परं ब्रह्म परं धाम सच्चिदानन्दमव्ययम् ॥ ५ ॥
योगीन्द्राणां ज्ञानगम्यमगम्यं मनसा अपि ।
अन्येषां च वरारोहे जगद्धात्रि ! शृणु प्रिये ॥ ६ ॥
सर्वेषां च मया ज्ञानं ज्ञातं त्वयाख्यमव्ययम् ।
नारीणां हृदयाम्भोजं न च वेद कथञ्चन ॥ ७ ॥

श्रीपार्वती उवाच

सत्यं च कथितं नाथ ! सत्यमेव वदाम्यहम् ।
अबलानां च हृदयं मन्त्रसाध्यं च कथ्यताम् ॥ ८ ॥
पुरुषा नैव जानन्ति स्वभावात् तु व्यतिक्रमम् ।
देवदेव महादेव ! संसारार्णवतारकम् ॥ ९ ॥

जानामि हृदयं पुंसां काठिन्यं लोलमानसम् ।
अत एव महादेव ! शीघ्रं वद सदाशिव ।। १० ।।

केन रूपेण सा दुर्गा सुप्रसन्ना महीतले ।
स्तवेन कवचेनाऽपि ज्ञानेन जगदीश्वरी ।
प्रसन्ना च महाविद्या भवेत् परमकारणे ।। ११ ।।

श्रीशङ्कर उवाच

शृणु देवि महादेवि ! विश्वेश्वरि जगन्मयि ।
येन रूपेण सा काली तारा त्रिपुरसुन्दरी ।। १२ ।।

भैरवी चैव कमला दुर्गा च भुवनेश्वरी ।
या या विद्या महेशानि ! कथिता भुवनेश्वरी ।। १३ ।।

सा विद्या च प्रसन्नाऽभूत् केवलं ज्ञानमात्रतः ।
विना ज्ञानान्न वै ध्यानं न क्रिया न च सद्गतिः ।। १४ ।।

न च भुक्तिर्न वा मुक्तिर्न शुक्तिर्बुद्धिरेव हि ।
श्मशानसिद्धिश्च न वा न च सिद्धिः शवात्मिका ।। १५ ।।

न विज्ञानं महेशानि ! न वा सिद्धिः प्रजायते ।
ज्ञाने यदा समुत्पन्ने सर्वाः सिध्यन्ति सिद्धयः ।। १६ ।।

ज्ञाने ज्ञाने महेशानि ! विफलं पूजनं जपः ।
तपो भक्तिः क्रिया स्तोत्रं कवचं विफलं प्रिये ! ।। १७ ।।

अत एव परं तत्त्वं ज्ञानं परमसाधनम् ।
यो जानाति जगद्धात्रि ! स शिवो नात्र संशयः ।। १८ ।।

कौलिकं कौलिकं देवि ! न त्यजेत् तु कथञ्चन ।
परित्यागे वरारोहे ! सर्वं भवति निष्फलम् ।। १९ ।।

एवं शक्तिविधानेन शाक्तः सर्वविचारणात् ।
जीवन्मुक्तः सर्वलोके जायते नात्र संशयः ।। २० ।।

मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः ।
न वेत्ति किञ्चिद् देवेशि ! सत्यं च वरवर्णिनि ! ॥ २१ ॥

सङ्केतं गुरुसङ्केतं जीवसङ्केतकं तथा ।
दिव्यानां चैव वीराणां पशूनां वरवर्णिनि ! ॥ २२ ॥

भावसङ्केतकं देवि ! ब्रह्मसङ्केतकं तथा ।
समयाचारसङ्केतं वीरसाधनमुत्तमम् ॥ २३ ॥

श्मशानसाधनं भद्रे ! शवसाधनमेव हि ।
एवं नानाविधानं च मयोक्तं यामले प्रिये ! ॥ २४ ॥

तदा सिद्धिमवाप्नोति यस्तन्त्रे खलु कोविदः ।
कथितं डामरे नाऽथ मुक्तिर्यामलके प्रिये ॥ २५ ॥

नानातन्त्रे महेशानि ! कथितं वरवर्णिनि ! ।
दुर्गासेवनमात्रेण विधिवाक्यानुसारतः ॥ २६ ॥

मुक्तिं याति नरः सत्यं लब्ध्वा तत्त्वं मनोहरम् ।
विना तत्त्वपरिज्ञानात् न सुखं न परां गतिम् ॥ २७ ॥

लभते मानवः सत्यं देवेशि ! जगदम्बिके ।
काली करालवदना मुण्डमालाविभूषिता ॥ २८ ॥

कामाख्या कामिनी काम्या करालास्या दिगम्बरा ।
अट्टहासा घोरनादा मेघश्यामा भयानका ॥ २९ ॥

सर्वबीजस्वरूपा सा महाबीजस्वरूपिणी ।
सार्द्धपञ्चाक्षरी विद्या वशिष्ठादिप्रपूजिता ॥ ३० ॥

सिद्धेन्द्रैश्चापि योगीन्द्रैर्मुनीन्द्रैरपि सेविता ।
देवेन्द्रैश्चापि वीरैन्द्रैः साधकेन्द्रैः प्रपूजिता ॥ ३१ ॥

एवंभूता महामाया सर्वतत्त्वविभाविनी ।
सङ्केतं कालिकायाश्च तारायाश्च श्रुतं मया ॥ ३२ ॥

कालीतन्त्रे भैरवे च श्रुतं तन्त्रे च यामले ।
श्रुतं न भैरवीतन्त्रे भैरव्याश्चरितं प्रिये ! ॥ ३३ ॥

भुवनायाश्च विद्यायाश्चरितं नैव सुन्दरि ! ।
इदानीं चापि संक्षेपाद् वदिष्यामि वरानने ! ॥ ३४ ॥

पद्मा त्रिशक्तिर्धनदा वाणी पूर्णा महेश्वरि ! ।
दुर्गा भगवती देवी भुवनायाः प्रतिष्ठिताः ॥ ३५ ॥

एका देवी जगद्धात्री नानारूपविधारिणी ।
तां भजेत् साधकेन्द्रश्च सर्वज्ञादिप्रपूजिताम् ॥ ३६ ॥

महामायां जगद्धात्रीं सर्वालङ्कारभूषिताम् ।
वाणी माया पुनर्माया महामन्त्रस्वरूपिणी ॥ ३७ ॥

ततश्च केवला माया साधकैरपि सेविता ।
पाशादित्र्यक्षरी विद्या यमभीतिविमर्दिनी ॥ ३८ ॥

सर्वसम्पत्प्रदा मुक्तिदायिनी भुक्तिवल्लभा ।
महायोगमयी विद्या सर्वज्ञानमयी ततः ॥ ३९ ॥

पूजिता साधकैः सर्वैः सर्वालङ्कारभूषिता ।
एवं ते कथिता देवि ! देवदेवैः प्रपूजिता ॥ ४० ॥

भुवनेशी महाविद्या देवानामपि दुर्लभा ।
यदि भाग्यवशाद् देवि ! चतुर्थीं लभते नरः ।
चतुर्वर्गमयो भूत्वा परं ब्रह्माऽधिगच्छति ॥ ४१ ॥

श्रीदेवी उवाच

दीनबन्धो दयासिन्धो प्रभो शङ्कर ! भो हर ।
श्रोतुमिच्छामि देवेश ! ज्ञानदः शङ्करो यतः ॥ ४२ ॥

देवदेव महादेव ! नमस्तुभ्यं सदाशिव ।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं महेश्वर ! ॥ ४३ ॥

विश्वेश्वर जगद्बन्धो नीलकण्ठ! नमोऽस्तु ते।
ज्ञानेश ज्ञानदानन्ददायक ज्ञानवर्द्धक॥ ४४॥

ज्ञानाधीश ज्ञानपते नमः कोचवधूपते।
नमस्ते परमानन्द! नमस्ते भक्तवत्सल!॥ ४५॥

नमस्ते पार्वतीनाथ गङ्गाधर! नमोऽस्तु ते।
विश्वेश्वर जगद्बन्धो! जगदीश सदाशिव॥ ४६॥

नमोऽस्तु ते महादेव! त्रिलोकेश महेश्वर।
नमस्ते योगतन्त्रज्ञ! नमः कालीपते नमः॥ ४७॥

नमस्तारापते! तुभ्यं नमस्ते भैरवीपते।
वाणीपते जगन्नाथ! नमस्ते चण्डिकापते॥ ४८॥

तव रूपतरोर्बीजफलरूपं फलप्रद!।
नमस्ते सर्वबीजज्ञ बीजाधार नमोऽस्तु ते॥ ४९॥

उमापते! नमस्तुभ्यं नमस्तुभ्यं त्रिलोचन!।
पञ्चानन! नमस्तुभ्यं नमस्ते शशिशेखर॥ ५०॥

शम्भो महेश्वर! विभो विरूपाक्ष चतुर्भुज।
नमस्ते पर्वता .......... चण्डीपते! नमः॥ ५१॥

त्रिलोकेश दयासिन्धो! करुणामय शङ्कर।
भक्तवत्सल देवेश नीलकण्ठ! सदाशिव॥ ५२॥

नमः काशीपते! तुभ्यं नमस्ते चन्द्रशेखर!।
नमश्चण्डीपते! तुभ्यं श्रीपते पार्वतीपते॥ ५३॥

नमस्ते जगदाधार! चतुरानन वत्सल।
नमः क्रियापते तुभ्यं नमस्ते मुक्तिद! प्रभो!॥ ५४॥

अहमेवाऽबला बाला कथं जानामि शङ्कर!।
निर्गुणा सगुणं ज्ञातुं न समर्था कथञ्चन॥ ५५॥

श्रीशिव उवाच

निर्गुणा प्रकृतिः सत्या अहमेव च निर्गुणः ।
सदैव सगुणा त्वं हि सगुणोऽहं सदाशिवः ॥ ५६ ॥
सत्यं च निर्गुणा देवी सत्यं सत्यं हि निर्गुणः ।
उपासकानां सिद्ध्यर्थं सगुणा सगुणो मतः ॥ ५७ ॥
नानातन्त्रमतं देवी नानायत्नात् प्रकाशितम् ।
ब्रह्मस्वरूपं विज्ञातुं कः समर्थो महीतले ॥ ५८ ॥
नानामार्गे विधावन्ति पशवो हतबुद्धयः ।
श्रीदुर्गाचरणाम्भोजं हित्वा यान्ति रसातलम् ॥ ५९ ॥
सत्यं वच्मि दृढं वच्मि हितं पथ्यं पुनः पुनः ।
न मुक्तिश्च न मुक्तिश्च विना दुर्गानिषेवणात् ॥ ६० ॥
देवि ! दुर्गा परं ब्रह्म श्रुतं काली श्रुतं त्वया ।
ताराश्रुतौ श्रुतं देवि ! श्रुतं ब्रह्मवरेण च ॥ ६१ ॥
ब्रह्मा विष्णुश्च रुद्रश्च वामनश्च दिवौकसः ।
तत्पादसेवनाद् देवि ! वयं वै साधकोत्तमाः ॥ ६२ ॥
न देवेशो गणपतिर्नो ब्रह्मा नो हरो हरिः ।
हरिर्हरिरहं देवि ! सर्वे पादाब्जभावुकाः ॥ ६३ ॥
त्वत्प्रसादान्महेशानि ! ब्रह्मा सृष्टिं करोत्यसौ ।
त्वत्प्रसादात् हरिः पाता हरो हर्ता महीतले ॥ ६४ ॥
वासवश्चाऽमराधीशो ……… रूपाः स्मृताः ।
ते सर्वे निर्जरा देवि ! त्वत्प्रसादान्महीतले ॥ ६५ ॥
त्वत्पादपद्मसम्पर्काद् देवदेवोऽपि शङ्करः ।
अतस्त्वं जगदीशानदयिते ! भक्तवत्सले ॥ ६६ ॥
दृष्टिं कुरु महामाये ! नमस्तस्यै नमो नमः ।
त्वं च काली त्वं च तारा षोडशी त्वं वरानने ! ॥ ६७ ॥

त्वं देवि! भुवना बाला छिन्ना धूमा महेश्वरि!।
त्वं देवि! बगला भीमा कमला त्वं महेश्वरि!॥ ६८॥

मातङ्गी त्वन्नपूर्णा त्वं धनदा त्वं शिवप्रिये!।
दुर्गा त्वं विश्वजननी दशाऽष्टादशरूपिणी॥ ६९॥

सप्तकोटिमहाविद्या उपविद्यास्वरूपिणी।
कुमारी रमणीरूपा सुरूपा नगनन्दिनी॥ ७०॥

शिवपूज्या शिवाराध्या ब्रह्मपूज्या सुरेश्वरी।
शिवो भिन्नः शिवा भिन्ना न जीवे वामलोचना।
इति जानामि विश्वेशि! सत्यं सत्यं न संशयः॥ ७१॥

श्रीपार्वती उवाच

सत्यं मे कथितं नाथ! सत्यरूपोऽसि शङ्कर।
अहं च त्रिषु लोकेषु पार्वतीश्वर शङ्कर॥
विशेषं देवदेवेश! सर्वज्ञ कथयस्व मे॥ ७२॥

श्रीशिव उवाच

विशेषं न च जानामि कथयस्व वरानने!।
सर्वज्ञाऽसि महेशानि! यतः सर्वज्ञवल्लभा॥ ७३॥

श्रीपार्वती उवाच

गोलोके चैव राधाऽहं वैकुण्ठे कमलात्मिका।
ब्रह्मलोके च सावित्री भारती वाक्स्वरूपिणी॥ ७४॥

कैलासे पार्वती देवी मिथिलायां च जानकी।
द्वारकायां रुक्मिणी च द्रौपदी च गजाह्वये॥ ७५॥

गायत्री वेदजननी सन्ध्याऽहं च द्विजन्मनाम्।
योगमध्येऽप्युषाऽहं च पुष्पे कृष्णाऽपराजिता॥ ७६॥

पत्रे मालूरपत्राऽहं पीठे योनिस्वरूपिणी।
हरिहरात्मिका विद्या ब्रह्मविष्णुशिवार्चिता ॥ ७७ ॥

विशेषानुग्रहेणैव विज्ञेया शङ्कर! प्रभो।
यत्र कुत्र स्थले नाथ शाक्तस्तिष्ठति गच्छति ॥ ७८ ॥

तत्रैवाऽहं महादेव! निश्चितं मतमुत्तमम्।
शक्तिमार्गं परित्यज्य योऽन्यमार्गं विधावति ॥ ७९ ॥

करस्थं स मणिं त्यक्त्वा भूतिभावं विधावति।
इत्येवं च महादेव मयोक्तं जगदीश्वर! ॥
अतः परतरं नास्ति नास्ति नास्ति सदाशिव! ॥ ८० ॥

॥ इति मुण्डमालातन्त्रे सप्तमः पटलः ॥ ७ ॥



# अथ अष्टमः पटलः

श्रीदेवी उवाच

नमस्ते पार्वतीनाथ विश्वनाथ ! दयामय ।
ज्ञानात् परतरं नास्ति श्रुतं विश्वेश्वर ! प्रभो ॥ १ ॥
दीननाथ दयासिन्धो ! विश्वेश्वर जगत्पते ।
इदानीं श्रोतुमिच्छामि गोप्यं परमकारणम् ।
रहस्यं कालिकायाश्च तारायाश्च सुरोत्तम ॥ २ ॥

श्रीशिव उवाच

रहस्यं किं वदिष्यामि पञ्चवक्त्रैर्महेश्वरि ! ।
जिह्वाकोटिसहस्रैस्तु वक्त्रकोटिशतैरपि ॥ ३ ॥
तथापि तस्य माहात्म्यं न शक्नोमि कथञ्चन ।
तस्या रहस्यं गोप्यं च किं न जानामि शाङ्करि ! ॥ ४ ॥
स्वस्यैवं चरितं वक्तुं स्वयमेव क्षमो भवेत् ।
अन्यथा नैव देवेशि ! न जानाति कथञ्चन ॥ ५ ॥
कालिकायाः शतं नाम नानातन्त्रे त्वया श्रुतम् ।
रहस्यं गोपनीयं च तन्त्रेऽस्मिन् जगदम्बिके ! ॥ ६ ॥
करालवदना काली कामिनी कमला कला ।
क्रियावती कोटराक्षी कामाख्या कामसुन्दरी ॥ ७ ॥
कापाला च कराला च काशी कात्यायनी कुहूः ।
कङ्काला कालदमना करुणा कमलार्चिता ॥ ८ ॥
कादम्बरी कालहरा कौतुकी कारणप्रिया ।
कृष्णा कृष्णप्रिया कृष्णपूजिता कृष्णवल्लभा ॥ ९ ॥

कृष्णापराजिता कृष्णप्रिया च कृष्णरूपिणी ।
कालिका कालरात्रिश्च कुलजा कुलपण्डिता ॥ १० ॥

कुलधर्मप्रिया कामा काम्यकर्मविभूषिता ।
कुलप्रिया कुलरता कुलीनपरिपूजिता ॥ ११ ॥

कुलज्ञा कमला पूज्या कैलासगणभूषिता ।
कटजा केशिनी कामा कामदा कामपण्डिता ॥ १२ ॥

करालास्या च कन्दर्पा कामिनीरूपशोभिता ।
कोलम्बका कोलरता केलिनी केशभूषिता ॥ १३ ॥

केशवस्य प्रिया काशा काश्मीरा केशवार्चिता ।
कामेश्वरी कामरूपा कामदानविभूषिता ॥ १४ ॥

कालहन्त्री कूर्ममांसप्रिया कूर्मादिपूजिता ।
केलिनी करका कारा करकर्मनिषेविणी ॥ १५ ॥

कटकेशत्रमध्यस्था कटकीटकरार्चिता ।
कटप्रिया कटरता कटकर्मनिषेविणी ॥ १६ ॥

कुमारीपूजनरता कुमारीगणसेविता ।
कुलजा च प्रिया कौलप्रिया कुलनिषेविणी ॥ १७ ॥

कुलीना कुलधर्मज्ञा कुलभीतिविमर्दिनी ।
कामधर्मप्रिया काम्या नित्यकर्मस्वरूपिणी ॥ १८ ॥

कामरूपा कामहरा काममन्दिरपूजिता ।
कामागारस्वरूपा च कालाख्या कालभूषिता ॥ १९ ॥

क्रियाभक्तिरता काल्या काञ्चनी कामदायिनी ।
कोलपुष्पाम्बरा कोला निकोला कोलहन्तका ॥ २० ॥

कोषिकी केतकी कुम्भी कुन्तलादिविभूषिता ।
इत्येवं शृणु चार्वङ्गि ! रहस्यं सर्वमङ्गलम् ॥ २१ ॥

यः पठेत् परया भक्त्या स शिवो नात्र संशयः ।
शतनामप्रसादेन किं न सिध्यति भूतले ! ॥ २२ ॥

ब्रह्मा विष्णुश्च रुद्रश्च वासवाद्या दिवौकसः ।
रहस्यपठनाद् देवि ! सर्वे च विगतज्वराः ॥ २३ ॥

त्रिषु लोकेषु विश्वेशि ! सत्यं गोप्यमतः परम् ।
नास्ति नास्ति महामाये ! तन्त्रमध्ये कथञ्चन ॥ २४ ॥

क्रियया च विना देवि ! विना भक्त्या महेश्वरि ! ।
प्रसन्नास्या करालास्या स्तवपाठाद् दिगम्बरि ! ॥ २५ ॥

सत्यं वच्मि महेशानि ! अतः परतरं नहि ।
न गोकुले न वैकुण्ठे न च कैलासमन्दिरे ॥ २६ ॥

अतः परतरा विद्या स्तोत्रं कवचमेव च ।
त्रिलोकेषु जगद्धात्रि ! नास्ति नास्ति कदाचन ॥ २७ ॥

रात्रावपि दिवाभागे निशाभागे सुरेश्वरि ! ।
प्रजपेद् भक्तिभावेन रहस्यं स्तवमुत्तमम् ॥ २८ ॥

शतनामप्रसादेन मन्त्रसिद्धिः प्रजायते ।
कुजवारे चतुर्दश्यां निशाभागे जपेत् तु यः ॥ २९ ॥

स कृती सर्वशास्त्रज्ञः स कुलीनः सदा शुचिः ।
स कुलज्ञः स कालज्ञः स धर्मज्ञो महीतले ॥ ३० ॥

रहस्यपठनात् कोटिपुरश्चरणजं फलम् ।
प्राप्नोति देवदेवेशि ! सत्यं परमसुन्दरि ! ॥ ३१ ॥

स्तवपाठाद् वरारोहे ! किं न सिध्यति भूतले ! ।
अणिमाद्यष्टसिद्धिः स्याद् भवत्येव न संशयः ॥ ३२ ॥

रात्रौ बिल्वतलेऽश्वत्थमूलेऽपराजितातले ।
प्रपठेत् कालिकास्तोत्रं यथाशक्ति महेश्वरि ! ॥ ३३ ॥

शतवारप्रपठनान्मन्त्रसिद्धिर्भवेद् ध्रुवम् ।
उपायो नास्ति देवेशि ! महामन्त्रस्य साधने ॥ ३४ ॥
अतः परतरं देवि ! नास्ति ब्रह्माण्डमण्डले ।
नानातन्त्रं श्रुतं देवि ! मम वक्त्रात् सुरेश्वरि ! ॥ ३५ ॥
मुण्डमालामहातन्त्रं महामन्त्रस्य साधनम् ।
भक्त्या भगवतीं दुर्गां दुःखदारिद्र्यनाशिनीम् ॥ ३६ ॥
संस्मरेत् प्रजपेद् ध्यायेत् स मुक्तो नात्र संशयः ।
जीवन्मुक्तः स विज्ञेयस्तन्त्रभक्तिपरायणः ॥ ३७ ॥
यः साधको महाज्ञानी यश्च दुर्गासदानुगः ।
न च भक्तिर्न वा मुक्तिर्न मुक्तिर्नगनन्दिनि ! ॥ ३८ ॥
विना दुर्गां जगद्धात्रि ! निष्फलं जीवनं भवेत् ।
शक्तिमार्गरतो भूयो योऽन्यमार्गे प्रधावति ॥ ३९ ॥
न च शाक्तास्तस्य वक्तुं पारं पश्यन्ति सुन्दरि ! ।
विना दुर्गां जगद्धात्रि ! वाग्जाले शास्त्रमोहिताः ॥ ४० ॥
अन्यदेवं भजन्त्येते चान्ये शास्त्रे विघूर्णिताः ।
विना तन्त्राद् विना मन्त्राद् विना यन्त्रान्महेश्वरि ! ॥ ४१ ॥
न च भक्तिश्च मुक्तिश्च जायते वरवर्णिनि ! ।
तन्त्रवक्ता गुरुः साक्षाद् यथा च ज्ञानदः शिवः ॥ ४२ ॥
यथा गुरुर्महेशानि ! तथा च परमो गुरुः ।
यथा परापरगुरुः परमेष्ठिर्यथा गुरुः ॥ ४३ ॥
तथा चैव हि तन्त्रज्ञस्तन्त्रवक्ता गुरुः स्वयम् ।
तन्त्रं च तन्त्रवक्तारं निन्दन्ति तान्त्रिकीं क्रियाम् ॥ ४४ ॥
ये जना भैरवास्तेषां मांसास्थिचर्वणोद्यताः ।
अत एव हि तन्त्रज्ञं न निन्दन्ति कदाचन ॥
न हसन्ति न हिंसन्ति न वदन्ति कदाचन ॥ ४५ ॥

श्रीपार्वती उवाच

श्रृणु देव जगद्वन्द्य ! मद्वाक्यं दृढनिश्चितम् ।
तव प्रसादाद् देवेश ! श्रुतं कालीरहस्यकम् ॥
इदानीं श्रोतुमिच्छामि ताराया वद साम्प्रतम् ॥ ४६ ॥

श्रीशिव उवाच

धन्यासि देवदेवेशि ! दुर्गे दुर्गार्तिनाशिनि ! ।
यं श्रुत्वा मोक्षमाप्नोति पठित्वा नगनन्दिनि ! ॥ ४७ ॥
तारिणी तरला तन्वी तारा तरणवल्लरी ।
तीररूपा तटश्यामा तनुक्षीणपयोधरा ॥ ४८ ॥
तुवीरा तरला तीव्रा नयना नीलवाहिनी ।
उग्रतारा जया चण्डी श्रीमदेकजटा शिवा ॥ ४९ ॥
तरुणा शाम्भवी च्छिन्ना भागा च भद्रतारिणी ।
उग्रा उग्रप्रभा नीला कृष्णा नीलसरस्वती ॥ ५० ॥
द्वितीया शोभिनी नित्या नवीना नित्यनूतना ।
चण्डिका विजयाऽऽराध्या देवी गगनवाहिनी ॥ ५१ ॥
अट्टहास्या करालास्या चतुरास्यादिपूजिता ।
सगुणा सगुणाराध्या हरीन्द्रदेवपूजिता ॥ ५२ ॥
रक्तप्रिया च रक्ताक्षी रुधिरा सर्वभूषिता ।
बालप्रिया बालरता दुर्गा बलवती बला ॥ ५३ ॥
बलप्रिया बलरता बलरामप्रपूजिता ।
अर्द्धकेशेश्वरी केशा केशवेशविभूषिता ॥ ५४ ॥
पद्ममाला च पद्माख्या कामाख्या गिरिनन्दिनि ! ।
दक्षिणा चैव दक्षा च दक्षजा दक्षिणे रता ॥ ५५ ॥
वज्रपुष्पप्रिया रक्तप्रिया कुसुमभूषिता ।
माहेश्वरी महादेवप्रिया पञ्चविभूषिता ॥ ५६ ॥

इडा च पिङ्गला चैव सुषुम्ना प्राणरूपिणी ।
गान्धारी पञ्चमी पञ्चाननादिपरिपूजिता ॥ ५७ ॥

इत्येतत् कथितं देवि ! रहस्यं परमात्मकम् ।
श्रुत्वा मोक्षमवाप्नोति तारादेव्याः प्रसादतः ॥ ५८ ॥

य इदं प्रपठेत् स्तोत्रं तारायास्तु रहस्यकम् ।
सर्वसिद्धीश्वरो भूत्वा विहरेत् क्षितिमण्डले ॥ ५९ ॥

तस्यैव मन्त्रः सिद्धः स्यामन्त्रसिद्धिरनुत्तमा ।
भवत्येवं महामाये ! सत्यं सत्यं न संशयः ॥ ६० ॥

मन्दे मङ्गलवारे च यः पठेन्निशि संयतः ।
तस्यैव मन्त्रसिद्धिः स्याद् गाणपत्यं लभेत् तु सः ॥ ६१ ॥

श्रद्धयाऽश्रद्धया वापि पठेत् ताराहस्यकम् ।
सोऽचिरेणैव कालेन जीवन्मुक्तः शिवो भवेत् ॥ ६२ ॥

सहस्रावर्तनाद् देवि ! पुरश्चर्याफलं लभेत् ।
एवं सततयुक्तास्ते ध्यायन्तस्तामुपासते ॥ ६३ ॥

ते कृतार्था महेशानि ! मृत्युसंसारबन्धनात् ।
रहस्यं तारिणीदेव्याः कालिकायाः श्रुतं त्वया ॥ ६४ ॥

सारं परमगोप्यं च शिवध्येयं शिवप्रदम् ।
इदानीं च वरारोहे ! भूयः किं श्रोतुमिच्छसि ॥ ६५ ॥

॥ इति मुण्डमालातन्त्रे कालीताराहस्येऽष्टमः पटलः ॥ ८ ॥



## अथ नवमः पटल

रहस्यं पार्वतीनाथवक्त्रात् श्रुत्वा च पार्वती ।
महादेवं महेशानमीशमाह महेश्वरी ॥ १ ॥

श्रीपार्वती उवाच

त्रिलोकेश जगन्नाथ ! देवदेव सदाशिव ।
त्वत्प्रसादान्महादेव ! श्रुतं तन्त्रं पृथग्विधम् ॥ २ ॥
इदानीं वर्तते श्रद्धाऽऽगमशास्त्रे ममैव हि ।
यदि प्रसन्नो भगवान् ब्रूह्युपायं महोदयम् ॥ ३ ॥
नानातन्त्रे महादेव ! श्रुतं नानाविधं मतम् ।
कृतार्थास्मि कृतार्थास्मि कृतकार्थास्मि शङ्कर ! ॥ ४ ॥
प्रसन्ने शङ्करे नाथ ! किं भयं जगतीतले ।
विना शिवप्रसादेन न सिध्यति कदाचन ॥
इदानीं श्रोतुमिच्छामि भुवनाया रहस्यकम् ॥ ५ ॥

श्रीशङ्कर उवाच

शृणु देवि ! प्रवक्ष्यामि गुह्याद् गुह्यतरं परम् ।
पठित्वा परमेशानि ! मन्त्रसिद्धिमवाप्नुयात् ॥ ६ ॥
आद्या श्रीभुवना भव्या भवबन्धविमोचिनी ।
नारायणी जगद्धात्री शिवा विश्वेश्वरी परा ॥ ७ ॥
गान्धारी परमा विद्या जगन्मोहनकारिणी ।
सुरेश्वरी जगन्माता विश्वमोहनकारिणी ॥ ८ ॥
भुवनेशी महामाया देवेशी हरवल्लभा ।
कराला विकटाकारा महाबीजस्वरूपिणी ॥ ९ ॥

त्रिपुरेशी त्रिलोकेशी दुर्गा त्रिभुवनेश्वरी ।
नित्या च निर्मला देवी सर्वमङ्गलकारिणी ॥ १० ॥

सदाशिवप्रिया गौरी सर्वमङ्गलशोभनी ।
शिवदा सर्वसौभाग्यदायिनी मङ्गलात्मिका ॥ ११ ॥

घोरदंष्ट्रा करालास्या मधुमांसबलिप्रिया ।
सर्वदुःखहरा चण्डी सर्वमङ्गलकारिणी ॥ १२ ॥

पार्वती तारिणी देवी भीमा भयविनाशिनी ।
त्रैलोक्यजननी तारा तारिणी तरुणाक्षमा ॥ १३ ॥

भुक्तिमुक्तिप्रदा भक्तिसदाशङ्करवल्लभा ।
उमा गौरी प्रिया साध्वी प्रिया च वारुणप्रिया ॥ १४ ॥

भैरवी भैरवानन्ददायिनी भैरवात्मिका ।
ब्रह्मपूज्या च ब्रह्माणी रुद्राणी रुद्रपूजिता ॥ १५ ॥

रुद्रेश्वरी रुद्ररूपा त्रिपुटा त्रिपुरा मता ।
भवानी च भवानन्ददायिनी भवगेहिनी ॥ १६ ॥

सुरपूज्येश्वरी चण्डी प्रचण्डा घोरनादिनी ।
घनश्यामा घनवती महाघननिनादिनी ॥ १७ ॥

घोरजिह्वा ललज्जिह्वा वैदेशी नगनन्दिनी ।
त्रैलोक्यमोहिनी विश्वमोहिनी विश्वरूपिणी ॥ १८ ॥

षोडशी त्रिपुरा ब्रह्मदायिनी ब्रह्मदाऽनघा ।
इत्येतत् परमं ब्रह्मस्तोत्रं परमकारणम् ॥ १९ ॥

यः पठेत् परया भक्त्या जीवन्मुक्तः स एव हि ।
ब्रह्माद्या देवताः सर्वा मुनयस्तन्त्रकोविदाः ॥ २० ॥

पठित्वा परया भक्त्या ब्रह्मसिद्धिमवाप्नुयुः ।
मन्त्रसङ्केतमज्ञात्वा विद्यासङ्केतकं तथा ॥ २१ ॥

वीरसङ्केतकं देवि! सङ्केतं बहुविस्तरम्।
......... योनिमुद्रात्मकं प्रिये!॥ २२॥
सङ्केतं समयाचारं कुलसङ्केतकं तथा।
ब्रह्मसङ्केतकं चण्डि! कालसङ्केतकं तथा॥ २३॥
यन्त्रसङ्केतकं सिद्धिसङ्केतकं बहुविस्तरम्।
कुलार्णवे श्रुतं नाथ श्रुतं मे मोहने प्रभो!॥ २४॥

श्रीशङ्कर उवाच

विद्यानामुत्तमा विद्या महाविद्या प्रकीर्तिता।
यासां स्मरणमात्रेण मन्त्रसिद्धिः प्रजायते॥ २५॥
मन्त्रसङ्केतमज्ञात्वा यो यजेद् विश्वमोहिनीम्।
शतवर्षजपेनापि तस्य सिद्धिर्न जायते॥ २६॥
विद्याद्या च द्वितीया षोडशी भुवनेश्वरी।
भैरवीज्ञानमात्रेण सिद्धिविद्या भवन्ति हि॥ २७॥
इडापिङ्गलयोर्मध्ये दुर्गा विश्वमोहिनी।
तस्याः प्रभेदसंस्कारं यो जानाति स पण्डितः॥ २८॥
स धन्यः स कृती लोके स वीरः सर्वशः शुचिः।
स भैरवश्च विज्ञेयः सदा सुखविवर्द्धकः॥ २९॥
एवं करालवदनां मुण्डमालाविभूषिताम्।
यो जानाति जगद्धात्रीं जीवन्मुक्तः स एव हि॥ ३०॥
विशेषं च प्रवक्ष्यामि कुलभक्त्या च सिध्यति।
कुलभक्तिं विना देवि! न भक्तिर्न च सद्गतिः॥ ३१॥
सत्ये तु सुन्दरी आद्या त्रेतायां भुवनेश्वरी।
द्वापरे तारिणी विद्या कलौ काली प्रकीर्तिता॥ ३२॥
नामभेदं प्रवक्ष्यामि कल्पभेदं वरानने!।
न भेदः कालिकायाश्च तारया जगदम्बिके!॥ ३३॥

षोडश्या भुवनायाश्च भैरव्यास्त्रिपुरेश्वरि ! ।
छिन्नायाश्चैव धूमाया भीमायाः परमेश्वरि ! ॥ ३४ ॥

ततश्च बगलामुख्या मातङ्ग्याश्च सुरेश्वरि ! ।
न च भेदो महेशानि ! विद्याया वरवर्णिनि ! ॥ ३५ ॥

श्रीपार्वती उवाच

विश्वनाथ महादेव ! महेश्वर जगद्गुरो ।
पृच्छाम्येकं महाभाग ! योगेन्द्र वृषभध्वज ॥ ३६ ॥

कृष्णायाः करवीरस्य द्रोणस्य तु सदाशिव ! ।
बिल्वपत्रस्य माहात्म्यं जपाया वद शङ्कर ! ॥ ३७ ॥

श्रीशिव उवाच

धन्याऽसि पतिभक्ताऽसि प्राणतुल्याऽसि शाङ्करि ! ।
अतिगोप्यं जगद्धात्रि ! देवानामतिदुर्लभम् ॥ ३८ ॥

कृष्णाऽपराजिता साक्षात् भद्रकाली न संशयः ।
करवीरं च भुवना द्रोणं त्रिपुरसुन्दरी ॥ ३९ ॥

जपा साक्षाद् भगवती सर्वविद्यास्वरूपिणी ।
ये साधका जगन्मातरर्चयन्ति शिवप्रियाम् ॥ ४० ॥

एतैश्च कुसुमैश्चण्डीं ते शिवा नात्र संशयः ।
किं जपैः किं तपोभिर्वा किं दानैः किं त्रिमध्वकैः ॥ ४१ ॥

येनाऽर्चिता जगद्धात्री द्रोणकृष्णा जपादिभिः ।
राजसूयाश्च मेधाद्यैर्वाजपेयाऽग्निहोमकैः ॥ ४२ ॥

फलं यज्जायते चण्डि ! तत् सर्वं कुसुमार्चनात् ।
जपां द्रोणं तथा कृष्णं मन्दरं करवीरजम् ॥ ४३ ॥

साक्षाद् ब्रह्मस्वरूपं च महादेव्यै निवेदयेत् ।
श्वेतचन्दनसंयुक्तं रक्तचन्दनलेपितम् ॥ ४४ ॥

यो दद्याद् भक्तिभावेन स विश्वेशो न संशयः।
महाघोरे महोत्पाते महाविपदि सङ्कटे ॥ ४५ ॥

महादुःखे महारोगे महाशोके महाभये।
पूजयेत् कालिकां तारां भुवनां षोडशीं शिवाम् ॥ ४६ ॥

बालां छिन्नां च बगलां धूमां भीमां करालिनीम्।
कमलामन्नपूर्णां च दुर्गां दुःखविनाशिनीम् ॥ ४७ ॥

सर्वविद्याजपाद्रोणकरवीरैर्मनोहरैः।
मालूरपत्रैः कृष्णाभिः कृष्णं सम्पूज्य भूतले ॥ ४८ ॥

साधकेन्द्रो महेशानि ! स भवेन्नात्र संशयः।
लक्षाणां महिषैर्मेषैरजैर्दानैः खरैः शुभैः ॥ ४९ ॥

पूजिता सा जगद्धात्री यद्येषा कुसुमार्चिता।
माहात्म्यं चापि कृष्णायाः कृष्णा जानाति भूतले ॥ ५० ॥

तदर्द्धं चाऽप्यहं देवि ! तदर्द्धं श्रीपतिः सदा।
तदर्द्धमब्जजन्मा वै तदर्द्धं वेदसाधकः ॥ ५१ ॥

अस्य पुष्पस्य माहात्म्यं सङ्क्षेपाद् वच्मि शाङ्करि !।
पृथिव्यामतले स्वर्गे वैकुण्ठे कालिकापुरे ॥ ५२ ॥

जपादिकरवीरैश्च दानैः किं किं फलं लभेत्।
न जानामि जगद्धात्रि ! को वेद पार्वतीं विना ॥ ५३ ॥

करवीरैः श्वेतरक्तै रक्तचन्दनमिश्रितैः।
पूजयेत् क्ष्मातले यस्तु स विश्वेशो भवेद् ध्रुवम् ॥ ५४ ॥

कृष्णापराजितापुष्पैर्यस्तु देवीं प्रपूजयेत्।
सोऽश्वमेधसहस्राणां फलं प्राप्य शिवो यजेत् ॥ ५५ ॥

बिल्वपत्रस्य माहात्म्यं देवानामपि दुर्लभम्।
यो दद्याद् बिल्वपत्रं च शिवायै शङ्कराय च ॥ ५६ ॥

सदाशिवसमो भूत्वा स गच्छेद् ब्रह्ममन्दिरम् ।
महाविपत्तौ देवेशि ! जपां कृष्णापराजिताम् ॥ ५७ ॥

द्रोणं वा करवीरं वा स गच्छेत् कालिकापुरम् ।
किं च पाद्यैः किं च वाद्यैर्नैवेद्यैः किं च पूजनैः ॥ ५८ ॥

मधुदानैर्मधुपर्कैः कुम्भकैः किं च रेचकैः ।
पूरकैः किं च वा ध्यानैः प्राणायामैश्च किं च वा ॥ ५९ ॥

किं जपैः किं तपोभिर्वा मत्स्यैर्मांसैश्च पञ्चमैः ।
किमन्यमन्त्रैः किं तन्त्रैः किं यन्त्रैः किं च साधनैः ॥ ६० ॥

किं च वै वासवैः किं वा श्मशानैर्मन्त्रसाधनैः ।
किमध्वरैर्मन्त्रपूतैर्मन्त्रार्थैर्मन्त्रजीवनैः ॥ ६१ ॥

किं योनिमुद्रया किं वा तीर्थैः किं ब्रह्मसाधनैः ।
किं मातृकान्यासवर्गैः किं कच्छैः किं घटैः पटैः ॥ ६२ ॥

किं काकचञ्चुभिः षोढान्यासैः किं कर्मसाधनैः ।
येनार्चिता भगवती करवीरैर्जपादिभिः ॥ ६३ ॥

कृष्णापराजितापुष्पैः करवीरैर्मनोहरैः ।
द्रोणैस्तु केतकीपुष्पैर्जपामाल्लूरपत्रकैः ॥ ६४ ॥

पूजिता यैर्भगवती तेषां किं कर्मसाधनैः ।
इत्येवं च श्रुतं देवि ! रहस्यं परमं शिवम् ॥ ६५ ॥

श्रुत्वा यं मोक्षमाप्नोति साधको नात्र संशयः ।
तन्त्रराजं महेशानि ! सारात् सारतरं प्रिये ! ॥ ६६ ॥

श्रुत्वा ज्ञात्वा मोक्षमाशु लभते नात्र संशयः ।
महाभये बन्धने च विपत्तौ बहुसङ्कटे ॥ ६७ ॥

पूजयित्वा जगद्धात्रीं मुच्यते भवबन्धनात् ।
श्रद्धयाऽश्रद्धया वापि यः कश्चित् तारिणीं यजेत् ॥ ६८ ॥

स धन्यः स कविर्धीरः सर्वशास्त्रार्थकोविदः ।
स च मानी स च ज्ञानी पूजयेद् यस्तु कालिकाम् ॥
इत्येवं च श्रुतं देवि ! भूयः किं श्रोतुमिच्छसि ॥ ६९ ॥

॥ इति श्रीमुण्डमालातन्त्रे नवमः पटलः ॥ ९ ॥

# अथ दशमः पटलः

श्रीदेवी उवाच

देवदेव महादेव! नीलकण्ठ सदाशिव।
नमस्ते परमेशान विश्वनाथ! नमोऽस्तु ते॥ १॥

नमस्ते परमेशान सदाशिव! महेश्वर।
नमस्ते परमानन्द! ज्ञानमोक्षप्रदायक॥ २॥

नमस्ते पार्वतीनाथ! नमस्ते भक्तवत्सल।
प्रसीद मां जगद्बन्धो! गोप्यं वद सदाशिव॥ ३॥

श्रीशिव उवाच

शृणु देवि जगद्धात्रि! सारात् सारतरं परम्।
श्रुत्वा मोक्षमवाप्नोति साधकेन्द्रो महीतले॥ ४॥

शृणुयाद् यो मुण्डमालातन्त्रं परमकारणम्।
ज्ञानदं मोक्षदं भक्तिमुक्तिसौख्यप्रदं शिवे!॥ ५॥

इत्येवं परमं देवीं देवानामपि दुर्लभम्।
यो वेद धरणीमध्ये स एव परमार्थवित्॥ ६॥

शक्तिमार्गं विना जन्तोर्न भक्तिर्न च सद्गतिः।
शक्तिमूलं जगत् सर्वं शक्तिमूलं परं तपः॥ ७॥

शक्तिमूलं परं कर्म जन्म शर्म महीतले।
विना शक्तिप्रसादेन न मुक्तिर्जायते प्रिये!॥ ८॥

श्रुतं देवि वरारोहे! सर्वं गोप्यं महीतले।
अन्यद् गोप्यं किं वदसि तत् सर्वं वद सुव्रते!॥ ९॥

श्रीपार्वती उवाच

शृणु देव महादेव ! कथयस्व जगद्गुरो ।
कथमुत्पद्यते ज्ञानं कथयस्व कृपानिधे ! ॥ १० ॥

श्रीशिव उवाच

अहोभाग्यमहोभाग्यमहोभाग्यं सुरेश्वरि ! ।
कृतार्थोऽहं कृतार्थोऽहं कृतराज्यो महेश्वरि ! ॥ ११ ॥
ज्ञानकाण्डं महेशानि ! सारात् सारतरं शिवम् ।
ज्ञानं च द्विविधं ज्ञेयं दुर्ज्ञेयं मनसामपि ॥ १२ ॥
ज्ञानं परमतत्त्वाख्यं ज्ञानं ज्ञेयार्थसाधनम् ।
अन्यविभ्रान्तिविषयं ज्ञानं साधारणं मतम् ॥ १३ ॥
एवं च त्रिविधं शेषं मध्यमं तत्त्ववर्जितम् ।
तत्त्वज्ञानं वरारोहे ! योगीन्द्राणां च दुर्लभम् ॥ १४ ॥
विना तत्त्वपरिज्ञानाद् विफलं पूजनं तपः ।
एको देवश्च एकोऽहमात्मभिन्नशरीरतः ॥ १५ ॥
घटात् पटात् महेशानि ! कालचक्रान्महीरुहात् ।
एवं ज्ञानं तत्त्वमयं तदा मुक्तोऽचिरेण तु ॥ १६ ॥
नानाकारणमेवास्य पूजनं ध्यानमेव च ।
सेवनं चैव तीर्थानां शरणं तारिणीपदम् ॥ १७ ॥
स्मरणं सहराजस्य भ्रमणं वै कुलावलम् ।
सत्सङ्गसेवनं विष्णोः शङ्करस्यापि पूजनम् ॥ १८ ॥
कालिकापादयुगलं भजनं ज्ञानकारणम् ।
यावन्मनास्त्वमेव स्यात् तावद् भिन्ना महीतले ॥ १९ ॥
तावज्जातिश्च गोत्रं च तावन्नाम पृथग्विधम् ।
तावल्लिङ्गं पृथक् सर्वं वर्णानां पृथगेव हि ॥ २० ॥

तावन्मित्रौ विपक्षौ च तावत् कलत्रबान्धवौ ।
तावत् पृथग्विधा तन्त्रयन्त्रमन्त्रार्चनादिभिः ॥ २१ ॥

तावत् पुण्यं तावदेव पापपुण्यविवर्द्धकम् ।
तावत् त्वं चाप्ययमियं च जायते प्रिये ! ॥ २२ ॥

यावन्न जायते चण्डि ! विद्याऽविद्याविरोधिनी ।
अविद्यानाशिनी विद्या विद्याऽविद्याविमर्दिनी ॥ २३ ॥

या तारिणी महाविद्या विद्याऽविद्याविरूपिणी ।
अत एव वरारोहे ! विद्यामुत्पाद्य भूतले ॥ २४ ॥

निर्वाणमोक्षमाप्नोति सत्यं परमसुन्दरि ! ।
श्रीदुर्गाचरणाम्भोजे भक्तिश्चाव्यभिचारिणी ॥ २५ ॥

तदैव जायते ब्रह्मज्ञानं ब्रह्मादिदुर्लभम् ।
ब्रह्मा विष्णुश्च रुद्रश्च वासवाद्या दिवौकसः ॥ २६ ॥

भैरवाश्चैव गन्धर्वा विद्याभ्याससमुत्सुकाः ।
ब्रह्मविद्यासमा विद्या ब्रह्मविद्यासमा क्रिया ॥ २७ ॥

ब्रह्मविद्यासमं ज्ञानं नास्ति नास्ति कदाचन ।
तत्त्वज्ञानं श्रुतं देवि ! किं भूयः श्रोतुमिच्छसि ॥ २८ ॥

श्रीपार्वती उवाच

नमस्तुभ्यं महादेव विश्वनाथ ! जगद्गुरो ।
श्रुतं ज्ञानं महादेव ! नानातन्त्रं तवाऽऽननात् ॥ २९ ॥

इदानीं चण्डिकायास्तु गुह्यस्तोत्रं वद प्रभो ! ।
कवचं ब्रूहि मे नाथ ! मन्त्रचैतन्यकारणम् ॥ ३० ॥

मन्त्रसिद्धिकरं गुह्याद् गुह्यं मोक्षविधायकम् ।
श्रुत्वा मोक्षमवाप्नोति ज्ञात्वा विद्यां महेश्वरि ! ॥ ३१ ॥

श्रीशिव उवाच

दुर्लभं तारिणीमार्गं दुर्लभं तारिणीपदम् ।
मन्त्रार्थं मन्त्रचैतन्यं दुर्लभं शवसाधनम् ॥ ३२ ॥
श्मशानसाधनं योनिसाधनं ब्रह्मसाधनम् ।
क्रियासाधनकं भक्तिसाधनं मुक्तिसाधनम् ॥ ३३ ॥
स्तवप्रसादाद् देवेशि ! सर्वाः सिध्यन्ति सिद्धयः ।
नमस्ते चण्डिके चण्डि ! चण्डमुण्डविनाशिनि ॥ ३४ ॥
नमस्ते कालिके ! कालमहाभयविनाशिनि ।
शिवे रक्ष जगद्धात्रि ! प्रसीद हरवल्लभे ॥ ३५ ॥
प्रणमामि जगद्धात्रीं जगत्पालनकारिणीम् ।
जगत्क्षोभकरीं विद्यां जगत्सृष्टिविधायिनीम् ॥ ३६ ॥
करालां विकटां घोरां मुण्डमालाविभूषिताम् ।
हरार्चितां हराराध्यां नमामि हरवल्लभाम् ॥ ३७ ॥
गौरीं गुरुप्रियां गौरवर्णालङ्कारभूषिताम् ।
हरिप्रियां महामायां नमामि ब्रह्मपूजिताम् ॥ ३८ ॥
सिद्धां सिद्धेश्वरीं सिद्धविद्याधरगणैर्युताम् ।
मन्त्रसिद्धिप्रदां योनिसिद्धिदां लिङ्गशोभिताम् ॥ ३९ ॥
प्रणमामि महामायां दुर्गां दुर्गतिनाशिनीम् ।
उमामुग्रमयीमुग्रां तारामुग्रगणैर्युताम् ॥ ४० ॥
नीलां नीलघनश्यामां नमामि नीलसुन्दरीम् ।
श्यामाङ्गीं श्यामघटितां श्यामवर्णविभूषिताम् ॥ ४१ ॥
प्रणमामि जगद्धात्रीं गौरीं सर्वार्थसाधिनीम् ।
विश्वेश्वरीं विश्वघोरां विकटां घोरनादिनीम् ॥ ४२ ॥
आद्यामाद्यगुरोराद्यामाद्यनाथप्रपूजिताम् ।
श्रीदुर्गां धनदामन्नपूर्णां पद्मां सुरेश्वरीम् ॥ ४३ ॥

प्रणमामि जगद्धात्रीं चन्द्रशेखरवल्लभाम् ।
त्रिपुरां सुन्दरीं बालामालागणविभूषिताम् ॥ ४४ ॥

शिवदूतीं शिवाराध्यां शिवध्येयां सनातनीम् ।
सुन्दरीं तारिणीं सर्वशिवागणविभूषिताम् ॥ ४५ ॥

नारायणीं विष्णुपूज्यां ब्रह्मविष्णुहरप्रियाम् ।
सर्वसिद्धिप्रदां नित्यामनित्यां गुणवर्जिताम् ॥ ४६ ॥

सगुणां निर्गुणां ध्येयामर्चितां सर्वसिद्धिदाम् ।
विद्यासिद्धिप्रदां विद्यां महाविद्यां महेश्वरीम् ॥ ४७ ॥

महेशभक्तां महेशीं महाजलप्रपूजिताम् ।
प्रणमामि जगद्धात्रीं शुम्भासुरविमर्दिनीम् ॥ ४८ ॥

रक्तप्रियां रक्तवर्णां रक्तबीजविमर्दिनीम् ।
भैरवीं भुवनां देवीं लोलजिह्वां सुरेश्वरीम् ॥ ४९ ॥

चतुर्भुजां दशभुजामष्टादशभुजां शुभाम् ।
त्रिपुरेशीं विश्वनाथप्रियां विश्वेश्वरीं शिवाम् ॥ ५० ॥

अट्टहासामट्टहासप्रियां धूम्रविनाशिनीम् ।
कमलां छिन्नभालां च मातङ्गीं सुरसुन्दरीम् ॥ ५१ ॥

षोडशीं त्रिपुरां भीमां धूमां च बगलामुखीम् ।
सर्वसिद्धिप्रदां सर्वविद्यामन्त्रविशोधिनीम् ॥ ५२ ॥

प्रणमामि जगत्तारां सारां च मन्त्रसिद्धये ।
इत्येवं च वरारोहे ! स्तोत्रं सिद्धिकरं परम् ॥ ५३ ॥

पठित्वा मोक्षमाप्नोति सत्यं वै गिरिनन्दिनि ! ।
कुजवारे चतुर्दश्याममायां जीववासरे ॥ ५४ ॥

शुक्रे निशागते स्तोत्रं पठित्वा मोक्षमाप्नुयात् ।
त्रिपक्षे मन्त्रसिद्धिः स्यात् स्तोत्रपाठाद्धि शाङ्करि ! ॥ ५५ ॥

चतुर्दश्यां निशाभागे शनिभौमदिने तथा।
निशामुखे पठेत् स्तोत्रं मन्त्रसिद्धिमवाप्नुयात् ॥ ५६ ॥

केवलं स्तोत्रपाठाद्धि मन्त्रसिद्धिरनुत्तमाम्।
जागर्त्ति सततं चण्डि ! स्तवपाठाद् भुजङ्गिनी ॥ ५७ ॥

इत्येवं च श्रुतं स्तोत्रं कवचं शृणु पार्वति !।
सदाशिव ऋषिर्देवि ! उष्णिक् छन्द उदाहृतम् ॥ ५८ ॥

विनियोगश्च देवेशि ! ततश्च मन्त्रसिद्धये।
मस्तकं पार्वती पातु पातु पञ्चाननप्रिया ॥ ५९ ॥

केशं मुखं पातु चण्डी भारती रुधिरप्रिया।
कण्ठं पातु स्तनं पातु कपालं गण्डमेव हि ॥ ६० ॥

काली करालवदना विचित्रा स्वरघट्टिनी।
रक्षमूलं नाभिमूलं दुर्गा त्रिपुरसुन्दरी ॥ ६१ ॥

दक्षहस्तं पातु तारा सर्वाणी सर्वमेव च।
विश्वेश्वरी पृष्ठदेशं नेत्रं पातु महेश्वरी ॥ ६२ ॥

हृत्पद्मं कालिका पातु उग्रतारा नभोगतम्।
नारायणी गुह्यदेशं मेढ्रं मेढ्रेश्वरी तथा ॥ ६३ ॥

पादयुग्मं जया पातु सुन्दरी चाङ्गुलीषु च।
षट्पद्मवासिनी पातु सर्वपद्मं निरन्तरम् ॥ ६४ ॥

इडा च पिङ्गला पातु सुषुम्ना पातु सर्वदा।
धनं धनेश्वरी पातु अन्नपूर्णा सदाऽवतु ॥ ६५ ॥

बाह्यं बाह्येश्वरी पातु नित्यं मां चण्डिकाऽवतु।
जीवं मां पार्वती पातु मातङ्गी पातु सर्वदा ॥ ६६ ॥

छिन्ना धूमा च भीमा च भये पातु जले वने।
कौमारी चैव वाराही नारसिंही यशो मम ॥ ६७ ॥

पातु नित्यं भद्रकाली श्मशानालयवासिनी ।
उदरे सर्वदा पातु सर्वाणी सर्वमङ्गला ॥ ६८ ॥
जगन्माता जयं पातु नित्यं कैलासवासिनी ।
शिवप्रियासुतं पातु सुतां पर्वतनन्दिनी ॥ ६९ ॥
त्रैलोक्यं पातु बगला भुवनं भुवनेश्वरी ।
सर्वाङ्गं सर्वनिलया पातु नित्यं च पार्वती ॥ ७० ॥
चामुण्डा पातु मे रोमकूपं सर्वार्थसाधिनी ।
ब्रह्माण्डं मे महाविद्या पातु नित्यं मनोहरा ॥ ७१ ॥
लिङ्गं लिङ्गेश्वरी पातु महापीठं महेश्वरी ।
गौरी मे सन्धिदेशं च पातु वै त्रिपुरेश्वरी ॥ ७२ ॥
सुरेश्वरी सदा पातु श्मशाने च शवेऽवतु ।
कुम्भके रेचके चैव पूरके काममन्दिरे ॥ ७३ ॥
कामाख्या कामनिलयं पातु दुर्गा सुरेश्वरी ।
डाकिनी काकिनी पातु सत्यं मे शाकिनी तथा ॥ ७४ ॥
हाकिनी राकिणी पातु राकिणी पातु सर्वदा ।
ज्वालामुखी सदा पातु मुखं मध्ये सदाऽवतु ॥ ७५ ॥
तारिणी विभवे पातु भवानी च भवेऽवतु ।
त्रैलोक्यमोहिनी पातु सर्वाङ्गं विजनेऽवतु ॥ ७६ ॥
राजकुले महाघाते सङ्ग्रामे शत्रुसङ्कटे ।
प्रचण्डा साधकं मां च पातु भैरवमोहिनी ॥ ७७ ॥
श्रीराजमोहिनी पातु राजद्वारे विपत्तिषु ।
सम्पत्प्रदा भैरवी च पातु बाला बलं मम ॥ ७८ ॥
नित्यं मां शम्भुवनिता पातु मां त्रिपुरान्तका ।
इत्येवं कथितं देवि ! रहस्यं सार्वकालिकम् ॥ ७९ ॥

भुक्तिदं मुक्तिदं सौख्यं सर्वसम्पत्प्रदायकम् ।
यः पठेत् प्रातरुत्थाय साधकेन्द्रो भवेद् भुवि ॥ ८० ॥

कुजवारे चतुर्दश्याममायां मन्दवासरे ।
गुरौ गुरुं समभ्यर्च्य यः पठेत् साधकोत्तमः ॥ ८१ ॥

स याति भवनं देव्याः सत्यं सत्यं न संशयः ।
एवं यदि वरारोहे! पठेद् भक्तिपरायणः ॥ ८२ ॥

मन्त्रसिद्धिर्भवेत् तस्य वाऽचिरान्नात्र संशयः ।
सत्यं लक्षपुरश्चर्याफलं प्राप्य शिवां यजेत् ॥ ८३ ॥

राजमार्गं शिवामार्गं प्राप्य जीवः शिवो भवेत् ।
पठित्वा कवचं स्तोत्रं मुक्तिमाप्नोति निश्चितम् ॥ ८४ ॥

पठित्वा कवचं स्तोत्रं दशविद्यां यजेद् यतिः ।
विद्यासिद्धिर्मन्त्रसिद्धिर्भवत्येव न संशयः ॥ ८५ ॥

तदैव ताम्बूले सिद्धिर्जायते नात्र संशयः ।
शवसिद्धिश्चितासिद्धिर्दुर्लभा धरणीतले ॥ ८६ ॥

अयत्नसुभगा सिद्धिस्ताम्बूलान्नात्र संशयः ।
निशामुखे निशायां च महाकाले निशान्तरे ॥
पठेद् भक्त्या महेशानि! गाणपत्यं लभेत् तु सः ॥ ८७ ॥

॥ इति मुण्डमालातन्त्रे मन्त्रसिद्धिस्तोत्रकवचं नाम
दशमः पटलः ॥ १० ॥

॥ इति प्रथमं मुण्डमालातन्त्रं समाप्तम् ॥



# द्वितीयं मुण्डमालातन्त्रम्

## अथ प्रथमः पटलः

॥ ॐ नमः शिवाय ॥

सर्वानन्दमयीं विद्यां सर्वाम्नायैर्नमस्कृताम् ।
सर्वसिद्धिप्रदां देवीं नमामि परमेश्वरीम् ॥ १ ॥

श्रीदेवी उवाच

देवदेव महादेव ! परमानन्दसुन्दर[1] ।
प्रसीद गुह्यवक्त्रान्त कथयस्व प्रियंवद ! ॥ २ ॥
सर्वतन्त्रेषु मन्त्रेषु गुप्तं यत् पञ्चवक्त्रतः ।
तत् प्रकाशय गुह्याख्यं यच्च[2] त्वं मम वल्लभ ! ॥ ३ ॥

श्रीशिव उवाच

[3]कथान्ते कथयिष्यामि गुप्तं[4] [5]यच्चचञ्चलाम्बिके ! ।
स्त्रीस्वभावान्महत्तत्त्वं[6] न जानासि [7]शुभप्रदम् ॥ ४ ॥

श्रीदेवी उवाच

सुस्थिराऽहं भविष्यामि न वक्तव्यं कदाचन ।
तव भक्त्या भविष्यामि भावना मन्त्रसिद्धिदा ॥ ५ ॥

श्रीशिव उवाच

देवतागुरुमन्त्राणां एकभावनमुच्यते[8] ।
मन्त्रो यो गुरुरेवासौ यो गुरुः सा[9] च देवता ॥ ६ ॥

---

१. दायिन–ख०, नन्दन–ग० ।
२. यद्यहं तव वल्लभा–ख० ग० ।
३. कथन्ते–ख० ग० ।
४. गुह्यं–ख० ।
५. यत् त्वं चलात्मिके–ग० ।
६. महत्वं च–ख० ।
७. सुख–ख० ।
८. उच्यते–घ० ।
९. स–घ० ।

काली तारा महाविद्या षोडशी भुवनेश्वरी ।
भैरवी छिन्नमस्ता च विद्या धूमावती तथा ॥ ७ ॥
बगलामुखी सिद्धविद्या मातङ्गी कमलात्मिका ।
एता दश महाविद्याः सिद्धविद्याः प्रकीर्तिताः ॥ ८ ॥
अत्यन्तदुर्लभं[1] लोके [2]षडाम्नायनमस्कृताः ।
एताश्च[3] परमा विद्यास्त्रिषु लोकेषु दुर्लभाः ॥ ९ ॥
सुखदा मोक्षदा विद्या[4] क्लेशसाध्या न तादृशी ।
येन येन प्रकारेण [5]सिद्धिर्यास्यति भूतले ॥ १० ॥
सर्वं ते कथयिष्यामि प्रेमभावेन केवलम् ।
नैव[6] सिद्धाद्यपेक्षाऽस्ति नक्षत्रादिविचारणा ॥ ११ ॥
कालादिशोधनं नास्ति नास्ति मित्रादिदूषणम् ।
सिद्धविद्या महाविद्या युगसेवा परिश्रमम् ॥ १२ ॥
नास्ति किञ्चिन्महादेवि ! [7]दुःखसाध्यं कदाचन ।
या काली परमा विद्या [ [8]सैव तारा प्रकीर्तिता ॥ १३ ॥
या तारापरमा विद्या चतुर्धा कथिता पुरा ।
एतयोर्भेदभावेन ( सर्वे ) नानामन्त्रा भवन्ति हि ॥ १४ ॥
उक्तं च कालिकाकल्पे ताराकल्पे च ते मया ।
षोडशी या महाविद्या चतुर्धा कथिता पुरा ॥ १५ ॥ ]
लक्ष्मीबीजादिभेदेन पञ्चमी सा भवेदिह ।
एकाक्षरी महाविद्या बीजहीना भवेत् पुरा ॥
भुवनेश्वरी त्र्यक्षरी तु महाविद्या प्रकीर्तिता ॥ १६ ॥

---

१. दुर्लभा—घ० ।
२. षडम्नायनमस्कृता—घ० ।
३. एताभ्यः—घ० ।
४. नित्या—ग० ।
५. सिद्धि—ग० ।
६. नात्र—ख० ग० ।
७. महेशानि—ख० ।
८. कोष्ठान्तर्गतः पाठो नास्ति—क० ।

श्रीदेवी उवाच

दुष्टा विद्या च देवेश ! कथिता न प्रकाशिता ।
इदानीं तद्द्याभावात् कथयाऽऽनन्दसुन्दर ! ॥ १७ ॥

श्रीईश्वर उवाच

भुवनेशी महाविद्या देवराजेन वै पुरा ।
[1]आराधिता च विद्येयं वज्रेण नाम मोहिता ॥ १८ ॥
एकाक्षरी बीजहीना वाग्भवेनोज्ज्वला [2]भवेत् ।
कामराजाख्यविद्या[3] या विद्या[4] सा पुष्पधन्वना ॥ १९ ॥
[5]स्मरेण पूजिता पूर्वं भुवनेश्या प्रतिष्ठिता ।
कुमारी या[6] च विद्येयं तया[7] शप्ता बहिश्च्युता[8] ॥ २० ॥
केवलं शक्तिरूपेण शिवरूपेण केवलम् ।
तया[9] प्रतिष्ठिता विद्या तारा चन्द्रस्वरूपिणी ॥ २१ ॥
[ [10]भैरवी तु महाविद्या महासम्पत्प्रदायिनी ।
छिन्नमस्ता सुरामांसप्रिया रक्तस्वरूपिणी ॥ २२ ॥
धूमावती महाविद्या मारणोच्चाटने रता ।
बगलावश्यस्तम्भादिनानागुणसमन्विता ॥ २३ ॥
मातङ्गी च महाविद्या [11]त्रैलोक्यवशकारिणी ।
जीवपुत्रैस्तु धनदा पाषाणैः सर्वभोगदा ॥ २४ ॥

---

१. आराधिता सिद्धिदा च तेन सिद्धा च कालिका–ख० ।
२. परा–ग० ।
३. कामबीजाख्य–ख० ग० ।
४. सिद्धा–ग० ।
५. शक्रेण–ग० ।
६. सार–ख० ।
७. त्वया–ख० ग० ।
८. पतिव्रते–ख०, स्वप्नावतौ च्युता–ग० ।
९. माया–ख० ग० ।
१०. कोष्ठान्तर्गतः पाठो नास्ति–क० ।
११. वैरिनिग्रहकारिणी–ख० ।

कमला त्रिविधा प्रोक्ता एकाक्षरधिया[1] स्थिता ॥
केवला तु महासम्पद्दायिनी सुखमोक्षदा ॥ २५ ॥

॥ इति द्वितीये मुण्डमालातन्त्रे प्रथमः पटलः ॥ १ ॥

---

१. तया–ख० ग० ।

# अथ द्वितीयः पटलः

श्रीदेवी उवाच

[1]अक्षमाला तु कथिता यत्नतो न प्रकाशिता ।
अक्षमालेति किं नाम फलं किं वा वदस्व मे ॥ १ ॥

श्रीईश्वर उवाच

अक्षमाला तु देवेशि ! काम्यभेदादनेकधा ।
भवन्ति शृणु तत् प्रौढे ! विस्तरादुच्यते मया ॥ २ ॥
अनुलोमविलोमस्थक्लिप्तया वर्णमालया ।
आदिनान्तःक्षादिकान्तःक्रमेण परमेश्वरि ! ॥ ३ ॥
क्षकारं मेरुरूपं तं लङ्घयेन्न कदाचन ।
मेरुहीना च या माला मेरुलङ्घ्या च या भवेत् ॥ ४ ॥
अशुद्धाऽतिप्रकाशा च सा माला निष्फला भवेत् ।
चित्राणी[2] विशतन्त्वाभा ब्रह्मनाडीगतान्तरा ॥ ५ ॥
तया संग्रथिता ध्येया सर्वकामफलप्रदा ।
अष्टोत्तरशतजपादादौ क्लीबं समाचरेत् ॥ ६ ॥
ऋलवर्णद्वयं[3] यत् तु तद्धि क्लीबं प्रचक्षते ।
वर्गाणामष्टभिर्वापि काम्यभेदक्रमेण तु ॥ ७ ॥
[4]अकचटतपयशा इत्येवं चाष्टवर्गतः ।
स्फाटिकैर्मोक्षदा[5] प्रोक्ता पद्माक्षैर्बहुपुत्रदा ॥ ८ ॥

---

१. अङ्क–घ० ।

२. चित्रिणी विशतस्त्वाभा–ग०

३. लृ–घ० ।

४. काम्यभेदात्–ग० ।

५. अकचटतपयशहेत्येवं–ख० ग० ।

६. मोक्षलाभः स्यात्–ख० ।

शुद्धस्फटिकमाला तु महासम्पत्प्रदा प्रिये ! ।
श्मशानधूस्तुरैर्माला[1] चैका[2] धूमावतीविधौ ॥ ९ ॥
नराङ्गुल्यस्थिभिर्माला[3] ग्रथिता [4]पर्वभेदतः ।
सर्वसिद्धप्रदा मोक्षदायिनी वरवर्णिनि ! ॥ १० ॥
नाड्या संग्रथनं कार्यं रक्तेन वाससा अपि ।
सदा गोप्यं प्रयत्नेन मातुश्च जारवत् प्रिये ! ॥ ११ ॥
पञ्चधा कथिता माला सर्वसिद्धिफलप्रदा ।
मौक्तिकैर्ग्रथिता माला सर्वैश्वर्यफलप्रदा ॥ १२ ॥
मणिरत्नप्रवालैश्च हेमराजतसम्भवा ।
माला कार्या कुशग्रन्थ्या सर्वयज्ञफलप्रदा[5] ॥ १३ ॥
नाडीभिर्ग्रथिता माला महासिद्धिप्रदा प्रिये ! ।
त्रिंशतैश्वर्यफलदा पञ्चविंशेन मोक्षदा ॥ १४ ॥
चतुर्दशमयी मोक्षदायिनी भोगवर्द्धिनी ।
[6]पञ्चदशात्मिका देवि ! मारणोच्चाटने स्थिता ॥ १५ ॥
स्तम्भने मोहने वश्ये तिरोधानेऽञ्जने [7]तनोः ।
पादुकासिद्धिसङ्के च शतं सङ्ख्या प्रकीर्तिता ॥ १६ ॥
अष्टोत्तरशतं कुर्यादथवा सर्वकामदम् ।
नित्यं जपं करे कुर्यान्न तु काम्यं कदाचन[9] ॥ १७ ॥

---

१. काष्ठमाला–क० ।
२. नराङ्गुलस्थास्थिमाला–घ० ।
३. सर्व–घ० ।
४. सर्वतोऽक्षयफलप्रदा–ग० ।
५. पञ्चविंशा च–ख० ग० ।
६. दशपञ्चात्मिका–ख० ग० ।
७. माला–ख० ।
८. मनोः–ग० ।
९. अबोधनात्–क० ।

काम्यमपि करे कुर्यान्मालाभावे प्रियंवदे ।
तत्राङ्गुलिजपं कुर्वन् साङ्गुष्ठाङ्गुलिभिर्जपेत् ॥ १८ ॥
अङ्गुष्ठेन विना कर्मकृतं तदफलं भवेत् ।
अनामिकाद्वयं पर्व कनिष्ठादिक्रमेण तु ॥ १९ ॥
तर्जनीमूलपर्यन्तं करमाला प्रकीर्तिता ।
मेरुं प्रदक्षिणीकुर्वन् अनामामूलपर्वतः ॥ २० ॥
मेरुलङ्घनदोषात् तु अन्यथा जायते फलम् ।
आरभ्याऽनामिकामूलात् [1]प्रादक्षिण्यक्रमेण तु ॥ २१ ॥
मध्यमामूलपर्यन्तं जपेदष्टसु पर्वसु ।
[2]तर्जनीमूलपर्यन्तं जपेद् दशसु पर्वसु ॥ २२ ॥
मध्यमा त्रितया ग्राह्या अनामामूलमेव च ।
अनामामध्यपर्वं तु[3] मेरुं कृत्वा न लङ्घयेत् ॥ २३ ॥
तर्जन्यग्रे तथा मध्ये यो जपेत् तत्र मानवः ।
चत्वारि तस्य नश्यन्ति आयुर्विद्या यशो बलम् ॥ २४ ॥
अङ्गुलीर्न[4] वियुञ्जीत किञ्चित् सङ्कोचयेत् तलम् ।
अथातः प्रथमं[5] वक्ष्ये मालानां तन्त्रबोधनम् ॥ २५ ॥
पूजां विधाय भक्त्या तु शुचिः [6]पूर्वमुपोषितः ।
[7]विजने प्रजपेन्मौनी स्वयं मालां च साधकः ॥ २६ ॥

---

१. प्रदक्षिण-घ० ।
२. अयं श्लोकार्धः नास्ति-क० ।
३. पर्वात् तु-ग० ।
४. अङ्गुलि न-घ० ।
५. प्रथनं-ग० ।
६. पूर्वो मुखोषितः-घ० ।
७. विजये प्रथने मौनी स्वयं मालाश्च-ग०, निर्जने प्रथमे मौनी स्वयं माला च तान्त्रिकः-ख० ।

कृतनित्यक्रियः शुद्धः शुद्धक्षणे[1] च मन्त्रवित् ।
[2]यथाकालं यथालाभमक्षाण्यानीय[3] यत्नतः ॥ २७ ॥
अन्योन्यसमरूपाणि नातिस्थूलकृशानि च ।
कीटादिभिरदुष्टानि[4] न जीर्णानि नवानि च ॥ २८ ॥
गव्यैस्तु पञ्चभिस्तानि प्रक्षाल्य च पृथक् पृथक् ।
ततो द्विजेन्द्रपुण्यस्त्रीनिर्मितं ग्रन्थिवर्जितम् ॥ २९ ॥
त्रिगुणं त्रिगुणीकृत्य पट्टसूत्रमथापि वा ।
शुक्लं रक्तं[5] तथा कृष्णं शान्तिवश्याभिचारके ॥ ३० ॥
अश्वत्थपत्रैर्नवकैः पद्माकारेण[6] स्थापितैः ।
सूत्रं मणींश्च[7] गन्धान्तैः क्षालितास्तत्र निक्षिपेत् ॥ ३१ ॥
[8]श्मशानवारिणा चापि [9]पीठप्रक्षालितेन च ।
शुद्धोदकेन रत्नेन[10] कस्तूरीकुङ्कुमेन च ॥ ३२ ॥
[11]तावत् शक्तिं मातृकां च सूत्रे चैव मणिष्वथ ।
विन्यस्य पूजयेदाज्यैर्जुहुयाच्चैव यत्नतः ॥ ३३ ॥
होमकर्मण्यशक्तश्चेद् द्विगुणं जपमाचरेत् ।
मणिमेकैकमादाय सूत्रे सम्पातयेत् सुधीः ॥ ३४ ॥

---

१. शुद्धर्क्षेषु च—ग० ।
२. यथाकामं यथाकालं बीजान्यादाय–ख० ।
३. मक्षन्यानीय–ग० ।
४. रभुक्तानि–ग० ।
५. पीतं तथा रक्तम्–ख० ।
६. पद्माकारैः प्रकल्पयेत्–ख० ।
७. मणिं च–ख० ।
८. वासिना–ख० ।
९. भगवत्प्रक्षालनेन च–ख०, पीठं–ग० ।
१०. रक्तेन–ग० ।
११. तारं–ख० ग० ।

मुखे मुखं तु संयोज्य पुच्छे पुच्छं तु योजयेत् ।
गोपुच्छसदृशी [1]कार्याऽथवा सर्पाकृतिर्भवेत् ॥ ३५ ॥

तत्सजातीयमेकाक्षं मेरुत्वेनाऽग्रतो न्यसेत् ।
एकैकमणिमध्ये तु ब्रह्मग्रन्थिं प्रकल्पयेत् ॥ ३६ ॥

जपमालां विधायेत्थं ततः संस्कारमारभेत् ।
क्षालयेत् पञ्चगव्येन सद्योजातेन तज्जलैः ॥ ३७ ॥

मन्त्रस्तु—

ॐसद्योजातं प्रपद्यामि सद्योजाताय वै नमः ॥
[2]भवे भवे नाभिभवे भवस्व मां भवोद्भवः ॥
भवे भवस्य मां भवोद्भवः ॥ ३८ ॥

ङेन्तान्तः[3] प्रणवाद्येन नमोऽन्तेन क्रमाद् यजेत् ।
चन्दनागुरुगन्धाद्यैर्वामदेवेन घर्षयेत् ॥ ३९ ॥

ॐ नमो वामदेवाय नमो ज्येष्ठाय
नमः श्रेष्ठाय नमो रुद्राय नमः ।
कालाय नमः कलविकरणाय नमो
बलविकरणाय नमः प्रमथनाय नमः ॥
सर्वभूतदमनाय नमो
नम उन्मत्ताय उन्मनाय नमो नमः ॥ ४० ॥

धूपयेत् तामघोरेण लेपयेत्[4] पुरुषेण वै ।
ॐ घोरेभ्योऽघोरेभ्यो घोरघोरतरेभ्यः ॥ ४१ ॥

---

१. माला—ख० ।
२. भवे भवे द्विजन्तूनां भवतु वा मलभः—घ० ।
..................भजस्व मां भवोद्भवाय नमः—ख० ।
३. ङेन्तपुनराद्येन नमोऽन्तेन—क०, ग० ।
४. लेपयेत् तत्पुरुषेण वै—ख० ।

सर्वतः सर्वसर्वेभ्यो नमस्तेऽस्तु रुद्रेभ्यः[1]।
ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि ॥ ४२ ॥
तन्नो रुद्रः प्रचोदयात्।

मन्त्रयेत् पञ्चमेनैव प्रत्येकं तु शतं शतम् ॥ ४३ ॥

ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्।
ब्रह्मणोऽधिपतिर्ब्रह्मणोऽधिपतिः शिवः[2] पञ्च सदाशिवः ॥४४॥

प्रणवाद्यो महामन्त्रः सदाशिव इति क्रमात्।
मेरुं च पञ्चमेनैव ततो मन्त्रेण मन्त्रयेत् ॥ ४५ ॥

संस्कृत्यैवं बुधो मालां तत्प्राणांस्तत्र स्थापयेत्।
मूलमन्त्रेण देवेशि ! सम्पूज्य भक्तिभावतः ॥ ४६ ॥

[3]गुरुं सम्पूज्य तद्धस्तात् गृह्णीयादक्षमालिकाम्।
अशुचिर्न स्पृशेदेनां [4]करभ्रष्टां न कारयेत् ॥ ४७ ॥

[5]अङ्गुष्ठस्थामक्षमालां चालयेन्मध्यमाग्रतः।
तर्जन्यां न स्पृशेदेनां गुरोरपि न दर्शयेत् ॥ ४८ ॥

मध्यमाद् भुक्तिमुक्तिः स्यादनामादुत्तमेन तु।
तर्जनीमारणादिष्टकनिष्ठामारणं स्मृतम् ॥ ४९ ॥

[6]भुक्तौ मुक्तौ तथा कृष्टौ मध्यमायां जपेत् सुधीः।
अङ्गुष्ठानामिकाभ्यान्तु जपेद्[7] वश्ये तु कर्मणि ॥ ५० ॥

---

१. रुद्ररूपेभ्यः—ख० ग०।
२. शिवोऽस्तु मे ब्रह्मा शिवोम्—ग०।
ब्रह्मा शिवो मेऽस्तु यदा शिवोम्—ख०।
३. सम्पूज्य देवं—क० ग०।
४. गुरोरपि न दर्शयेत्—ग०।
५. एषः श्लोकः नास्ति—ख० ग०।
६. श्लोकोऽयं नास्ति—क०।
७. उत्तमकर्मणि—ग०।

[1]तर्जन्यङ्गुष्ठयोगेन मारणोच्चाटने जपेत् ।
कनिष्ठाङ्गुष्ठयोगाच्च जपेन्मारणकर्मणि ॥ ५१ ॥
जपान्ते तु च मालां वै पूजयित्वा तु पोषयेत्[2] ।
जपकाले तु गोप्तव्या जपमाला तु सा शुभा ॥ ५२ ॥
गुरुं प्रकाशयेद् विद्वान् न तु मन्त्रं कदाचन ।
अक्षमालां च विद्यां च[3] न कदाचित् प्रकाशयेत् ॥ ५३ ॥
भूतराक्षसवेताला गन्धर्वाः सिद्धचारणाः ।
हरन्ति प्रकटात् सिद्धिं तस्माद् गुप्तिं सदा कुरु ॥ ५४ ॥
जीर्णसूत्रे पुनः सूत्रं ग्रथयित्वा शतं जपेत् ।
प्रमादात् पतिताद्धस्तात् [4]शतमष्टोत्तरं जपेत् ॥ ५५ ॥
[5]अमन्त्रिषिद्धसंस्पर्शे क्षालयित्वा च [6]पूजयेत् ।
जपमाला मया देवि ! कथिता भुवि दुर्लभा ॥
सदा गोप्या प्रयत्नेन यदि त्वं मम वल्लभा ॥ ५६ ॥

॥ इति द्वितीये मुण्डमालातन्त्रे द्वितीयः पटलः ॥ २ ॥



१. जपान्तकाले तां मालां पूजयित्वा तु गोपयेत्—ग०,
जपकाले तां मालां............... —ख० ।
२. मुद्रां—ग० ।
३. क्षालयेदष्टशतं जपेत्—ख० ।
४. ता व—ग० ।
५. यथोचितम्—ग० ।
६. यदाचर्याविलम्बेन सर्वे मन्त्राः सुसिद्धिदाः—ग० ।

# अथ तृतीयः पटलः

श्रीदेवी उवाच

स्थानासने देवदेव! कथयानन्दसुन्दर!।
[1]सदाचार्यं विना येन सर्वमन्त्राः सुसिद्धगाः ॥ १ ॥

श्रीईश्वर उवाच

नदीतीरे बिल्वमूले श्मशाने शून्यवेश्मनि।
महालिङ्गे पर्वते वा[2] देवागारे चतुष्पथे ॥ २ ॥
[3]शवस्योपरि मुण्डे वा जले वा कण्ठपूरिते।
संग्रामभूमौ योनौ तु स्थले वा विजने वने ॥ ३ ॥
[4]यत्र कुत्र स्थले रम्ये यत्र वा स्यान्मनोरमम्।
स्थानं ते कथितं देवि! आसनं कथ्यतेऽधुना ॥ ४ ॥
[5]स्तम्भने गजचर्माऽथ मारणे माहिषं तथा।
मेषचर्म तथोच्चाटे खड्गीयं वश्यकर्मणि ॥ ५ ॥
विद्वेषे जाम्बुकं प्रोक्तं भवेद् गोचर्म शान्तिके।
व्याघ्राजिने सर्वसिद्धिर्ज्ञानसिद्धिर्मृगाजिने ॥ ६ ॥
वस्त्रासनं रोगहरं वेत्रजं [6]विपुलश्रियम्।
कौशेयं पुष्टिकार्ये च कम्बलं [7]दुःखमोचनम्॥
रक्तं वा यदि वा कृष्णं विशेषाद् रक्तकम्बलम् ॥ ७ ॥

---

१. यदाचार्यविलम्बेन सर्वे मन्त्राः सुसिद्धिदाः- ग०।

२. यत्र वास्यान्मनोलयः–ग०।

३. एषः श्लोकः नास्ति–ग०।

४. रम्यस्थाने मनःप्रीते आसनानि वदाम्यहम्–ग०।

५. व्याघ्राजिनं सर्वसिद्ध्यै मारणे··· ··मृगाजिनम्–ख० ग०।

६. श्रीविवर्द्धनम्–ख०, प्रीतिवर्धनम्–ग०।

७. सर्वसिद्धिदम्–ग०।

निन्दितासनमाह—

वंशासने च दारिद्र्यं दौर्भाग्यं दारुजासने ।
धरण्यां दुःखसम्भूतिः पाषाणे रोगसम्भवः ॥ ८ ॥
तृणासने यशोहानिरेतत् साधारणं स्मृतम् ।
मृदुकम्बलमास्तीर्णं संग्रामे पतितं हि तत् ॥ ९ ॥
जन्तुव्यापादितं वाऽपि मृतं वा [1]नवमासकम् ।
[2]गर्भच्युतत्वचं वापि नारीणां योनिजां[3] त्वचम् ॥ १० ॥
सर्वसिद्धिप्रदं देवि ! सर्वभोगसमृद्धिदम् ।
[4]त्वचं वा योनिसंस्थायाः कुर्याद् वीरो रतासनम् ॥ ११ ॥
श्मशानकाष्ठघटितं पीठं वा[5] यज्ञदारुजम् ।
नाऽदीक्षितो विशेज्जातु कृष्णसारासने गृही ॥ १२ ॥
उदासीनवदासीन[6]स्नातकब्रह्मचारिणः ।
[7]कुशाजिनाम्बरैः कार्यं चतुरस्रं समन्ततः ॥ १३ ॥
एकहस्तं द्विहस्तं वा चतुरङ्गुलमुच्छ्रितम् ।
विशुद्ध आसने कुर्यात् संस्कारं पूजनं[8] बुधः ॥ १४ ॥
भद्रासनं [9]रोगहरं योगदं कौर्ममासनम् ।
पद्मासनमिति प्राहुः सर्वैश्वर्यफलप्रदम् ॥ १५ ॥

---

१. नारमासनम्–ग० ।
२. गर्दभस्य तु चर्माणि–ग० ।
३. योनिजां–घ० ।
४. त्वचं वायौ वनस्थानां–ख०, ग० ।
५. रक्तदारुणम्–ग० ।
६. ज्ञातक–घ० ।
७. कुशाजिनाम्बरेणाढ्यं–ग० ।
८. पूजनत्वधः–ग० ।
९. भोगकरं–ग० ।

[1]एकं वीरासनं देवि ! सर्वसिद्धिप्रदं नृणाम् ।
ऊर्ध्वपादौ स्थितौ देवि ! निरोधः परिमण्डितम् ॥ १६ ॥

पद्मासनेन देवेशि ! पातालगृहसंस्थितः ।
सर्वासनानां श्रेष्ठं हि देवैरपि सुदुष्करम् ॥ १७ ॥

रात्रौ च योऽर्चयेद् देवीं धनवान् सुतवान् भवेत् ।
पीठानां देवि ! सर्वेषां चतुर्धा पीठमुत्तमम् ॥ १८ ॥

उड्डीयानं महापीठं पीठानां पीठमुत्तमम् ।
जालन्धरं महापीठं तथा पूर्णाचलं[2] मतम् ॥ १९ ॥

पञ्चाशत्पीठमध्ये तु कामरूपं महाफलम् ।
कृते जालन्धरं ज्ञेयं त्रेतायां पूर्णपर्वतम् ॥ २० ॥

उड्डीयानं द्वापरे च कामरूपं कलौ युगे ।
महाफलप्रदं लोके तत्क्षणात् सिद्धिदं महत् ॥ २१ ॥

जपपूजा बलिस्तत्र देवि ! लक्षगुणो भवेत् ।
बहुधा कथ्यते देवि ! किं तस्य गुणवर्णनम् ॥
[3]योनिरूपेण यत्रास्ते स्वयं कोटिगुणात्मिका ॥ २२ ॥

॥ इति द्वितीये मुण्डमालातन्त्रे तृतीयः पटलः ॥ ३ ॥



---

१. एवं–ख० ।

२. तथा पुन्या च सम्मतम्–घ०, तथा पर्णाचलं महत्–ग० ।

३. योनिरूपेण मन्त्रास्ते सुखं कोटिगुणान्विकाम्–क० ।

# अथ चतुर्थः पटलः

श्रीदेवी उवाच

केवलं बलिदानेन तुष्टा भवति[1] चण्डिका ।
कथितं पूर्वमस्मभ्यं[2] [3]प्रकाशं कुरु शङ्कर ! ॥ १ ॥

श्रीईश्वर उवाच

अत्यन्तगुह्यं देवेशि ! विधानं बलिपूजनम् ।
कथयामि वरारोहे ! सुस्थिरा भव [4]सर्वदा ॥ २ ॥
दधि क्षीरं [5]व्रतान्नं च पायसं शर्करान्वितम् ।
पायसं क्षौद्रमांसं च नारिकेलं[6] समोदकम् ॥ ३ ॥
[7]शर्करं मेषखण्डं च [8]आर्द्रकं सहशर्करम् ।
रम्भाफलं लड्डुकं च भर्जितान्नं च[9] पिष्टकम् ॥ ४ ॥
[10]शालमत्स्यं च पाठीनं शकुलं चेकुटं[11] तथा ।
मद्गूरं च[12] बलिं दद्यात् मांसं माहिषमेषकम्[13] ॥ ५ ॥

---

१. भवतु–घ० ।
२. मावभ्यं–ख०, मभ्यस्तं–ग० ।
३. तत् प्रकाशय–ख० ।
४. साम्प्रतम्–ख०, ग० ।
५. गुडं छागं–ख०, गुडं वान्नं–ग० ।
६. नालिकेरसमोदकम्–ग० ।
७. शशकं मेषमुण्डं च–ख०, शशकं भेषखण्डं च–ग० ।
८. सार्द्रकं–ख०, ग० ।
९. भञ्जितान्नम्–घ० ।
१०. शाणमत्स्यं च–ग० ।
११. चित्रकलि–ख०, चिन्टकम्–ग० ।
१२. मद्गुरं चेङ्गितं–ख०, मद्गुरञ्चेत्रिमं–ग० ।
१३. माहिषमेव च–ख०, ग० ।

पक्षिमांसं महादेवि ! डिम्बं[1] नानासमुद्भवम् ।
कृष्णछागं[2] महामांसं गोधिकां हरिणीं तथा ॥ ६ ॥
जलजे मत्स्यमांसे च गण्डकीमांसमेव च ।
नानाव्यञ्जनदग्धानि[3] व्यञ्जनानि मधूनि च ॥ ७ ॥
ईषद् दग्धं घृतेनाक्तं निशायां दिवसेऽपि वा ।
बलिं दद्यात् विशेषेण कृष्णपक्षे शुभे दिने ॥ ८ ॥
छागे दत्ते भवेद् वाग्मी मेषे[4] दत्ते कविर्भवेत् ।
महिषे[5] धनवृद्धिः स्यात् मृगे मोक्षफलं[6] भवेत् ॥ ९ ॥
दत्ते पक्षिणि[7] ऋद्धिः स्यात् गोधिकायां महाफलम् ।
नरे दत्ते महर्द्धिः स्यात् यतः[8] सिद्धिरनुत्तमा ॥ १० ॥
ललाट-हस्त-हृदय-शिरो-भ्रू-मध्यदेशतः ।
स्वहृदो[9] रुधिरे दत्ते रुद्रदेह इवाऽपरः ॥ ११ ॥
चण्डालबलिदानेन महासिद्धिः प्रजायते ।
सुरादानेन देवेशि ! महायोगीश्वरो भवेत् ॥ १२ ॥
सुरा तु[11] त्रिविधा प्रोक्ता स्फाटिकी डाकिनी तथा ।
काञ्चिकी च महादेवि ! कथिता भुवि दुर्लभा ॥ १३ ॥

---

१. डिम्बं–ख०, घ० ।
२. कृष्णसारम्–ख० ।
३. दुग्धानि–ख०, ग० ।
४. मत्स्ये–ग० ।
५. बरम्–ख०, ध्रुवम्–ग० ।
६. माहिषे धनसमृद्धिः–ख०, माहिषे धनसिद्धिः–ग० ।
७. भोग–ख०, ग० ।
८. पक्षिदत्ते महर्द्धिः–ग० ।
९. इष्ट–ख०, ग० ।
१०. देहाद्–ख०, ग० ।
११. ते विविधा–घ० ।

[1]स्फाटिकीदानमात्रेण धनवृद्धिरनुत्तमा ।
डाकिनीदानयोगेन सर्ववश्यो भवेद् ध्रुवम् ॥ १४ ॥

[2]काञ्चिकी सुरया देवि ! योऽर्चयेत् परमेश्वरीम् ।
गुटिकाञ्जनस्तम्भादिमारणोच्चाटनादिभिः ॥ १५ ॥

महासिद्धीश्वरो भूत्वा वसेत् कल्पायुतं दिवि ।
[3]अर्घ्योदके महेशानि ! महासिद्धिरनुत्तमा ॥ १६ ॥

रक्तचन्दनबिल्वादि[4]जवाकुसुमवर्वरैः ।
अर्घ्यं दत्त्वा महेशानि ! सर्वकामार्थसाधनम्[5] ॥ १७ ॥

सुरया चाऽर्घ्यदानेन योगिनीनां प्रियो भवेत् ।
[6]पुरः पात्रं घटस्याऽन्ते तदन्ते भोज्यपत्रकम् ॥ १८ ॥

तदन्ते वीरपात्रं च बलेः पात्रं तदन्तिके ।
पाद्यार्घाचमनीयानां पात्राणि स्थापयेत् बुधः ॥ १९ ॥

महायोगी भवेद् देवि ! पीठप्रक्षालितैर्जलैः ।
स्वयम्भूकुसुमे दत्ते भवेत् षट्कर्मभाजनम् ॥ २० ॥

सुशीतलजलैरर्घ्यं कस्तूरीकुङ्कुमान्वितैः ।
कुण्डगोलोऽथ बीजैर्वा सर्वसिद्धीश्वरो भवेत् ॥ २१ ॥

सधवारतिसम्भूतं कुण्डमुत्तमभूतिदम् ।
विधवारतिसम्भूतं [7]गोलमृद्धिप्रदं भुवि ॥ २२ ॥

---

१. कार्ष्णिकी स्फाटिकी दाने—ग० ।
२. कार्ष्णिकी—ग० ।
३. अर्घ्यं दत्ते—ख०, ग० ।
४. जपा—ग० ।
५. समृद्धये—ख०, सिद्धये—ग० ।
६. 'पुरः पात्रमि'त्यारभ्य 'स्थापयेद् बुध' इति नास्ति—ख० ।
७. गोखं सिद्धि—ख०, ग० ।

मूलमन्त्रेण देवेशि ! आकृष्य निर्भयः शुचिः ।
अर्घ्यं [1]दद्यात् विशेषेण चक्रवातेन [2]पूजिता ॥ २३ ॥

स्वयम्भूकुसुमं देवि ! त्रिविधं भुवि जायते ।
आषोडशादनूढाया उत्तमा सर्वसिद्धिदा ॥ २४ ॥

[3]रजोयोगवशादन्या मध्यमा सुखदायिनी ।
बलात्कारेण देवेशि ! अधमा भोगवर्द्धिनी ॥ २५ ॥

[4]कुमारीपूजने शक्तो नारीं स्वप्नेऽपि न स्मरेत् ।
आकृष्य बद्धयोगेन [5]गोलोऽथ पुष्पकं न्यसेत् ॥ २६ ॥

[6]शुद्धं कुर्यात् प्रयत्नेन निर्भयः शुचिमानसः ।
ताम्रपात्रे कपाले वा श्मशानकाष्ठनिर्मिते ॥ २७ ॥

शनिभौमदिने वाऽपि शरीरे मृतसम्भवे ।
[7]सुवर्णेऽप्यथ लोहे वा चक्रमर्च्यं यथाविधि ॥ २८ ॥

पुष्पाण्यपि तथा दद्याद् रक्तकृष्णसितानि च ।
श्वेतरक्तं जवापुष्पं करवीरं तथा प्रिये ! ॥ २९ ॥

तगरं मल्लिका जाती मालती यूथिका तथा ।
धुत्तूराशोकबकुलाः श्वेतकृष्णाऽपराजिताः ॥ ३० ॥

---

१. दत्त्वा–ख०, ग० ।
२. पूजितम्–ख०. ग० ।
३. बलात्कारेण ऊढाया मध्यमा भोगवर्द्धिनी ।
रजोयोगवशादन्या अधमा सुखदायिनौ ।।–ख०, ग० ।
४. कुमारीपूजनाशक्तो देवीमापूजनं चरेत्–ख० ।
५. बन्धयोगेन कुण्डगोलोत्थपुष्पकम्–ख०, ग० ।
६. सर्वं–ख०, ग० ।
७. स्वर्णे रौप्येऽथवा लोहे–ख०, ग० ।

[1]बकपुष्पं बिल्वपत्रं चम्पकं नागकेशरम् ।
[2]वह्निका झिण्टिका कश्चिरक्तं यत् परिकीर्तितम् ॥ ३१ ॥
अर्कपुष्पं जवापुष्पं बर्वरं च प्रियंवदे ! ।
अष्टम्यां तु विशेषेण सन्तुष्टा तस्य पार्वती ॥ ३२ ॥

अष्टम्यां च चतुर्दश्यां नानापुष्पैः समर्चयेत् ।
पद्मपुष्पेण रक्तेन सन्तुष्टाः सर्वदेवताः ॥ ३३ ॥

[4]कृष्णा वा यदि वा शुक्ला कालिका[5] वरदा भवेत् ।
श्मशानधुत्तूरेणैव तुष्टा मधुमती[6] परा ॥ ३४ ॥

श्मशानजातपुष्पेण सन्तुष्टा कालिका परा ।
वन्यपुष्पैश्च विविधैः सन्तुष्टा पार्वती परा ॥ ३५ ॥

आमलक्यास्तु[7] पत्रेण तुष्टा पुष्पेण पार्वती ।
अष्टम्यां च चतुर्दश्यां नानापुष्पैः सदाऽर्चयेत् ॥
श्मशाने रात्रिशेषे च शनिभौमदिने निशि ॥ ३६ ॥

॥ इति द्वितीये मुण्डमालातन्त्रे चतुर्थः पटलः ॥ ४ ॥



१. रक्तपुष्पं—ग० ।
२. मल्लिकाकिण्टिकाकाञ्चीरक्तं—ग० ।
३. बालिका—घ० ।
४. 'कृष्णा वेत्यारभ्य' 'तुष्टा पुष्पेण पार्वत' इत्यन्तं नास्ति—ख० ।
५. धूमावती—ग० ।
६. जवा—ग० ।
७. आमलक्या रक्तपत्रेण—ग० ।
८. समर्चयेत्—ग० ।

# अथ पञ्चमः पटलः

श्रीदेवी उवाच

रहस्यातिरहस्यं मे पुरश्चर्याविधिं प्रभो ! ।
वदस्व यदनुष्ठानात् सर्वकामा भवन्ति हि ॥ १ ॥

श्रीईश्वर उवाच

गृहीत्वा सद्गुरोर्दीक्षां शुभकाले दिवा निशि ।
अधमो वैष्णवः प्रोक्तो मध्यमः शैवदीक्षितः ॥ २ ॥
[1]परया दीक्षितो यो वै स एव परमो गुरुः ।
चतुर्दशसहस्राणि सेवितो[2] हरिहरात्मकः ॥ ३ ॥
ततो भवति देवेशि ! [3]परापूजारतः पुमान् ।
कायेन मनसा वाचा सुवर्णरजतादिभिः ॥ ४ ॥
सन्तोष्य परया भक्त्या गुरुं दीक्षां समाश्रयेत् ।
पूर्वोक्तस्थानमासाद्य जपपूजां [4]समाश्रयेत् ॥ ५ ॥
प्रातःकालं समारभ्य जपेन्मध्यदिनावधि ।
प्रथमेऽहनि यज्जप्तं तज्जप्तव्यं दिने दिने ॥ ६ ॥
न्यूनाधिकं न जप्तव्यमासमाप्तं[5] सदा जपेत् ।
गते प्रथमयामे तु तृतीयप्रहरावधि ॥ ७ ॥

---

१. सुरया–ग० ।
२. सेवितेऽरिहरात्मकः–ख०, सेवितो हरिरम्बुजे–ग०, सेवितोऽविराजते–घ० ।
३. प्रायः–ग० ।
४. समाचरेत्–ख० ।
५. असमाप्तेः–ग० ।

निशायां च प्रजप्तव्यं रात्रिशेषे जपेन्न च ।
हविष्यं [1]भक्षयेन्नित्यमेकवारं सुसंयतः ॥ ८ ॥
लघ्वाहारं प्रकुर्वीत युवतीपूजने [2]रतः ।
स्वस्त्रीमन्यस्त्रियं वापि पूजयेत् सर्वपर्वसु ॥ ९ ॥
नाधमे [3]सङ्गतिः कार्या सर्वप्राणिहिते रतः ।
यस्य यावान् जपः प्रोक्तः तद्दशांशमनुक्रमात् ॥ १० ॥
तत्तद्द्रव्यैर्जपस्याऽन्ते होमं कुर्याद् दिने दिने ।
होमस्य च दशांशेन तर्पणं प्रोक्तमेव च ॥ ११ ॥
तर्पणस्य दशांशेन शिरोमार्जनमिष्यते ।
तद्दशांशेन विप्रेन्द्रान् कुर्वीत[4] कुलकन्यकाः ॥ १२ ॥
सम्भोजयेत्[5] प्रीतियुक्तैर्द्रव्यैर्नानाविधैरपि ।
होमाद्यशक्तो देवेशि ! कुर्याच्च[6] द्विगुणं जपम् ॥ १३ ॥
यदि पूजाद्यशक्तः स्यात् द्रव्यालाभेन[7] सुन्दरि ! ।
केवलं जपमात्रेण पुरश्चर्या विधीयते ॥ १४ ॥
दिव्यो वा यदि वा वीरो भुवि स्यात् साधकोत्तमः ।
स्वेच्छाचारपरो भूत्वा एकान्ते सर्वदा जपेत् ॥ १५ ॥
मत्स्यमांसप्रदानेन शाक्तः कुर्यात् पुरस्क्रियाम् ।
एकरात्रौ श्मशाने वा शवे वा प्रौढबालयोः ॥ १६ ॥

---

१. रात्रौ न कदाचिद् दिनेषु च--ख० ।
२. यतः–घ० ।
३. सन्ततिः–ग० ।
४. युवतीः–ग० ।
५. संयोजयेत्–ग० ।
६. कुर्यात् तद् द्विगुणं जपम्–ग० ।
७. द्रव्याभावेन–ग० ।

मयोक्तं भैरवीकल्पे विधानं वरवर्णिनि ! ।
हस्तमात्रनिखाते[1] वा कुण्डे[2] वा विजने वने ॥ १७ ॥

वीराणां साधनं देवि ! कथितं भुवि दुष्करम् ।
कुमारीपूजनादेव पुरश्चर्याविधिः स्मृतः ॥ १८ ॥

नानाजातिभवाः कन्या [3]रूपलावण्यसंयुताः ।
अत्यन्तप्रौढा बाला वा कोकिला [4]वरदायिनी ॥ १९ ॥

नानाद्रव्यैः प्रियकरैः भक्ष्यभोज्यादिभिः शुभैः ।
पूजयेत् परभावेन नानारूपमनोहराः ॥ २० ॥

भगिनी कन्यका वाऽपि दौहित्री वा कुटुम्बिनी ।
मातृवर्जं सदा पूज्या नानाजातिसमुद्भवा ॥ २१ ॥

अथवाऽन्यप्रकारेण पुरश्चरणमिष्यते ।
[5]कृष्णां चतुर्दशीं प्राप्य नवम्यां तु महोत्सवे ॥ २२ ॥

सूर्योदयं समारभ्य यावत् सूर्योदयं भवेत् ।
तावज्जप्ते महेशानि ! पुरश्चर्या विधीयते ॥ २३ ॥

कृष्णाष्टमीं समारभ्य यावत् कृष्णाष्टमी भवेत् ।
सहस्रसंख्ये जप्ते तु पुरश्चरणमिष्यते ॥ २४ ॥

अष्टमीं नवमीं रात्रौ पूजां कुर्यात् विशेषतः ।
[6]दशम्यां पारणं कुर्यात् मत्स्यमांसादिभिः प्रिये ! ॥ २५ ॥

---

१. विखातै–ग०, घ० ।
२. मुण्डे–घ ।
३. तारुण्य–ग० ।
४. नादिनी–ग० ।
५. मनोहरम्–घ० ।
६. नवम्याम्–ग० ।

षट्सहस्रं जपेन्नित्यं भक्तिभावपरायणः ।
चतुर्दशीं समारभ्य यावदन्या चतुर्दशी ॥ २६ ॥

तावज्जपेत्[1] महेशानि ! पुरश्चरणमिष्यते ।
केवलं जपमात्रेण मन्त्राः सिद्धा भवन्ति हि ॥ २७ ॥

विना होमादिदानेन विशेषात् पीठपूजने[2] ।
योनिपीठं महापीठं कामपीठं[3] तथाऽपरम् ॥ २८ ॥

तयोरेकतरं पूज्यं रुद्रदेह इवापरः[4] ।
तीर्थे [5]तिथिविशेषे च ग्रहणे चन्द्रसूर्ययोः ॥
[6]गुरोरनुग्रहे चैव दीक्षाकालः शुभः स्मृतः ॥ २९ ॥

॥ इति द्वितीये मुण्डमालातन्त्रे पञ्चमः पटलः ॥ ५ ॥



१. जप्ते–ग० ।

२. पूजनैः–ग० ।

३. कामरूपम्–ख०, ग० ।

४. इवेष्टयोः–ख० ।

५. तीर्थे विशेषेणं–ख०, ग० ।

६. आदेशमात्रेण नान्यथा सिद्धिभाग् भवेत्–ख० ।

## अथ षष्ठः पटलः

अथ देवि ! प्रवक्ष्यामि गुप्तां त्रिभुवनेश्वरीम् ।
यामाराध्य पुरा सर्वे भूतिभाजोऽभवन् सुराः ॥ १ ॥
ब्रह्मा रुद्रः सहस्राक्षो [1]रमाशिवमनोभवाः ।
शक्तिर्माया महेशानि ! विद्या वस्वक्षरा मता ॥ २ ॥
ऋषिर्ब्रह्मा विराट् छन्दो देवता लोकपावनी ।
महामायेति विख्याता बीजं लक्ष्मीः प्रकीर्त्तितम् ॥ ३ ॥
माया शक्तिः कीलकं च शैवदेहमुदाहृतम् ।
षडङ्गानि ततः कुर्यात्[2] मायादीर्घेण संयुता ॥ ४ ॥
ध्यानं देवि ! प्रवक्ष्यामि सर्वैश्वर्यफलप्रदम् ।
विद्युत्पुञ्जनिभां देवीं रक्तपद्मासने स्थिताम् ॥ ५ ॥
त्रिनेत्रां दिग्भवावासां पाणिविंशतिशोभिताम् ।
पीत-रक्त-श्वेत-कृष्ण-धूम्र-पाटल-मौक्तिकम् ॥ ६ ॥
[3]नील-पीत-विचित्राणि वर्णानि कथितानि वै ।
खड्ग-शूल-गदा-चक्र-शङ्ख-चाप-शराणि च ॥ ७ ॥
लसत्परिघशस्त्राढ्यमूषलं दाननिर्भयम् ।
कर्तृमुद्रां तथा योगमुद्रां[4] च दधतीं करैः ॥ ८ ॥
शक्तिशूलधरां देवीं सर्वसिद्धिफलप्रदाम् ।
पूजायन्त्रं प्रवक्ष्यामि षट्कोणं शक्तिसंयुतम् ॥ ९ ॥

---

१. माया–ख०, ग० ।

२. मायया दीर्घयुक्तया–ख०, ग० ।

३. पुच्छाभचित्राणि–ख०, ग० ।

४. मुदती–घ० ।

षडष्टषोडशदलं पद्मं[1] द्वारसमन्वितम् ।
त्रिकोणे पूजयेद् देवीं मायां वाणीं हरिप्रियाम् ॥ १० ॥

रतिः प्रीतिः क्षमा पूज्या [2]पुष्टिस्तुतिमनोहराः ।
योगनिद्रा महानिद्रा महामाया महासुरी[3] ॥ ११ ॥

महामुद्रा महास्वप्ना षड्दले पूजयेत् क्रमात् ।
क्षेमङ्करी योगमुद्रा[4] शरीराकर्षिणी तथा ॥ १२ ॥

लज्जा शान्तिर्लक्षणा च चपला [5]शान्तिविग्रहा ।
अष्टदले महेशानि ! वामावर्तेन पूजयेत् ॥ १३ ॥

विद्या च परमा विद्या महाविद्या महाबला[6] ।
सौम्या परमसौम्या च महासौम्या महापरा[7] ॥ १४ ॥

कालरात्रिर्महारात्रिर्गायत्री[8] च महाम्बिके ! ।
प्रकृतिर्विकृतिर्मेधा विश्वरूपाः क्रमादिमाः ॥ १५ ॥

महातत्त्वा[9] प्रमत्ता च उन्मदा मन्दगामिनी ।
महाप्रह्लादा बगला पूजयेद् विधिना तथा ॥ १६ ॥

जपमुण्डां महोग्रां च भीमाद् भीमकपालिकाम् ।
अट्टाट्टहासिनीं नित्यां हर्षेणाऽविह्वलां तथा ॥ १७ ॥

---

१ चतुर्द्वारसमन्वितम्–ख० ।
२. तुष्टिः पुष्टिर्मनोभवाः–ख०, ग० ।
३. महेश्वरी–ख० ।
४. निद्रा–ख० ।
५. पलाशान्तिश्च विग्रहा–घ० ।
६. फला–ख० ।
७. परापरा–ख०, ग० ।
८. महामात्रा महात्मिका–ख०, ग० ।
९. महामत्ता प्रमत्ता च उन्मत्ता मन्दशायिनी–ख० ।
महामत्ता प्रगल्भा च उन्मत्ता मन्दशायिनी–ग० ।

विकटा बहुरूपा च महारूपा महाप्रदा ।
[1]घोररावा महानित्या महामञ्जुलभासिनी ॥ १८ ॥

सर्वदा सुन्दरी पूज्या अपरत्र[2] क्रमात् प्रिये ! ।
इन्द्रादयस्ततः पूज्याः पूर्वादिदिग्विदिक्षु च ॥ १९ ॥

चतुर्द्वारे ततः पूज्या भगक्लिन्ना भगाक्षरा ।
भगदेवी भगाक्षी च विधिना वामवर्त्मना ॥ २० ॥

एवं सम्पूज्य तां देवीं चतुर्लक्षं मनुं जपेत् ।
होमादिविधिना कुर्यात् दशांशात् क्रमतः प्रिये ! ॥ २१ ॥

अनया विद्यया देवि ! महासिद्धीश्वरो भवेत् ।
धनवान् पुत्रवान् वाग्मी सुधी भोगी महाबलः ॥ २२ ॥

राज्यलक्ष्मीमवाप्नोति देवीपुत्रः सदैव हि ।
भुवनेशी भगवती वह्निजायान्वितो[3] मनुः ॥ २३ ॥

[4]सप्ताक्षरो महेशानि ! सर्वसिद्धिफलप्रदः ।
स्वर्णपद्मनिभां देवीं सर्वालङ्कारभूषिताम् ॥ २४ ॥

क्षौमवासां त्रिनयनां शैलसिंहसमाश्रिताम्[5] ।
अथवा सिंहशैलौ च इन्द्रादिरथदेवताः ॥ २५ ॥

एवं ध्यात्वा जपेत् पूर्वं समस्तं हि समाहितः[6] ।
[7]सर्वकालं तु तज्जप्यं मन्त्रं सर्वसमृद्धिदम् ॥ २६ ॥

---

१. 'घोररूपा महारूपा महामोक्षप्रदायिनी' अधि० पा०–ख० ।
२. अपरतः–घ० ।
३. जायान्तिको मनुः–क० ।
४. षडक्षरो महामन्त्रः सर्वत्र सफलप्रदः–ख० ।
५. सिंहासनस्थिताम्–ख० ।
६. समासतः–क० ।
७. सदाकालं तु तज्जाप्यं–ग० ।

[1]शिववामेन संयुक्तं श्रोत्रेन द्वितयं प्रिये ।
ब्रह्मामुखेन संयुक्तो द्विरावृत्तमनुक्रमात् ॥ २७ ॥

नयनेन समायुक्तः शक्रान्विततया गतः ।
हृदायुक्तो मनुरयं सर्वविद्याफलप्रदः ॥ २८ ॥

बीजं शक्तिः कीलकं च आद्यन्तमध्ययोगतः ।
षड्दीर्घबीजादेव[2] षडङ्गानि प्रकल्पयेत् ॥ २९ ॥

कालीं करालवदनां नरमालाविभूषिताम् ।
चतुर्हस्तां त्रिनयनां [3]शशमांसकराम्बुजाम् ॥ ३० ॥

कपालचित्रखट्वाङ्गधारिणीं भीमनादिनीम् ।
करिचर्मपरीधानां शुष्कमांसातिभैरवाम् ॥ ३१ ॥

त्रैलोक्यग्रसमानास्यां जिह्वाद्वितयभीषणाम्[4] ।
[5]निमग्न-वर्तुलाऽऽरक्त-नयन-त्रय-धारिणीम् ॥ ३२ ॥

एवं ध्यात्वा यजेद् देवीं [6]कुलपीठे मनोहरे ।
त्रिकोणं चतुरस्रं तु षट्कोणं नवकोणकम् ॥ ३३ ॥

[7]वृत्तं दलाष्टमथवा चतुरस्रं लिखेत् बुधः ।
त्रिकोणे पूजयेद् देवीं प्रचण्डां[8] चण्डनायिकाम् ॥ ३४ ॥

---

१. शिवो रामेण–घ० ।
२. भाजा–क० ।
३. मसि–ग० ।
४. जिह्वानलविभीषणाम्–ख० ।
५. निमग्नां रक्तनयनां चञ्चलावर्तुलान्विताम्–ख० ।
६. पीठे दल–ख० ।
७. चतुर्दलाष्ट–ख० ।
८. चण्डां च–ख० ।

चण्डकालीं च चण्डालीं प्रचण्डां कालनायिकाम् ।
खट्वां[1] मत्तां[2] क्रमाद् देवि ! पूजयेद् विधिना यथा[3] ॥ ३५ ॥

[4]जयतुण्डां महोग्रीं च भीमां भीमकपालिकाम् ।
अट्टाट्टहासिनीं नित्यां[5] प्रगल्भां घोररूपिणीम् ॥ ३६ ॥

शुष्कभीमां जपेत् देवि ! वसुकोणे परात्मिके ।
अतिकालीं महाकालीं महानित्यां[6] महाभयाम् ॥ ३७ ॥

विचित्रां चित्ररूपां च भीमनादनिनादिनीम् ।
महाघोरां यजेद् देवि ! दलान् दिक्षु विदिक्षु च ॥ ३८ ॥

इन्द्रादयस्ततः पूज्या लक्षमन्त्रं सदा जपेत् ।
[7]इयं सा षोडशी प्रोक्ता त्रिशक्तिरभिधीयते ॥ ३९ ॥

तारं कान्तं युवतिस्थं वारुणं भौतिकं तथा ।
सेचनीये द्वयं कूर्चं फट् स्वाहा च तथा परे ॥ ४० ॥

वेदाद्याब्जवै ( ? ) रोचनीये सर्वपदं तथा ।
बुद्धिभावं तथाऽऽनीय रुद्रवत् परिकीर्तितम् ॥ ४१ ॥

वन्दनीयः शिवः षष्ठः स्वरमर्त्यसमन्वितम् ।
नादबिन्दुयुतां द्वन्द्वं फट् स्वाहा तदनन्तरम् ॥ ४२ ॥

---

१. खर्वां–ख० ।
२. मत्ता-ग० ।
३. ततः–ख० ।
४. उग्रामुग्रां महोग्रां च–ख० ।
५. नित्यं–ख० ।
६. सिद्धिं भयावहाम्–ख० ।
७. 'इयं सा' ( ३९ ) इत्यत आरभ्य 'श्रद्धया जायते' ( ५५ ) इति पर्यन्तं श्लोकाः अन्यत्र नोपलभ्यन्ते ।

सप्तविंश[ाक्षरयुता] महाविद्या प्रकीर्तिता ।
ॐ लज्जां त्रपां मेधां हुं फडित्युग्रतारिका ॥ ४३ ॥
ॐ माया श्रीं हुं अस्त्रान्तमित्येकजटामन्त्रः ।
रकारं प्रथमं रेफचतुर्दशस्वरान्वितम् ॥ ४४ ॥
पुटितान्तेन कर्तव्यं परापरफलप्रदम् ।
अस्त्रहीनमिदं नीलसरस्वत्या विनिर्दिशेत् ॥ ४५ ॥
कामाख्यायास्तु ह्रां ह्रीं ह्रूं त्रिपुरं समुदाहृतम् ।
नारसिंहस्ततः श्वन्तं शुद्धं कुर्यात्तमेव च ॥ ४६ ॥
इं ईङ्कारिणिमाख्याता त्रिबीजं मन्त्रमुत्तमम् ।
तुर्यमष्टोत्तरमथवा ? पुनरुत्तरम् ॥ ४७ ॥
इति भगवति वैष्णवीति पदं ततः ।
सुभगे वह्निजायान्तं मन्त्रमेवं प्रकीर्तयेत् ॥ ४८ ॥
इन्द्रबीजं समुच्चार्य षष्ठस्वरसमन्वितम् ।
वाराही शक्रबीजं च पञ्चस्वरविभूषितम् ॥ ४९ ॥
ॐ तुष्यतु भैरवीपदं चरणाय नमोक्तिकम् ।
वाराह्या इति विख्याता दुर्लभा शत्रुमारणे ॥ ५० ॥
ब्रह्मा वह्निसमारूढः चतुर्थस्वरसंयुतः ।
नादबिन्दुसमायुक्तस्त्रिशूलीकृतविग्रहः ॥ ५१ ॥
कूर्च्छं शिवायुग्मं नामाक्षरसमायुतम् ।
वाग्बीजवह्निवनिता दक्षिणाया द्विविंशतिः ॥ ५२ ॥
ह्रीं स्वरत्रैपुरा केवलाया इहेत्यपि ।
हन्ति पिशाचिनी चैव त्रिभाषां तदादितः ॥ ५३ ॥
उच्छिष्टगणनाथस्य मन्त्रोऽयं सर्वदाकृतः ।
एतासामपि देवीनां जपहोमे च तर्पणे ॥ ५४ ॥

स्वेच्छाविरचितं रत्ने तत्त्वबोधनिरोधने ।
देवतागुरुमन्त्राणामैक्यमावश्यकारिणः ॥ ५५ ॥

श्रद्धया जायते सिद्धिरिह लोकेऽपरत्र च ।
नित्यमध्यात्मयोगे च स्थिरात् सिद्धिमवाप्नुयात् ॥ ५६ ॥

सर्वान् कामानवाप्नोति दिव्यान् भोगान् रसातलान् ।
शृणु देवि ! प्रवक्ष्यामि महाविद्यां महाकलाम् ॥ ५७ ॥

नादबिन्दुसमायुक्तमाद्यबीजमुदाहृतम् ।
वान्तनेत्रेण संयुक्तं पान्तेन सहितं प्रिये ॥ ५८ ॥

नादबिन्दुसमायुक्तं द्वितीयं बीजमुत्तमम् ।
सर्वैश्वर्यप्रदे वह्निजायान्तो मनुरुत्तमः ॥ ५९ ॥

ऋषिः सदाशिवोऽस्यास्तु गायत्री च्छन्द उच्यते ।
देवता शुम्भमथनी सर्वदेवनमस्कृता ॥ ६० ॥

आद्यबीजेन देवेशि ! षड् दीर्घेण षडङ्गकम् ।
आद्यन्तबीजयोगेन बीजशक्तिशरीरकाम् ॥ ६१ ॥

ध्यायेद् देवीं त्रिनयनां फुल्लेन्दीवरलोचनाम् ।
पक्वबिम्बसमानाङ्गीं चारुचन्द्रनिभाननाम् ॥ ६२ ॥

अष्टादशभुजां नित्यां सिंहपृष्ठसमाश्रिताम् ।
कोटिकोटिगणैरर्च्यां पाशाङ्कुशधनुःशरान् ॥ ६३ ॥

शङ्खचक्रगदापद्मघण्टामुद्गरपट्टिशान् ।
चर्मखड्गं महायष्टिं कपालकर्कशान् शरान् ॥ ६४ ॥

अथवा पाणिशतशः प्रहारैरतिसंयुताम् ।
त्रिकोणान्तरषट्कोणे दलाष्टपरिशोभिते ॥ ६५ ॥

पद्मे त्रिकोणमध्ये तु सिद्धर्धिककला लता ।
षट्कोणे पूजयेद् देवीं कालीं चण्डां प्रचण्डिकाम् ॥ ६६ ॥

इच्छापूर्तिमहाभीमां शिवानीं वामवर्त्मना ।
अथाऽष्टदलमध्ये तु ब्राह्याादिमातरः क्रमात् ॥ ६७ ॥

ब्राह्मी माहेश्वरी स्कान्दी वैष्णवी शांकरी तथा ।
नारसिंही तथा चैन्द्री शिवदूती प्रभेदतः ॥ ६८ ॥

यथावर्णयथाशस्त्रधारिण्यो योगिनीगणाः ।
इन्द्रादयस्ततः पूज्या द्वारे नन्दिमहाबलौ ॥ ६९ ॥

पराजयो जयश्चैव पुष्पाञ्जलित्रयैर्यजेत् ।
पञ्चलक्षं जपेन्मन्त्रं तद्धोमादि दशांशतः ॥ ७० ॥

अनया सदृशी विद्या त्रिलोकेषु सुदुर्लभा ।
केवलं त्वत्प्रयत्नेन कथिता कुलसुन्दरि ! ॥ ७१ ॥

क्रमात् विद्या महेशानि ! समस्तायां हि पूजयेत् ।
न किञ्चित् दुर्लभं तस्य त्रिषु लोकेषु विद्यते ॥ ७२ ॥
इह लोके सुखं सर्वं देवीगणमथाऽन्यतः ।
गोप्तव्यं तत् प्रयत्नेन यस्मै कस्मै न विन्यसेत् ॥ ७३ ॥

॥ इति द्वितीये मुण्डमालातन्त्रे षष्ठः पटलः ॥ ६ ॥

समाप्तश्चायं ग्रन्थः



॥ ॐ नमः परदेवतायै ॥

# कामाख्यातन्त्रे

## प्रथमः पटलः

[1]श्रीदेवी उवाच

भगवन् सर्वधर्मज्ञ ! सर्वविद्याप्रिय[2] प्रभो ।
सर्वदानन्दहृदय ! सर्वागमप्रकाशक[3] ॥ १ ॥
[4]श्रुतानि सर्वतन्त्राणि यामलानि[5] च भूरिशः ।
विद्यास्ताः[6] सकला देव! फलानि त्वत्प्रसादतः ॥ २ ॥
सारात् सारतरं तन्त्रं[7] जानासि किं वद प्रभो ! ।
[8]अतीवेदं रहःस्थानं[9] तेनाहं श्रवणोद्यता[10] ॥ ३ ॥

श्रीशिव उवाच

शृणु देवि ! मुदा भद्रे मदीये[11] प्राणवल्लभे ।
योनिरूपा महाविद्या कामाख्या वरदायिनी ॥ ४ ॥

---

१. अंशोऽयं नास्ति–क० ।
२. विद्याधिप–ख० ।
३. विकासक–क०, ख० ।
४. शुभानि–ङ० ।
५. साधनानि–क०, ङ० ।
६. विद्यायाः–क०, विद्यास्था–ख० ।
७. मन्त्रं–ङ० ।
८. अतिप्रियं–ख० ।
९. रहसि स्थानं–ख० ।
१०. श्रवणे श्रिता–ख० ।
११. मदीयं–क० ।

वरदाऽऽनन्ददा नित्या महाविभववर्द्धिनी ।
सर्वेषां जननी सापि सर्वेषां तारिणी मता ॥ ५ ॥
रमणी चैव सर्वेषां स्थूला सूक्ष्मा सदा शुभा ।
तस्यास्तन्त्रं प्रवक्ष्यामि सावधानाऽवधारय ॥ ६ ॥
निखिलासु च विद्यासु ये ये सिध्यन्ति साधकाः ।
यत्र कुत्रापि केनापि कामाख्या [1]फलदायिनी ॥ ७ ॥
कामाख्याविमुखा लोका निन्दिता भुवनत्रये ।
[2]विना कामात्मिकां कापि न दात्री सिद्धिसम्पदाम् ॥ ८ ॥
कामाख्या च सदा धर्मः कामाख्या चार्थ एव च ।
कामाख्या कामसम्पत्तिः कामाख्या मोक्ष एव च ॥ ९ ॥
निर्वाणं [3]सैव देवेशि ! सैव सायुज्यमीरिता[4] ।
सालोक्यं सहरूपं च कामाख्या परमा गतिः ॥ १० ॥
शिवता ब्रह्मता देवि ! विष्णुता चन्द्रतापि च ।
देवत्वं सर्वदेवानां निश्चितं कामरूपिणी ॥ ११ ॥
सर्वासामपि विद्यानां लौकिकं[5] वाक्यमेव च[6] ।
कामाख्याया महादेव्याः स्वरूपं सर्वमेव हि ॥ १२ ॥
पश्य पश्य प्रिये ! सर्वं चिन्तयित्वा हृदि स्वयम् ।
कामाख्यां न विना किञ्चिद् विद्यते भुवनत्रये[7] ॥ १३ ॥

---

१. सिद्धि–ख० ।
२. 'विने' त्यारभ्य चार्थ एव 'चेत्यन्तं' न–ख० ।
३. सर्वं–क० ङ० ।
४. सायुज्यमीरितम्–क० ङ० ।
५. लौकिक्यं–क० ङ० ।
६. अस्ति च–क० ।
७. भुवनेषु च–क० ।

लक्षकोटिमहाविद्यास्तन्त्रादौ[1] परिकीर्तिताः ।
सारात् सारतमा[2] देवि ! सर्वेषां षोडशी मता ॥ १४ ॥

[3]तस्याश्च कारणं देवि ! कामाख्या जगदम्बिका ।
चन्द्रकान्तिर्यथा[4] देवि ! जायते लीयते पुनः ॥ १५ ॥

स्थावराणि चराणीह नित्याऽनित्यानि यानि च ।
सत्यं सत्यं पुनः सत्यं विना तां नैव जायते ॥ १६ ॥

॥ इति श्रीकामाख्यातन्त्रे देवीश्वरसंवादे प्रथमः पटलः ॥ १ ॥

१. स्वतन्त्रादौ–ख० ।
२. सारात् सारम् उमा–क० ।
३. तस्यापि–क० ङ० ।
४. यदा–ख० ।

# अथ द्वितीयः पटलः

श्रीशिव उवाच

मन्त्रोद्धारं प्रवक्ष्यामि शृणु देवि ! परात् परम् ।
यज्ज्ञात्वा साधयेत् सिद्धिं देवानामपि दुर्लभाम्[1] ॥ १ ॥

मन्त्रस्यास्य [2]प्रतापेन मोहयेदखिलं जगत् ।
ब्रह्मादीन् मोहयेद् देवि ! बालकं जननीं[3] यथा ॥ २ ॥

देवदानवगन्धर्वकिन्नरादीन्[4] सुरेश्वरि ! ।
मोहयेत् क्षणमात्रेण प्रजासु नृपतिर्यथा ॥ ३ ॥

मन्त्रस्य पुरतो देवि ! राजानं[5] सचिवादयः ।
अन्ये च मानवाः सर्वे मेषादिजन्तवो यथा ॥ ४ ॥

मोहयेन्नगरं राज्ञः[6] सहस्त्यश्वरथादिकम् ।
ऊर्वश्याद्यास्तु स्ववेश्या राजपत्न्यादिकाः[7] क्षणात् ॥ ५ ॥

स्तम्भनं मारणं देवि ! क्षोभणं जृम्भणं तथा ।
द्रावणं[8] भीषणं चैव विद्वेषोच्चाटने तथा ॥ ६ ॥

आकर्षणं च नारीणां विशेषेण महेश्वरि ! ।
वशीकरणमन्यानि साधयेत् साधकोत्तमः ॥ ७ ॥

---

१. दुर्लभम्—ख० ङ० ।
२. प्रभावेण—ख० ।
३. बालको जननी—क० ख० ।
४. गन्धर्वान्—ख० ।
५. राजानः—क० ।
६. राज्यं—ख० ।
७. कटाक्षणात्—ख० ।
८. दावनं—क० द्रवणं—ख० ।

अग्निः स्तम्भति वायुश्च सूर्यो वारिसमूहकः[1] ।
कटाक्षेणैव[2] सर्वाणि साधकस्य न चान्यथा ॥ ८ ॥

जगज्जयति मन्त्रज्ञः कामदेवो यथा जयी ।
तस्याऽसाध्यं त्रिभुवने न किञ्चित् प्राणवल्लभे ! ॥ ९ ॥

जृम्भणान्तं त्यक्तपाशं यात्रावारणरोहकम्[3] ।
व्यञ्जवर्णयुतं देवि ! नादबिन्दुयुतं पुनः ॥ १० ॥

एतत् तु त्रिगुणीकृत्य कल्पवृक्षमनुं जपेत् ।
एकं वापि [4]द्वयं वापि चतुर्थं वा[5] जपेत् सुधीः ॥ ११ ॥

कामाख्यासाधनं कार्यं सर्वविद्यासु साधकैः ।
अन्यथा सिद्धिहानिः[6] स्याद् विघ्नस्तेषां पदे पदे ॥ १२ ॥

किं शाक्ता वैष्णवाः किं वा किं शैवा गाणपत्यकाः ।
महामायाव्रताः[8] सर्वे तैलयन्त्रे वृषा[9] इव ॥ १३ ॥

अस्याश्च साधनं देवि ! शाक्तानामेव सुन्दरि ! ।
नात्र चक्रविशुद्धिस्तु कालादिशोधनं न च ॥ १४ ॥

---

१. समुद्रकः–ख० ।
२. कटाक्षेण च–ख० ।
३. रोहणम्–ख० ।
४. त्रयं–ख० ।
५. वापि सञ्जपेत्–ख० ।
६. नैव सिद्धिः–ख० ।
७. तस्य–ख० ।
८. युता–ख० ।
९. तृषा–ख० ।

कृते च नरकं याति सर्वं तस्य विनश्यति ।
क्लेशशून्यं परं देवि ! साधनं [1]द्रुतपोषकम् ॥ १५ ॥

श्रीदेवी उवाच

कालीतारामन्त्रदाने चक्रचिन्तां करोति यः ।
[2]का गतिस्तस्य देवेश ! निस्तारो विद्यते न वा ॥ १६ ॥

श्रीशिव उवाच

[3]वयमग्निश्च कालोऽपि ये ये याता महेश्वरि ! ।
किं ब्रूमो देवदेवेशि ! कालिकातारिणीमनुम्[4] ॥ १७ ॥
अज्ञानाद् यदि वा मोहात् कालीतारामनौ प्रिये ।
कृते चक्रादिगणने शूनीविष्ठाकृमिर्भवेत् ॥ १८ ॥
[5]कल्पान्ते च महादेवि ! निस्तारो विद्यते न च ।
अस्याः पूजां प्रवक्ष्यामि त्रैलोक्यसाधनप्रदाम् ॥ १९ ॥
[6]हठाद्धठाच्च देवेशि ! या या सिद्धिश्च जायते ।
प्राप्यते तत्क्षणेनैव नात्र कार्या विचारणा ॥ २० ॥
सिन्दूरमण्डलं कृत्वा त्रिकोणं च समालिखेत् ।
[7]निजबीजानि तन्मध्ये योजयेत् साधकोत्तमः ॥ २१ ॥
चतुरस्रं लिखेद् देवि ! ततो वज्राष्टकं [8]प्रिये ! ।
[9]अष्टदिक्षु यजेत् तां तु न्यासजालं विधाय च ॥ २२ ॥

---

१. कृत—ख० ।
२. का गतिर्विद्यते तस्य—ख० ।
३. नयनग्नि कामवापि माया ज्ञाता—ख० ।
४. महम्—ख० ।
५. कल्पान्ता—ख० ।
६. हठाकुटाच्च—ख० ।
७. लीज—ख० ।
८. लिखेत्—ख० ।
९. चाष्ट—क० ।

अक्षोभ्यश्च ऋषिः प्रोक्तश्छन्दोऽनुष्टुबुदाहृतम् ।
कामाख्या देवता सर्वसिद्धये[1] विनियोजिता[2] ॥ २३ ॥

कराङ्गन्यासकं चैव निजबीजेन कारयेत् ।
षड्दीर्घभाजां ध्यायेत् तु कामाख्यामिष्टदायिनीम् ॥ २४ ॥

[3]रक्तवस्त्रां वरोद्युक्तां सिन्दूरतिलकान्विताम् ।
[4]निष्कलङ्कां सुधाधामवदनामलकोज्ज्वलाम् ॥ २५ ॥

स्वर्णादिमणिमाणिक्यभूषणैर्भूषितां पराम् ।
नानारत्नादिनिर्माणसिंहासनोपरिस्थिताम् ॥ २६ ॥

हास्यवक्त्रां पद्मरागमणिकान्तिमनुत्तमाम् ।
पीनोत्तुङ्गकुचां कृष्णां श्रुतिमूलगतेक्षणाम् ॥ २७ ॥

कटाक्षैश्च महासम्पद्दायिनीं परमेश्वरीम्[5] ।
[6]सर्वाङ्गानिन्दितां नानाविद्याभिः परिवेष्टिताम् ॥ २८ ॥

डाकिनीयोगिनीविद्याधरीभिः परिशोभिताम् ।
कामिनीभिर्युतां नानागन्धाद्यैः परिगन्धिताम् ॥ २९ ॥

ताम्बूलादिकराभिश्च[7] नायिकाभिर्विराजिताम् ।
[8]समस्तसिद्धवर्गाणां प्रणतानां प्रतीक्षणाम् ॥ ३० ॥

---

१. सिद्ध्यर्थं–ख० ।
२. विनियोगः प्रकीर्तितः–ख० ।
३. रक्तवर्णां–ख० ।
४. निष्कलङ्कीं–क० ।
५. हरमोहिनीम्–ख० ।
६. सर्वदा–ख० ।
७. धराभि–ख०, घ० ।
८. कामां तु सिद्धिवर्गानां–ख०, घ० ।

त्रिनेत्रां मोहनकरीं[1] पुष्पचापेषु बिभ्रतीम् ।
भगलिङ्गसमाख्यानां[2] किन्नरीभ्योऽपि शृण्वतीम्[3] ॥ ३१ ॥

वाणी-लक्ष्मी-सुधा-वाक्य-प्रतिवाक्य- समुत्सुकाम् ।
अशेषगुणसम्पन्नां करुणासागरां शिवाम् ॥ ३२ ॥

आवाहयेत् ततो देवीमेवं ध्यात्वा च साधकः ।
पूजयित्वा यथोक्तेन विधानेन [4]हरप्रिये! ॥ ३३ ॥

कुङ्कुमाद्यै रक्तपुष्पैः सुगन्धिकुसुमैस्तथा ।
जवा-यावक-सिन्दूरैः करवीरैर्विशेषतः ॥ ३४ ॥

करवीरेषु देवेशि ! कामाख्या तिष्ठति स्वयम् ।
जवायां च तथा विद्धि मालत्यादिसमीपके ॥ ३५ ॥

करवीरस्य माहात्म्यं कथितुं नैव शक्यते ।
प्रदानात् तु जवायाश्च गाणपत्यमवाप्नुयात् ॥ ३६ ॥

पूजयेदम्बिकां देवीं[5] पञ्चतत्वेन सर्वदा ।
पञ्चतत्त्वं विना पूजामभिचाराय कल्पयेत् ॥ ३७ ॥

पञ्चतत्त्वेन देव्यास्तु प्रसादो जायते क्षणात् ।
पञ्चमेन [6]महादेवि! शिवो भवति साधकः ॥ ३८ ॥

पञ्चतत्त्वसमं नास्ति नास्ति (किञ्चित्) कलौ युगे ।
पञ्चतत्त्वं परं ब्रह्म पञ्चतत्त्वं परा गतिः ॥ ३९ ॥

---

१. संमोहकरां–ख० ।
२. समाख्यानं–क०, ध० ।
३. सुस्थिताम्–ख० ।
४. हरप्रियाम्–क०, घ० ।
५. देवि !–क०, घ० ।
६. साधुः–क०, ख० घ० ।

पञ्चतत्त्वं महादेवि! पञ्चतत्त्वं सदाशिवः।
पञ्चतत्त्वं भुक्तिमुक्ती महायोगः प्रकीर्तितः॥ ४०॥

पञ्चतत्त्वेन देवेशि! महापातककोटयः।
नश्यन्ति तत्क्षणेनैव [1]तूलराशिमिवानलः॥ ४१॥

यत्रैव पञ्च तत्त्वानि तत्र देवी वसेद् ध्रुवम्।
पञ्चतत्त्वविहीने तु विमुखी जगदम्बिका॥ ४२॥

मद्येन मोदते स्वर्गे मांसेन मानवाधिपः।
मत्स्येन भैरवीपुत्रो मुद्रया[2] साधुतां व्रजेत्॥ ४३॥

परेण च महादेवि! सायुज्यं लभते नरः।
भक्तियुक्तो यजेद्[3] देवीं तदा सर्वं प्रजायते॥ ४४॥

स्वयम्भूकुसुमैः शुक्लैः[4] कुण्डगोलोद्भवैः शुभैः।
कुङ्कुमाद्यैरासवेन चार्घ्यं देव्यै[5] निवेदयेत्॥ ४५॥

[6]नानोपहारनैवेद्यैरन्नादिपायसैरपि।
वस्त्रभूषादिभिर्देवीं[7] प्रपूज्यावरणं यजेत्॥ ४६॥

इन्द्रादीन् पूजयेत् तत्र तेषां यन्त्राणि [8]शाङ्करि!।
पार्श्वयोः कमलां वाणीं पूजयेत् साधकोत्तमः॥ ४७॥

---

१. तृण–ख०।
२. मुद्राया धातृतां–क०, ख०, घ०।
३. भवेद्–ङ०।
४. शुद्धैः–ख०।
५. दद्याद् मनोहरम्–ख०।
६. नानोपहारैर्नैवेद्यैर्दुग्धाद्यैः पायसैरपि–ख०।
७. देवि–घ०, ङ०।
८. शाङ्करि!–ख०।

अन्नदा[1] धनदा चैव [2]सुखदा जयदा तथा।
रसदा मोहदा देवि! ऋद्धिदा सिद्धिदापि च ॥ ४८ ॥

वृद्धिदा शुद्धिदा चैव भुक्तिदा मुक्तिदा तथा।
मोक्षदा सुखदा[3] चैव ज्ञानदा कान्तिदा तथा ॥ ४९ ॥

एताः पूज्या महादेव्यः सर्वदा यन्त्रमध्यतः।
डाकिन्याद्यास्तथा पूज्याः सिद्धयो यत्नतः शिवे! ॥ ५० ॥

षडङ्गानि ततो देव्या यजेत् पुष्पाञ्जलीन् क्षिपेत्।
यथाशक्ति जपेन्मन्त्रं शुद्धभावेन साधकः ॥ ५१ ॥

जपं समर्प्य [4]वाद्याद्यैस्तोषयेत् [5]परदेवताम्।
पठेत् स्तोत्रं च कवचं प्रणमेद् विधिनाऽमुना[6] ॥ ५२ ॥

ततश्च हृदये देवीं संयुज्य शेषिकां[7] प्रति।
निर्माल्यं निक्षिपेदैशे त्रिकोणं परिकल्पयेत्[8] ॥ ५३ ॥

निर्माल्यं साधकैः सार्धं गृह्णीयाद् भक्तिभावतः।
विहरेत् पञ्चतत्त्वेन यथाविधि स्वशक्तितः ॥ ५४ ॥

शक्तिमूलं साधनं च शक्तिमूलं जपादिकम्।
शक्तिमूला [9]जपाश्चैव शक्तिमूलं च जीवनम् ॥ ५५ ॥

---

१. क्षेमदा–ख०घ०।
२. पूतना वरदा– ख०, घ०।
३. परमा–ख०।
४. नामाद्यं–ख०।
५. परमेश्वरीम्–ख०।
६. विधिवन्मुदा–ख०, घ०।
७. शेषिकान्–घ०।
८. परिकल्प्ये च–ख०, घ०।
९. गतिश्चैव–क०।

ऐहिकं शक्तिमूलं च परत्र शक्तिमूलकम् ।
शक्तिमूलं तपः सर्वं चतुर्वर्गस्तथा प्रिये ! ॥ ५६ ॥

शक्तिमूलानि सर्वाणि स्थावराणि चराणि च ।
अज्ञात्वा पापिनो देवि ! रौरवं यान्ति निश्चितम् ॥ ५७ ॥

तस्मात् सर्वप्रयत्नेन साधकैश्च शिवाज्ञया ।
शक्त्युच्छिष्टं पीयते[1] हि नान्यथा यान्ति रौरवम् ॥ ५८ ॥

शक्त्यै यद् दीयते देवि ! तत् तु देवार्पितं भवेत् ।
सफलं कर्म तत् सर्वं सत्यं सत्यं कुलेश्वरि ! ॥ ५९ ॥

शक्तिं विना [2]कौलचक्रं करोति कारयेदपि ।
स याति नरकं घोरं निस्तारो न हि विद्यते ॥ ६० ॥

एवं तु पूजयेद् देवीं यं यं चोद्दिश्य[3] साधकः ।
तं तं कामं करे कृत्वा प्रिये ! जयति निश्चितम् ॥ ६१ ॥

पुरश्चरणकाले तु लक्षमेकं[4] जपेत् सुधीः ।
तद्दशांशं हुनेदाज्यैः शर्करामधुपायसैः ॥ ६२ ॥

[5]तर्पयेद्धुदिग्भागैर्जलैश्चन्दनमिश्रितैः ।
गन्धाद्यैः साधकाधीशस्तत्कुशैरभिषेचयेत् ॥ ६३ ॥

अभिषेकदशांशेन भोजयेच्च द्विजोत्तमान् ।
मिष्टान्नैः साधकान् देवि ! देवीभक्तांश्च पञ्चमैः ॥ ६४ ॥

---

१. भक्षितव्यं–ख० घ० ।

२. कलौ–ङ० ।

३. वाञ्छति–ख० ।

४. मन्त्रं–घ० ।

५. देवि ! तद्भागैः–ख०, घ० ।

६. तद्दशै–ङ० ।

एवं पुरस्क्रियां कृत्वा सिद्धो भवति साधकः[1]।
[2]प्रयोगेषु ततो देवि ! योग्यो भवति निश्चितम् ॥ ६५ ॥
एतत् पूजादिकं सर्वं कामाख्याप्रीतिकारकम्।
महाप्रीतिकरी पूजा योनिचक्रे कुलेश्वरि ! ॥ ६६ ॥
योनिपूजा महापूजा तत्समा न हि सिद्धिदा।
तत्र देवीं यजेद् धीमान् सैव देवी न चाऽन्यथा ॥ ६७ ॥
आवाहनादिकर्माणि न तत्र सर्वथा प्रिये ! ।
लेपयेत् तां तु गन्धाद्यैः पूजयेद् विविधेन च ॥ ६८ ॥
महाप्रीतिर्भवेद् देव्याः सिद्धो भवति तत्क्षणात्।
योनिपूजासमा पूजा नास्ति ज्ञाने तु मामके ॥ ६९ ॥
चुम्बनाल्लेहनाद् योनौ [3]कल्पवृक्षमतिक्रमेत्।
दर्शनात् साधकाधीशः स्पर्शनात् सर्वमोहनः ॥ ७० ॥
लिङ्गयोनिसमाख्यानं कामाख्याप्रीतिवर्द्धनम्।
तदेव जीवनं तस्या [4]गिरिजे ! बहु किं वचः ॥ ७१ ॥
तस्मात् सर्वप्रयत्नेन योनिपूजां समाचरेत्।
परस्त्रीयोनिमासाद्य विशेषेण यजेत् सुधीः ॥ ७२ ॥
वेश्यायोनिः परा देवि ! साधनं तत्र कारयेत्।
त्रिरात्रादेव सिध्यन्ति नात्र कार्या विचारणा ॥ ७३ ॥
ऋतुयुक्तं लतामध्ये साधयेद् विधिवन्मुदा।
अचिरात् सिद्धिमाप्नोति देवानामपि दुर्लभाम् ॥ ७४ ॥

---

१. सज्जनः–ङ० ।
२. प्रयोगेण–ख० ।
३. कल्पचुम्बम्–ङ० ।
४. गिरीजे–ङ० ।

सारात् सारतमं देवि ! योनिसाधनमीरितम् ।
विना तत् साधनं देवि ! महाशापः प्रजायते ॥ ७५ ॥

योनिनिन्दां घृणां देवि ! यः करोति नराधमः ।
अचिराद् रौरवं याति देवि ! सत्यं शिवाज्ञया ॥ ७६ ॥

योनिमध्ये वसेद् देवि ! योगिन्याश्चिकुरे स्थिताः ।
तस्मान्न निन्दयेद् योनिं यदीच्छेदात्मनो हितम् ॥ ७७ ॥

योनिनिन्दां प्रकुर्वाणः स वंशेन विनश्यति ।
योनिस्तुतिपरो देवि ! शिवः स्यात् तत्क्षणेन च ॥ ७८ ॥

किं ब्रूमो योनिमाहात्म्यं योनिपूजाफलानि च ।
चाञ्चल्याद् [1]गदितं किञ्चित् क्षन्तव्यं कामरूपिणि ! ॥ ७९ ॥

॥ इति श्रीकामाख्यातन्त्रे देवीश्वरसंवादे
द्वितीयः पटलः ॥ २ ॥

---

१. रचितं–ख० ।

# अथ तृतीयः पटलः

वरमन्त्रं[1] प्रवक्ष्यामि सादरं शृणु पार्वति ! ।
[2]यस्य प्रसादमात्रेण ब्रह्मविष्णुशिवा अपि ॥ १ ॥

इन्द्राद्या देवताः [3]सर्वा भवन्ति कामनायुताः ।
गन्धर्वाः किन्नरा देवि ! तथा विद्याधरादयः ॥ २ ॥

यत्प्रसादं समागत्य[4] स्वकीयविषयान्विता ।
योगिनी-डाकिनी-विद्या-भैरवी-नायिकादिकाः ॥ ३ ॥

कामाख्यामन्त्रमासाद्य[5] भजन्ति योग्यतां[6] पराम् ।
स्वर्गे मर्त्ये च पाताले ये ये सिध्यन्ति साधकाः ॥ ४ ॥

निजबीजत्रयं देवि ! क्रोधद्वयमतः परम् ।
वधूबीजत्रयं[7] चैव कामाख्या च पुनर्वदेत् ॥ ५ ॥

प्रसीदेति पदं चैव पूर्वबीजानि कल्पयेत् ।
ठद्वयान्ते मनुः प्रोक्तः सर्वतन्त्रेषु दुर्लभः ॥ ६ ॥

[ [8]क्रीं क्रीं क्रीं हुं हुं स्त्रीं स्त्रीं कामाख्ये प्रसीद । क्रीं
क्रीं क्रीं हुँ हुँ स्त्रीं स्त्रीं स्वाहा ॥ ]

---

१. मन्त्रान्–ख०, घ० ।
२. येषां–ख०, घ० ।
३. सर्वे भजन्ते काममाश्रिताः–ख०, घ० ।
४. समासाद्य–ख० ।
५. तन्त्र–ख० ।
६. योगतत्पराः–ख० ।
७. द्वयं–ख०, घ० ।
८. कोष्ठकान्तर्गतः मन्त्रोऽन्यत्र नास्ति–क० ।

प्रणवाद्या महादेवि ! त्रैलोक्ये चातिदुर्लभा ।
चतुर्वर्गप्रदा साक्षान्महापातकनाशिनी ॥ ७ ॥

स्मरणादेव मन्त्रस्य सर्वे विघ्नाः समाकुलाः ।
नश्यन्ति दहने दीप्ते[1] पतङ्गा इव पार्वति ! ॥ ८ ॥

मन्त्रग्रहणमात्रेण जीवोन्मुक्तो भवेन्नरः[2] ।
भुक्तिर्मुक्तिः करे तस्य सर्वेषां प्रियतां व्रजेत् ॥ ९ ॥

आवृणोति स्वयं लक्ष्मीर्वदने गीः[3] सदा वसेत् ।
पुत्राः पौत्राः प्रपौत्राश्च भवन्ति चिरजीविनः ॥ १० ॥

पृथिव्यां सर्वपीठेषु कामाख्यादिषु शङ्करि ! ।
लिपिश्चलति तस्यैव नात्र कार्या विचारणा ॥ ११ ॥

तस्य नाम च संस्मृत्य प्रणमन्ति सभाजनाः ।
नाम श्रुत्वा वारमेकं पलायन्ते च हिंसकाः ॥ १२ ॥

यावन्त्यः सिद्धयः सन्ति स्वर्गे मर्त्ये रसातले ।
साधकानां[4] परिचर्यां कुर्वन्ति नात्र संशयः ॥ १३ ॥

तं दृष्ट्वा साधकेन्द्रं च वादी स्खलति दर्शनात्[5] ।
सभायां कोटिसूर्याभं[6] पश्यन्ति सर्वसज्जनाः ॥ १४ ॥

जिह्वाकोटिसहस्रैस्तु वक्त्रकोटिशतैरपि ।
वर्णितुं नैव शक्नोमि मन्त्रमेतन्महेश्वरि ! ॥ १५ ॥

---

१. दीपे–ख० ।
२. हि साधकः–ख० घ० ।
३. गीर्वसेद् ध्रुवम्–ख० ।
४. साधकाज्ञा–ख० घ० ।
५. तत्क्षणात्–ख० घ० ।
६. कोटिसूर्याभां–ख० ।

न्यासपूजादिकं सर्वं पूर्वमुक्तं[१] वरानने ! ।
पुरश्चर्याविधौ किन्तु षट्सहस्रं मनुं जपेत् ॥ १६ ॥

यथाविधि षट्शतानि[२] होमादींश्च समाचरेत् ।
सिद्धो भवति मन्त्रज्ञः प्रयोगेषु ततः क्षमः ॥ १७ ॥

ध्यानं शृणु महादेव्या[३] धनधान्यसुतप्रदम् ।
दारिद्र्यहननं देवि ! क्षणेनैव न चान्यथा ॥ १८ ॥

अतिसुललितवेशां[४] हास्यवक्त्रां त्रिनेत्रां
जितजलदसुकान्तिं पट्टवस्त्रप्रकाशाम् ।
अभयवरकराढ्यां रत्नभूषातिभव्यां
सुरतरुतलपीठे रत्नसिंहासनस्थाम् ॥ १९ ॥

हरिहरविधिवन्द्यां [५]बुद्धिवृद्धिस्वरूपां
मदनशरसमाक्तां कामिनीं कामदात्रीम् ।
निखिलजनविलासोल्लासरूपां[६] भवानीं
कलिकलुषनिहन्त्रीं योनिरूपां भजामि ॥ २० ॥

गुह्याद् गुह्यतरं देवि ! ध्यानं दारिद्र्यनाशकम् ।
गोपितं सर्वतन्त्रेषु तव भावात् प्रकाशितम् ॥ २१ ॥

स्वयम्भूकुसुमेनैव तिलकं परिकल्प्य च ।
तूलिकायां महादेवि ! कुलशक्तिं समाविशेत् ॥ २२ ॥

---

१. पूर्ववच्च–ख०, घ० ।
२. महेशानि!–ख०, घ० ।
३. महादेवि !–ख० ।
४. वर्णां–घ० ।
५. शुद्धबुद्धि–ख०, घ० ।
६. विलासां कायरूपां–ख०, घ० ।

कर्पूरितमुखः[1] स्वादु साधकश्चुम्बयेन्मुदा ।
तस्याधरो यथा भृङ्गो नीरजव्याकुलः[2] प्रिये ! ॥ २३ ॥
[3]दन्तक्षतिवितानां च परमं तत्र कारयेत् ।
आलिङ्गयेन्मदोन्मत्तः[4] सुदृढं कुचमर्दनम् ॥ २४ ॥
नखाघातैर्नितम्बे च रमयेद् रतिपण्डितः ।
पुनः पुनश्चुम्बनं च योनौ कुर्यात् कुलेश्वरि ! ॥ २५ ॥
शुक्रं तु स्तम्भयेद् वीरो योनौ लिङ्गं प्रवेशयेत् ।
आघातैस्तोषयेत् तां तु सन्धानभेदतः प्रिये ! ॥ २६ ॥
ततो लिङ्गे स्थिते योनावाज्ञां तस्याः प्रगृह्य च ।
अष्टोत्तरशतं मन्त्रं जपेद्धोमादिकाङ्क्षया ॥ २७ ॥
दिनत्रयं महाधीरः[5] प्रजपेद् ध्यानतत्परः ।
प्राप्यते मानसं वस्तु नात्र कार्या विचारणा ॥ २८ ॥
[6]ऋतुयुक्तलतां देवि ! निवेश्य तूलिकोपरि ।
करवीरप्रसूनं च तस्या[7] लिङ्गोपरि न्यसेत् ॥ २९ ॥
तद् वीक्ष्य देवदेवेशि ! जपेच्चाऽष्टसहस्रकम् ।
दिनत्रयं ततो देव्याः प्रीतिः स्यादचला[8] प्रिये ! ॥ ३० ॥
धनं विन्दति तस्यैव लक्षसङ्ख्यं न संशयः ।
आनन्दं वर्द्धयेन्नित्यं साधकस्य महात्मनः ॥ ३१ ॥

---

१. कर्पूरपूरितमुखः–घ० । कर्पूरताम्बूलसुख्य मुखः–ख० ।
२. नीरजव्याकुलः शिवे–ख० ।
३. दन्तक्षतिवितानं च परं तत्र च कारयेत्–ख० घ० ।
४. मदोन्मत्तां–क० ।
५. वीरः–ख० ।
६. ततश्च साधिका–ख० । ऋतुयुक्तसतीं–घ० ।
७. तस्य–ख०, घ० ।
८. अर्चनात्–ख० ।

अष्टोत्तरशतं योनिं संचुम्ब्य पूज्य सज्जनः ।
पुनर्लिङ्गे स्थिते योनौ जपेच्चाष्टसहस्रकम् ॥ ३२ ॥

काङ्क्षा[1] पञ्चगुणं वित्तं प्राप्यते सर्वदा सुखी ।
नित्यं तस्य महेशानि ! नायिकासङ्गमो भवेत् ॥ ३३ ॥

वेश्यालतां समानीय कुलचक्रं विधाय च ।
तस्या योनौ यजेद् देवीं हृष्टचित्तेन साधकः ॥ ३४ ॥

भगलिङ्गसमाख्यानं सुस्वरेण समुच्चरेत्[2] ।
[3]योनिं वीक्ष्य जपेन्मन्त्रं सप्तरात्रमतन्द्रितः[4] ॥ ३५ ॥

प्रत्यहं त्रिशतं[5] कृत्वा सोऽपि सिद्धीश्वरः कलौ ।
आज्ञां गृह्णाति धनदस्तस्य देवि ! न संशयः ॥ ३६ ॥

सद्गुरोः स्मरणं कृत्वा योनेश्च साधनं यदि ।
तदा सिद्धिमवाप्नोति चान्यथा हास्यमेव हि ॥ ३७ ॥

॥ इति श्रीकामाख्यातन्त्रे देवीश्वरसंवादे
तृतीयः पटलः ॥ ३ ॥



---

१. काङ्क्ष्या–ख० ।
२. समाचरेत्–ख०, घ० ।
३. योनीं–ङ० ।
४. अतन्त्रितः–ख०, ङ० ।
५. सततं–ङ० ।

# अथ चतुर्थः पटलः

श्रीदेवी उवाच

गुरुतत्त्वं महादेव! विशेषेण वद प्रभो!।
[1]दुर्वहा गुरुता या तु[2] सम्भवेन्मानुषे कथम् ॥ १ ॥

तत्रैव सद्गुरुः को वा भ्रष्टः[3] को वा वद प्रभो!।
दूरीकुरु महादेव! संशयं[4] मे महोत्कटम् ॥ २ ॥

इति देव्या वचः श्रुत्वा प्रोवाच शङ्करः प्रभुः।
[5]शृणु सारतरं ज्ञानं साधूनां हितकारणम् ॥ ३ ॥

गुरुः सदाशिवः प्रोक्त आदिनाथः स उच्यते।
महाकाययुतो देवः सच्चिदानन्दविग्रहः ॥ ४ ॥

सदातनः[6] परं ब्रह्म श्रीधर्मस्त्रिगुणः[7] प्रभुः।
त्वत्प्रसादान्महादेवि! शिवोऽहमजरामरः ॥ ५ ॥
अत एव [8]गुरुर्नैव मनुजः किन्तु कल्पना।
दीक्षायै साधकानां च [9]वृक्षादौ पूजनं यथा ॥ ६ ॥

---

१. एषः श्लोकार्धः नास्ति–घ०।

२. या च–ख०।

३. भ्रष्टं–ङ०।

४. संशयः–ख०, ङ०।

५. ईश्वर उवाच–ख०, अधि०।

६. सनातनं०–घ०।

७. त्रिगुणात्मकः–ख०।

८. गुरुत्वेन–ख०, गुरोर्नैव–ङ०।

९. ब्रह्मादौ–ख०।

मन्त्रदातुः[1] शिरः पद्मे यद् ध्यानं कुरुते गुरोः ।
तद् ध्यानं शिष्यशिरसि चोपदिष्टं न चान्यथा ॥ ७ ॥
अत एव महेशानि ! कुतो हि मानुषो गुरुः ।
[2]मानुषे गुरुता देवि ! कल्पना न तु तथ्यता[3] ॥ ८ ॥
[4]अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
तत् पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ ९ ॥
[5]प्रसिद्धमिति यद् देवि ! तत् पदं दर्शको नरः ।
अत एव नरे देवि ! गुरुता [6]कल्पनैव हि ॥ १० ॥
न तु स्वयं गुरुर्नीच[7] मूर्खता चोभयोरपि ।
अयं गुरुरिति ज्ञानं शिष्योऽयं खलु मे यदा ॥ ११ ॥
दर्शकः[8] पठनस्यैव न स्वयं मानुषो गुरुः ।
मोक्षो न जायते सत्यं मानुषे गुरुभावनात् ॥ १२ ॥
यथा भोक्तरि भोज्यं हि [9]स्वर्णादिपात्रकेण च ।
दीयते तत् तथा देवि ! तस्मै सर्वं समर्पणम् ॥ १३ ॥
यदि चिन्त्यं[10] च तत् पात्रं भग्नं वापि [11]महेश्वरि ! ।
तदा त्यजेत् तु तत् पात्रमन्यपात्रेण[12] तोषयेत् ॥ १४ ॥

---

१. मन्त्रदाता–ख०, ङ० ।
२. च गुरौ–ख० ।
३. तथ्यथा–ङ० ।
४. 'अखण्डमण्डलाकारमि'त्यादिमन्त्रद्वयं पठेत्–ख० अधि० ।
५. प्रसिद्धामिति–ख० ।
६. कल्पन्त्विति–ख० ।
७. नीच–ख० ।
८. दर्शकापटलस्यैव–ङ० ।
९. पूर्णादि–ख० ।
१०. निन्दां–ख० ।
११. कुलेश्वरि–ख० ।
१२. पात्रे च भोजनम्–ख०, पात्रे च भोजयेत्–घ० ।

अतो हि मनुजं लुब्धं[1] दुष्टं शिष्योऽपि सन्त्यजेत् ।
असम्मतस्तु लोकैर्यस्तत्र[2] रुष्टः सदाशिवः ॥ १५ ॥

राजस्वं दीयते राज्ञे प्रजाभिर्मण्डलादिभिः[3] ।
यथा तथैव तस्मै तु शिष्यदानं समर्पणम् ॥ १६ ॥

[4]अत्रैव ग्राहका हिंस्रा मण्डलाद्याः[5]स्मृता यदि ।
अन्यद्वारेण दातव्यं तांस्तान् सन्त्यज्य सर्वदा ॥ १७ ॥

सर्वेषां भुवने सत्यं ज्ञानाय गुरुसेवनम् ।
ज्ञानान्मोक्षमवाप्नोति तस्माज्ज्ञानं परात् परम्[6] ॥ १८ ॥

अतो यो[7] ज्ञानदाने हि न क्षमस्तं त्यजेद् गुरुम् ।
अन्नाकाङ्क्षी निरन्नं च यथा सन्त्यजति प्रिये ! ॥ १९ ॥

[8]ज्ञानत्रयं यदा भाति स गुरुः शिव एव हि ।
अज्ञानिनं वर्जयित्वा शरणं ज्ञानिनो[9] व्रजेत् ॥ २० ॥

ज्ञानाद् धर्मो भवेन्नित्यं ज्ञानादर्थो हि पार्वति ! ।
ज्ञानात् काममवाप्नोति ज्ञानान्मोक्षो हि निर्मलः ॥ २१ ॥

ज्ञानं हि परमं वस्तु ज्ञानात् सारतरं न हि ।
ज्ञानाय भजते देवं ज्ञानं हि तपसः फलम् ॥ २२ ॥

---

१. लब्धं–ङ० ।
२. यो यत्र–ख० ।
३. मानुषादिभिः–ख० ।
४. तत्रैव–ख०, घ० ।
५. शुभे–ख०, घ० ।
६. परावरम्–ख० ।
७. योऽर्थं न दानार्हं लक्षयेत् तं०–ख० ।
८. ज्ञानं यत्र समाभाति–ख० ।
९. सदा–घ० ।

मधुलुब्धो यथा भृङ्गः पुष्पात् पुष्पान्तरं व्रजेत् ।
ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत् ॥ २३ ॥

गुरवो बहवः सन्ति शिष्यवित्तापहारकाः ।
दुर्लभः सद्गुरुर्देवि ! शिष्यसन्तापहारकः ॥ २४ ॥

[1]अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ २५ ॥

इति मत्वा साधकेन्द्रो गुरुतां कल्पयेत् सदा ।
ज्ञानिन्येव शिष्यभक्ताः[2] केवलं [4]निश्चितं शिवे ! ॥ २६ ॥

शान्तोदान्तः कुलीनश्च शुद्धान्तःकरणः सदा ।
पञ्चतत्त्वार्चको यस्तु सद्गुरुः स प्रकीर्त्तितः ॥ २७ ॥

सिद्धोऽसाविति चेत् ख्यातो बहुभिः शिष्यपालकः ।
चमत्कारी दैवशक्त्या सद्गुरुः कथितः प्रिये ! ॥ २८ ॥

अश्रुतं सम्मतं वाक्यं [5]वक्ति साधु मनोहरम् ।
तन्त्रं मन्त्रं समं वक्ति[6] य एव सद्गुरुश्च सः ॥ २९ ॥

सदा यः शिष्यबोधाय[7] हिताय च समाकुलः ।
निग्रहानुग्रहे शक्तः सद्गुरुर्गीयते बुधैः ॥ ३० ॥

परमार्थे सदा दृष्टिः परमार्थं प्रकीर्त्तितम् ।
गुरुपादाम्बुजे भक्तिर्यस्यैव सद्गुरुः स्मृतः[8] ॥ ३१ ॥

---

१. ज्ञानिनि–ख०, घ० ।
२. एषः–ख० ।
३. भक्त्या–ङ० ।
४. कल्पना–ख० ।
५. व्यक्तं—घ० ङ० ।
६. व्यक्ति—ङ० वेत्ति–घ० ।
७. बोधेन—घ० ।
८. मत—घ० ।

इत्यादि गुणसम्पत्तिं दृष्ट्वा देवि ! गुरुं [1]व्रजेत् ।
[2]त्यक्त्वाक्षमं गुरुं शिष्यो नात्र कालविचारणा ॥ ३२ ॥
केवलं शिष्यसम्पत्तिग्राहिको बहुमारकः ।
व्यङ्गितश्च समक्षे यो लोकैर्नित्यो[3] गुरुर्मतः ॥ ३३ ॥
कायेन मनसा वाचा शिष्यं भक्तियुतं यदि ।
दृष्ट्वाऽनुमोदनं नास्ति तस्य[4] तद्वस्तु कामतः ॥ ३४ ॥
कर्मणा गर्हितेनैव हन्ति शिष्यं धनादिकम् ।
शिष्याहितैषिणं लोकं वर्जयेत् तं नराधमम् ॥ ३५ ॥
महाविद्यां समादाय वीराचारं ददाति च[5] ।
स याति नरकं घोरं शिष्योऽपि पतितो ध्रुवम् ॥ ३६ ॥
पशुभावस्थितो यो हि कालिका तारिणी मनुम् ।
तत्त्वाऽऽचारं वदेन्नैव नरकान्न निवर्तते ॥ ३७ ॥
तस्मात् पशुगुरुस्त्याज्यः साधकैः सर्वदा प्रिये ! ।
पशोर्दीक्षाऽधमा प्रोक्ता चतुर्वर्गविघातिनी ॥ ३८ ॥
यदि दैवात् पशोर्विद्यां लभते शक्तिमान्नरः ।
कौलात् तु कौलिकीं प्राप्य तन्मनुं पुनरालभेत् ॥ ३९ ॥
तदा विद्या प्रसन्ना स्यात् फलदा जननी समा[6] ।
अन्यथा विमुखी देवी [7]कुतस्तस्यैव सद्गतिः ॥ ४० ॥

---

१. भजेत्—ख०, मतः—घ० ।
२. त्यक्ताक्षरं—घ० ।
३. निन्द्यो गुरुश्च सः—ख० ।
ज्ञेयो निन्द्यो गुरुश्च सः—घ० ।
४. यस्य देही च कामुकः—ख०, यस्य स पातकी मतः—घ० ।
५. न—ख०, घ० ।
६. सदा०—ङ० ।
७. हता—ख० ।

पूर्वोक्तदोषयुक्तश्च दिव्यो वा वीर एव वा।
तयोरपि न कर्त्तव्या शिष्येण गुरुभावना ॥ ४१ ॥

किन्तु भाव्यं हितैषित्वं गुरुताकल्पनां त्यजेत्।
दिव्ये वीरवरे वापि न दोषोऽत्र शिवाज्ञया ॥ ४२ ॥

श्रीदेवी उवाच

दिव्यतो वीरतो देव! पशुतः किं विशेषकः[1]।
[2]वद मे परमेशान! श्रोतुं मे चित्तमुत्सुकम् ॥ ४३ ॥

श्रीशिव उवाच

शृणु देवि! जगद्वन्द्ये यत् पृष्टं तत्त्वमुत्तमम्।
दिव्यः सर्वमनोहारी मितवादी स्थिरासनः ॥ ४४ ॥

गभीरः श्लिष्टवक्ता च [3]शतावधानकः सुखी[4]।
गुरुपादाम्बुजे भीरुः सर्वत्र भयवर्जितः ॥ ४५ ॥

सर्वदर्शी सर्ववक्ता[5] सर्वदुष्टनिवारकः।
सर्वगुणान्वितो दिव्यः सोऽहं किं [6]बहुवाक्यतः ॥ ४६ ॥

निर्भयोऽभयदो वीरो[7] गुरुभक्तिपरायणः।
वाचालो बलवान् शुद्धः पञ्चतत्त्वे सदा रतिः ॥ ४७ ॥

---

१. विशेषतः—क० ख०।
२. वद तत्—ख० घ०।
'वद ईशान! मे श्रोतुं साम्प्रतं चित्तमुत्सुकम्'—क०।
३. सततं धारकः—क०।
४. सुधीः—ख० घ०।
५. वेत्ता—ख०।
६. ब्रह्म—ख०।
७. वेशदो—ख०।

महोत्साहो महाबुद्धिर्महासाहसिकोऽपि च[1] ।
महाशयः सदा देवि ! साधूनां पालने रतः[2] ॥ ४८ ॥
तमोमयः सदा वीरो विनयेन महोत्सुकः ।
एवं बहुगुणैर्युक्तो वीरो रुद्रः[3] स्वयं प्रिये ! ॥ ४९ ॥
पशून् शृणु महादेवि ! सर्वदेवबहिष्कृतान् ।
अधमान् पापचित्तांश्च पञ्चतत्त्वविनिन्दकान् ॥ ५० ॥
केचिच्छागोपमा देवि ! केचिन्मेषोपमा इह[4] ।
केचित् खरोपमा [5]भ्रष्टाः केचिच्च शूकरोपमाः ॥ ५१ ॥
इत्याद्याः पशवो देवि ! ज्ञेया दुष्टा नराधमाः ।
एषां [6]देव्यार्चनं सिद्धिर्गणनं वा कुतो भवेत् ॥ ५२ ॥
अतो हि पशवश्छेद्या मेद्याः[7] खाद्याश्च वीरकैः ।
वर्जिताः सर्वथा भद्रे ! परमार्थबहिष्कृताः ॥ ५३ ॥

श्रीदेवी उवाच

[8]किञ्चित् तु कथितं नाथ ! सन्देहः प्रचलीकृतः[9] ।
क्षुद्रो हि पशुभावश्च गदितो[10] यत् स्वयं सदा ॥ ५४ ॥
अर्चितं पशुभावेन वरं साधारणं [11]वद ।
देवता नैव जानाति तस्मात् समर्पितं न हि ॥ ५५ ॥

---

१. साहसिकः शुचिः–ख० ।
२. रतिः–ख०, घ० ।
३. रुद्रसमः--ख० ।
४. इव--ङ० ।
५. हष्टा–ख०, भीष्टाः–घ० ।
६. द्रव्यार्चनं–ख० ।
७. श्चैते मेघाः खङ्गेन धीरकैः–घ० ।
८. विचित्रं ख० ।
९. प्रबलीकृनः–ख०, घ० ।
१०. कथितोऽयं न संशयः–ख० ।
११. यदि०–घ० ।

भञ्ज भञ्जाशु सन्देहं करुणासागर ! प्रभो ! ।
सूर्यो यथा समाहन्ति चान्धकारं क्षणादपि ॥ ५६ ॥

श्रीशिव उवाच

भद्रमुक्तं त्वया [1]विज्ञे ! तत्त्वं तु शृणु [2]संस्कृतम् ।
य उक्तः पशुभावो हि कलौ कस्तस्य पालकः ॥ ५७ ॥
पञ्चतत्त्वं न गृह्णाति तत्र निन्दां करोति न ।
[3]शिवेन गदितं यत् तु तत् सत्यमिति भावयन् ॥ ५८ ॥
निन्दायाः पातकं वेत्ति पाशवः स प्रकीर्तितः ।
तस्याचारं वदाम्याशु शृणु संशयनाशकम् ॥ ५९ ॥
हविष्यं भक्षयेन्नित्यं ताम्बूलं न स्पृशेदपि ।
ऋतुस्नातां विना नारीं [4]कामभावेन हि स्पृशेत् ॥ ६० ॥
परस्त्रियं कामभावाद् दृष्ट्वा स्वर्णं समुत्सृजेत् ।
संत्यजेन्मत्स्यमांसानि पाशवो[5] नित्यमेव च ॥ ६१ ॥
गन्धमाल्यानि वस्त्राणि चीराणि प्रभजेन्न च ।
देवालये सदा तिष्ठेदाहारार्थं गृहं व्रजेत् ॥ ६२ ॥
कन्यापुत्रादिवात्सल्यं कुर्यान्नित्यं समाकुलः ।
ऐश्वर्यं प्रार्थयेन्नैव यद्यस्ति तत् तु न त्यजेत् ॥ ६३ ॥
सदा दानं समाकुर्याद् यदि सन्ति धनानि च ।
[6]कार्पद्रोहान् क्षिपेत् सर्वानहङ्कारादिकांस्ततः ॥ ६४ ॥

---

१. भद्रे—ख० ।
२. विस्तरात्—ख०, विस्तृतम्—घ० सुकृतम्—क० ।
३. निन्दासु वारयेल्लोकान् निन्दासु भयविभ्रमः—घ० अधि० पा० ।
४. कामभावैर्न—घ० ।
५. पशुश्च—घ० ।
६. कार्पण्यं नेव कर्तव्यं यदीच्छेदात्मनो हितम्—ख० घ० ।

विशेषेण महादेवि ! क्रोधं संवर्जयेदपि ।
कदाचिद् दीक्षयेन्नैव पाशवः[1] परमेश्वरि ! ॥ ६५ ॥
सत्यं सत्यं पुनः सत्यं नान्यथा वचनं मम ।
अज्ञानाद् यदि वा लोभान्मन्त्रदानं करोति च ॥ ६६ ॥
सत्यं सत्यं महादेवि ! देवीशापः[2] प्रजायते ।
इत्यादि बहुधाऽऽचाराः[3] क्वचिद् ब्रूमः पशोर्मतः[4] ॥ ६७ ॥
तथापि च न मोक्षः स्यात् सिद्धिश्चैव[5] कदाचन ।
यदि चंक्रमणे शक्तः खड्गधारे सदा नरः ॥ ६८ ॥
[6]पश्वाचारं [7]सदा कुर्यात् किन्तु सिद्धिर्न जायते ।
जम्बूद्वीपे कलौ देवि ! ब्राह्मणो हि कदाचन[8] ॥ ६९ ॥
पशुर्न स्यात् पशुर्न स्यात् पशुर्न स्यात् शिवाज्ञया[9] ।
[10]सत्ये क्रमेचतुर्वर्गैः[11] [12]क्षीराज्यमधुपिष्टकैः ॥ ७० ॥
त्रेतायां [13]पूजिता देवी घृतेन सर्वजातिभिः ।
मधुभिः सर्ववर्णैश्च पूजिता द्वापरे[14] युगे ॥ ७१ ॥

---

१. पशुश्च—घ० ।
२. शापं–क०, ङ० ।
३. कति ब्रूमः–क० ख० ग० ।
४. मतिः–ङ० ।
५. सिद्ध–घ० ।
६. पश्वाचारं–ख० ।
७. तदा–ख० घ० ।
८. विशेषतः–ख० घ० ।
९. न संशयः–ङ० ।
१०. क्रमात्–घ० ।
११. वर्णैः–ख० ।
१२. क्षीराम्बु–घ० ।
१३. पूज्यते–ङ० ।
१४. पूजयित्वा–क०, ङ० ।

पूजनीया कलौ देवी केवलैरासवैः [1]शवैः ।
नानुकल्पः कलौ दुर्गे ! नानुकल्पः कलौ युगे ॥ ७२ ॥
नानुकल्पो ब्राह्मणानां शूद्रादीनां[2] कलौ युगे ।
न सन्देहो न सन्देहो न सन्देहः कलौ युगे ॥ ७३ ॥
सत्यमेतत् सत्यमेतत् सत्यमेतच्छिवोदितम् ।
[3]सद्गुरोः शरणं नीत्वा कुलाचारं भजेन्नरः ॥ ७४ ॥
दिव्यत्वं लभते किं वा वीरत्वं लभते शुभे ।
असाध्यं साधयेद् [4]दिव्योऽप्यनायासेन यद् भुवि ॥ ७५ ॥
वीरस्तं क्लेशतो देवि ! प्राप्नोतीह न चान्यथा ।
[5]पशुः कल्पशतैर्वापि साधितुं न च तत्क्षमः ॥ ७६ ॥
[6]लङ्घितुं नैव शक्नोति यथा [7]पङ्गुर्गिरिं क्वचित् ।
अतिगुह्यमिदं प्रोक्तं रहस्यं त्वयि सुन्दरि ! ।
गोपनीयं गोपनीयं गोपनीयं सदाऽनघे ! ॥ ७७ ॥

॥ इति श्रीकामाख्यातन्त्रे देवीश्वरसंवादे
चतुर्थः पटलः ॥ ४ ॥



---

१. आसवैश्च तैः—क०, ख०, घ० ।
२. नानुकल्पः—क०, विशेषेण—घ० ।
३. सद्गुरुः—ख० ।
४. देव्यो—क० ङ० ।
५. वीरस्तत्—ख० घ०, वीरत्वम्—ङ० ।
६. पशुकल्पशतैर्वापि—क०, ङ० ।
७. लक्षितुं—क०, घ० घ० ।
८. पशुः—क० ङ० ।

# अथ पञ्चमः पटलः

श्रीदेवी उवाच[1]

कस्या देव्याः साधकानामेकान्तनिन्दनं महत् ।
न कृत्वा पञ्चतत्त्वैश्च पूजनं परमेश्वर ! ॥ १ ॥

श्रीशिव उवाच

कलौ तु सर्वशाक्तानां ब्राह्मणानां विशेषतः ।
पञ्चतत्त्वविहीनानां निन्दनं परमेश्वरि ! ॥ २ ॥

तन्मध्ये कालिका तारा साधकानां कुलेश्वरि ! ।
मद्यं विना साधनं च महाहास्याय कल्पते ॥ ३ ॥

यथा दीक्षां विना देवि ! साधनं हास्यमेव हि ।
तथानयोः साधकानां ज्ञेयं तत्त्वं विना सदा ॥ ४ ॥

[2]शिलायां सस्यवापैश्च न भवेदङ्कुरो यथा ।
अनावृष्ट्या क्षितौ देवि[3] ! कर्षणं[4] च यथा न हि ॥ ५ ॥

ऋतुं विना स्त्रियां[5] देवि ! कुतोऽपत्यं प्रजायते ।
[6]गमनं च विना क्वापि ग्रामप्राप्तिर्यथा न च ॥ ६ ॥

---

१. 'श्रीदेव्युवाचे'त्यारभ्य परमेश्वर इति नास्ति–क० ।
२. अयमंशो नास्ति–क० ।
३. वापि–घ० ।
४. सस्यञ्च–ख० ।
५. कुतो–क०, ख०, ग० ।
६. गमनञ्चेत्यारभ्य सदा लभेदिति नास्ति–घ० ।

अतो देव्याः साधनेषु पञ्चतत्त्वं सदा लभेत् ।
पञ्चतत्त्वैः [1]साधकेन्द्रावचयेद् विधिना मुदा ॥ ७ ॥
मद्यैर्मांसैस्तथा मत्स्यैर्मुद्राभिर्मैथुनैरपि ।
स्त्रीभिः सार्द्धं सदा साधुरर्चयेज्जगदम्बिकाम् ॥ ८ ॥
अन्यथा च महानिन्दा गीयते पण्डितैः सुरैः ।
कायेन मनसा वाचा तस्मात् तत्त्वपरो भवेत् ॥ ९ ॥
कालिकातारिणीदीक्षां गृहीत्वा मद्यलेहनम्[2] ।
न करोति नरो यस्तु स कलौ पतितो भवेत् ॥ १० ॥
वैदिकीं[3] तान्त्रिकीं सन्ध्यां जपेद्धोमबहिष्कृतः ।
अब्राह्मणः स एवोक्तः स एव [4]हस्तिमूर्खकः ॥ ११ ॥
शूनीमूत्रसमं तस्य तर्पणं यत्[5] पितृष्वपि ।
अतो न तर्पयेत् सोऽपि यदीच्छेदात्मनो हितम्[6] ॥ १२ ॥
कालीतारामनुं प्राप्य वीराचरं करोति न ।
शूद्रत्वं तच्छरीरे तु प्राप्तं तेन न चान्यथा ॥ १३ ॥
क्षत्रियोऽपि तथा देवि ! वैश्यश्चाण्डालतां व्रजेत् ।
शूद्रो हि शूकरत्वं च याति याति न संशयः ॥ १४ ॥
अवश्यं ब्राह्मणो नित्यं राजा वैश्यश्च शूद्रकः ।
पञ्चतत्त्वैर्भजेद् देवीं न कुर्यात् संशयं क्वचित् ॥ १५ ॥
पञ्चतत्त्वैः कलौ देवि ! पूजयेद् यः कुलेश्वरीम् ।
तस्यासाध्यं त्रिभुवने न किञ्चिदपि विद्यते ॥ १६ ॥

---

१. साधकेन्द्रो-ख० घ० ।
२. सेवनम्-घ० ।
३. वैदिकी तान्त्रिकी सन्ध्या जपहोम-क० ।
४. हन्ति-ङ० ।
५. विद्धि पार्वति-ख० ।
६. आत्मनः शुभम्-च० ।

स ब्राह्मणो वैष्णवः स शाक्तो गाणपतोऽपि च ।
सौरः[1] स परमार्थी च स एव पूर्णदीक्षितः ॥ १७ ॥

स एव धार्मिकः साधुर्ज्ञानी चैव महाकृती ।
याज्ञिकः सर्वकर्मार्हः स हि देवो न चान्यथा ॥ १८ ॥

पावनानीह तीर्थानि सर्वेषामिति सम्मतम् ।
तीर्थानां पावनः कौलो गिरिजे बहु किं वचः ॥ १९ ॥

अस्यैव जननी धन्या धन्या हि जनकादयः ।
धन्या [2]जातिकुटुम्बाश्च धन्या आलापिनो जनाः ॥ २० ॥

नृत्यन्ति पितरः सर्वे गाथां गायन्ति ते मुदा ।
अपि कश्चित् कुलेऽस्माकं कुलज्ञानी भविष्यति ॥ २१ ॥

तदा योग्या भविष्यामः कुलीनानां सभातले ।
समागन्तुमिति ज्ञात्वा ह्युत्सुकाः पितरः परे ॥ २२ ॥

कुलाचारस्य माहात्म्यं किं ब्रूमः परमेश्वरि ! ।
पञ्चवक्त्रेण देवेशि ! सनातन्याः[3] फलानि च ॥ २३ ॥

श्रीदेवी उवाच

साधनं वद [4]कौलेश ! साधकानां सुखावहम् ।
दिव्यं रम्यं मनोहारि सर्वाभीष्टफलप्रदम् ॥ २४ ॥

श्रीशिव उवाच

शृणु कामकलाकान्ते ! साधनं तु सुखावहम् ।
यत् कश्चिद् गदितं पूर्वं विस्तृतं तद् वदाम्यहम् ॥ २५ ॥

---

१. शैवः–घ० ।
२. ज्ञाति–घ० ।
३. सनातन्यः–ङ० ।
४. देवेश–घ० ।

अतिसुललितदिव्यं[1] स्थानमालोक्य भक्त्या
हृदि च परमदेवीं संविभावैकचित्तः ।
मधुरकुसुमगन्धैर्व्याप्तमाहृत्य साधु-
स्तदुपरि खलु [2]तिष्ठेत् साधनार्थी कुलज्ञः ॥ २६ ॥

जयवति यतमानः शब्दपुष्पं क्षिपेत् तत्
स खलु करकबीजान्यत्र दुर्गे ततो हि ।
चिरभवबकपुष्पं वर्जयित्वाऽर्चयित्वा
यदि जपति विधिज्ञस्तत्क्षणात् सोऽप्यहं च॥ २७ ॥

उपवनपरियुक्ते[3] शुद्धरम्यालये यो
विधिकृतवरलिङ्गं लेपयित्वा सुगन्धैः ।
विविधकुसुमधूपैर्धूपयित्वा लतां[4]
संप्रति जपति सुभक्त्या त्वत्सुतो जायते सः ॥ २८ ॥

अचलशिखरमध्ये शीघ्रमालम्बयित्वा
कनककुसुमसार्धं शब्दपुष्पं निवेद्य ।
कृतबहुविधिपूजाः स्वं गुरुं भावयित्वा
जपति यदि विलासी विष्णुरेव स्वयं सः ॥ २९ ॥

परिचरति स साधुः सिद्धवर्गः सशङ्कः
परवधूलतानां वक्त्रपद्मोपभोगी ।
जयति भुवनमध्ये [5]निर्जरश्चामरोऽपि[6]
व्रजति तमनु नित्यं सार्वभौमो नृणां सः ॥ ३० ॥

---

१. दुर्गं–घ० ।
२. तिष्ठं–ङ० ।
३. पवनयुक्ते–घ० ।
४. नतां–ङ० ।
५. कोष्ठकान्तर्गतः श्लोकः अधिकः –ख०, घ० ।
६. श्चारमोऽपि–ङ० ।

अभिनवशुभनीरं[1] रक्तपद्मप्रकीर्णं
विविधकमलरम्यं [2]भ्रष्टमीनप्रयुक्तम् ।
अपरविहितवस्तु व्याप्तमीशेश्वरोऽपि[3]
विगतजनसमूहे प्राप्य देवि ! प्रकोणे[4] ॥३१॥

घनजनितसुशोभे विद्युदादीप्तिरम्ये[5]
हृदि च परमदेवीं चिन्तयित्वा सुभक्त्या ।
विधिविहितविधानैः स्नानपूजां समाप्य
प्रतिजपति निशायां गह्वरे ब्रह्म कः[6] स्यात् ॥ ३२ ॥

इह च गुरुवराज्ञां प्राप्य शीर्षे निधाय
त्वयि भजति कुलज्ञो भावभेदात् कुलेशि ! ।
सुरगुरुरिह को वा कोपि चन्द्रो दिनेशो
व्रजति भुवनमध्ये [7]दिक्पतित्वं च कोऽपि ॥ ३३ ॥

इति च परमदेव्याः साधनं यन्मयोक्तं[8]
यदि पठति सुभव्यो गद्गदो [9]वासनाभिः ।
अभिमतफलसिद्धिः [10]सर्वलोकैर्वरेण्यो
भवति भुवनमध्ये पुत्रदारैर्युतोऽपि ॥ ३४ ॥

---

१. मीरं–ङ० ।
२. भव्य–घ० ।
३. जगत्त्वम्–घ० ।
४. प्रकारे–घ० ।
५. स्व–ख० ।
६. ब्रह्मरूपः–ख०, सिद्धकाले–घ० ।
७. आपि घ० ।
८. यत् त्वयोक्तं–घ० ।
९. शृणोति–घ० गद्गदोक्त्या मतिश्च–ख० ।
१०. लोकेषु गण्यः–ख० ।

अचलधनसमूहस्तस्य भोगे वसेत् तु
प्रतिदिनमभिपूजा देवताया गृहे च ।
[1]परिजनगणशक्तिः सर्वदा [2]तत्र तिष्ठेत्
[3]सदसि वसति राज्ञः सादरः सोऽपि [4]वन्द्यः ॥ ३५ ॥

इति श्रीकामाख्यातन्त्रे पार्वतीश्वरसंवादे
पञ्चमः पटलः ॥ ५ ॥



१. मभिव्यक्तिः–घ० ।
२. तस्य–ख० ।
३. शिरसि–घ० ।
४. भव्यः–ख० घ० ।

# अथ षष्ठः पटलः

श्रीदेवी उवाच

श्रुतं रहस्यं देवेश ! कामाख्याया महेश्वर[1] ! ।
[2]महाशत्रुविनाशाय साधनं किं वद प्रभो ! ॥ १ ॥

श्रीशिव उवाच

अतिगुह्यतरं[3] देवि ! तव स्नेहाद् वितन्यते ।
महाधीरः साधकेन्द्रः प्रयोगं तु समाचरेत् ॥ २ ॥
पूजयित्वा महादेवीं पञ्चतत्त्वेन साधयेत्[4] ।
महानन्दमयो भूत्वा साधयेत् साधनं महत् ॥ ३ ॥
स्वमूत्रं तु समादाय कूर्चबीजेन शोधयेत् ।
तर्पयेद् भैरवीं घोरां सकलं[5] वा पिबेत् स्वयम् ॥ ४ ॥
दश दिक्षु महापीठे प्रक्षिपेदाननेऽपि च ।
नग्नो भूत्वा रमेत् तत्र शत्रुनाशो भवेद् ध्रुवम् ॥ ५ ॥
शुक्रशोणितमूत्रेषु वीरो यदि घृणी भवेत् ।
भैरवी कुपिता तस्य सत्यं सत्यं [6]वदाम्यहम् ॥ ६ ॥
दृष्ट्वा श्रुत्वा महेशानि ! निन्दां करोति यो नरः ।
सहसा नरकं याति यावच्चन्द्रदिवाकरौ ॥ ७ ॥

---

१. महेश्वरि–ङ० ।
२. नहि–ङ० ।
३. गुह्यतमं–ख० ।
४. मान्त्रवित्–क० मन्त्रवित्–ख० ।
५. शत्रुनाम्ना–ख० घ० ।
६. न संशयः–ख०, मयोदितम्–घ० ।

वीराचारं महेशानि ! न निन्देन्मनसापि च ।
वीरो [1]यस्तु महादेवि ! स्वेच्छाचारी सदा शुचिः ॥ ८ ॥
मृत्पात्रं तु समादाय साध्यनाम लिखेच्छिवे ! ।
[2]वायुना पूरितं कृत्वा स्वमूत्रं तत्र निक्षिपेत् ॥ ९ ॥
मायाबीजं महेशानि ! अष्टोत्तरशतं जपेत् ।
भैरव्यै दर्शयेद् देवि ! मारणोच्चाटनं भवेत् ॥ १० ॥
स्वमूत्रं च समादाय वामहस्तेन शङ्करि ! ।
[3]शोधित्वा भैरवीगात्रे निःक्षिपेत् साधकोत्तमः ॥ ११ ॥
उन्मादो जायते [4]शत्रोर्म्रियते वा महेश्वरि ! ।
मोहितः क्षोभितो वापि वश्यो वापि भवेद् ध्रुवम् ॥ १२ ॥
मूत्रसाधनमात्रेण सहस्राक्षसमं रिपुम् ।
नाशयेत् साधको वीरो नात्र कार्या विचारणा ॥ १३ ॥

श्रीदेवी उवाच

शुक्रशोणितमूत्राणि शुद्धानीह कथं प्रभो ! ।

श्रीशिव उवाच

शृणु देवि ! रहस्यं च महाज्ञानं वदाम्यहम् ।
शुक्रोऽहं शोणितस्त्वं[5] हि द्वयोरेवाखिलं जगत् ॥ १४ ॥
शुद्धं सर्वशरीरं तु शुक्रशोणितजं ततः ।
एवं भूतशरीरे तु यद् यद् वस्तु प्रजायते ॥ १५ ॥

---

१. यः स महादेवः–क०, घ० ।
२. वामनासापुटितं–ख० ।
३. शोधितं–ख०, साधितं–घ० ।
४. शत्रुः–ख० ङ० ।
५. भैरवी त्वं च–घ० ।

अशुद्धं तु कथं देवि ! पामरो निन्दति ध्रुवम् ।
ब्रह्मज्ञानमिदं देवि ! मया ते गदितं किल ॥ १६ ॥

अतः शुद्धं जगत् सर्वं स्वकायस्थे तु का कथा ।
ब्रह्मज्ञानं विना देवि ! न च मोक्षः प्रजायते ॥ १७ ॥

ब्रह्मज्ञानी शिवः साक्षाद् विष्णुर्ब्रह्मा च पार्वति ! ।
[1]शरीरो दीक्षितः शुद्धो ब्राह्मणो वेदपारगः ।
क्रोडे तस्य वसन्तीह सर्वतीर्थानि निश्चितम् ॥ १८ ॥

॥ इति श्रीकामाख्यातन्त्रे पार्वतीसंवादे
षष्ठः पटलः ॥ ६ ॥



१. स वरो–क०, शबरः–ख०, स वीरो–घ० ।

# अथ सप्तमः पटलः

श्रीदेवी उवाच

महादेव जगद्बन्धो[1] ! करुणासागर ! प्रभो ! ।
[2]पूर्णाभिषेकं कौलानां वद मे सुखमोक्षदम् ॥ १ ॥

श्रीशिव उवाच

शृणु देवि ! महाप्राणवल्लभे ! परमाद्भुतम् ।
पूर्णाभिषेकं सर्वाशापूरकं शिवताप्रदम् ॥ २ ॥

आगत्य सद्गुरुः सिद्धो मन्त्रतन्त्रविशारदः ।
[3]कौलः सर्वजनख्यातश्चाभिषेकविधिं चरेत् ॥ ३ ॥

अतिगुप्तालये शुद्धे रम्ये कौलिकसम्मते ।
वेश्याङ्गनाः समानीय तत्त्वानि च सुयत्नतः ॥ ४ ॥

[4]विशिष्टकौलिकान् भक्त्या तत्रैव सन्निवेशयेत् ।
अर्चयेदभिषेकार्थं[5] गुरुं[6] वस्त्रादिभूषणैः ॥ ५ ॥

प्रणमेद् विधिवद् भक्त्या तोषयेत् स्तुतिवाक्यतः ।
प्रार्थयेच्छुद्धभावेन कुलधर्मं वदेति च ॥ ६ ॥

कृतार्थं कुरु मां नाथ श्रीगुरो ! करुणानिधे ।
अभिषिञ्च [7]साधकञ्च सेवार्थं शरणं गतम् ॥ ७ ॥

---

१. देवदेव– ख० ग० ।

२. पूर्णाभिषेकमित्यरभ्य परमाद्भुतमिति–नास्ति–ख० घ० ।

३. कौलं सर्वजनख्यातं–क० घ, का देवाहं–ग० ।

४. विशिष्य–घ० ।

५. अभिषेक्तारं–क०, ख०, घ० ।

६. गुरुवद् भावितात्मना–ख० ।

७. साधकैश्च तवाहं शरणं गतः–क० ख० घ० ।

[1]ततोऽभिषिच्य १ तत्त्वानि शोधयेच्छुक्तिमान् मुदा ।
स्थापयित्वा पुरः कुम्भं मन्त्रमुद्रादिभिः[2] प्रिये ! ॥ ८ ॥

वितानैर्धूपदीपानां कृत्वा चामोदितं स्थलम् ।
नानापुष्पैस्तथा गन्धैः सर्वोपकरणैर्यजेत् ॥ ९ ॥

समाप्य महतीं पूजां तत्त्वानि[3] सन्निवेद्य च ।
आदौ स्त्रीभ्यः समर्प्यैव प्रसादाल्पं भजेत् ततः ॥ १० ॥

शुभचक्रं विनिर्माय आगमोक्तविधानतः ।
[4]अभिषेक्ता साधकांश्च पाययेत् तु स्वयं पिबेत् ॥ ११ ॥

भुञ्जीरन् मत्स्यमांसाद्यैश्चर्व्यचोष्यादिभिश्च ते[5] ।
रमेरन् परमानन्दैर्वेश्यायां[6] च यथासुखम् ॥ १२ ॥

वदेयुः कर्मकर्तुश्च सिद्धिर्भवतु निश्चला ।
अभिषेचनकर्माशु निर्विघ्नं चेति निश्चितम् ॥ १३ ॥

चक्रालयान्निःसरेन्न जन[7] एकोऽपि शङ्करि ! ।
प्रातःकृत्यादिकर्माणि कुर्यात् [8]तत्रैव [9]साधकः ॥ १४ ॥

दिनानि त्रीणि संव्याप्य भक्त्या तांस्तु समर्चयेत् ।
शिष्यश्चादौ दिवारात्रमभिषिक्तो भवेत् ततः ॥ १५ ॥

---

१. अतोऽभिषेक्ता–घ० ।
२. यन्त्रादिभिः–ख० ।
३. आत्मानं–ख० ।
४. अभिषिक्तवा–ङ० ।
५. तैः–क० ङ० ।
६. वश्यायां–ख०, ङ० ।
७. जनः कोऽपि–घ० ।
८. तत्रापि–ग० ।
९. साधकाः–ग०, घ० ।

अनुष्ठानविधिं वक्ष्ये सादरं शृणु पार्वति ! ।
न प्रकाण्डं न हि क्षुद्रं[1] प्रमाणं घटमाहरेत् ॥ १६ ॥

ताम्रेण निर्मितं वापि स्वर्णेन निर्मितं च वा ।
[2]प्रवालं हीरकं मुक्तां स्वर्णरौप्ये तथैव च ॥ १७ ॥

नानालङ्कारवस्त्राणि नानाद्रव्याणि [3]भूरिशः ।
कस्तूरीकुङ्कुमादीनि नानागन्धानि चाहरेत् ॥ १८ ॥

नानापुष्पाणि माल्यानि पञ्चतत्त्वानि यत्नतः ।
विहितान् धूपदीपांश्च घृतेन[4] परमेश्वरि ! ॥ १९ ॥

ततः शिष्यं समानीय गुरुः शुद्धालये प्रिये ! ।
वेश्याभिः साधकैः सार्धं पूजनं च समाचरेत् ॥ २० ॥

पटलोक्तविधानेन भक्तितः परिपूजयेत् ।
पूजां समाप्य देव्यास्तु स्तवैस्तु प्रणमेन्मुदा ॥ २१ ॥

ततो हि शिवशक्तिभ्यो गन्धमाल्यानि दापयेत् ।
आसनं वस्त्रभूषां च प्रत्येकेन कुलेश्वरि ! ॥ २२ ॥

ततः शङ्खादिवाद्यैश्च मङ्गलाचरणैः परैः ।
घटस्थापनकं कुर्यात् क्रमं तत्र [5]शृणु प्रिये ! ॥ २३ ॥

[6]कामबीजेन संप्रोक्ष्य वाग्भवेनैव शोधयेत् ।
शक्त्याकलशमारोप्य मायया पूरयेज्जलैः ॥ २४ ॥

---

१. स्थूलं—ख० ।
२. प्रवालहीरकस्वर्णमुक्तारूप्यभवेन च—घ० ।
३. भूषितः—ख०, विभूषितः—ग० ।
४. घृताक्तान्—क०, ख०, घ० ।
५. वदामि ते—ख० ।
६. कामराजेन—ख० ।

[1]प्रवालादीन् पञ्चरत्नान् विन्यसेत् तत्र यत्नतः ।
आवाहयेच्च तीर्थानि मन्त्रेणानेन देशिकः ॥ २५ ॥

ॐ गङ्गाद्याः सरितः सर्वाः समुद्राश्च सरांसि च ।
सर्वे समुद्राः सरितः सरांसि जलदा नदाः ॥ २६ ॥

[2]ह्रदाः प्रस्रवणाः पुण्याः स्वर्गपातालभूगताः ।
सर्वतीर्थानि पुण्यानि घटे कुर्वन्तु सन्निधिम् ॥ २७ ॥

रमाबीजेन जप्तेन पल्लवं प्रतिपादयेत् ।
कूर्चेन फलदानं स्याद् [3]गन्धवस्त्रहृदात्मना ॥ २८ ॥

ललनयैव सिन्दूरं पुष्पं दद्यात् तु कामतः ।
मूलेन [4]दूर्वां प्रणवैः कुर्यादभ्युक्षणं ततः[5] ॥ २९ ॥

हुं फट् स्वाहेति मन्त्रेण कुर्याद् [6]दर्भैश्च ताडनम् ।
विचिन्त्य मूलपीठं तु तत्र [7]संयोज्य पूजयेत् ॥ ३० ॥

स्वतन्त्रोक्तविधानेन प्रार्थयेदमुना [8]बुधैः ।
तद्घटे हस्तमारोप्य शिष्यं पश्यन् गुरुश्च सः ॥ ३१ ॥

[9]उत्तिष्ठ ब्रह्मकलश ! देवताभीष्टदायक ! ।
सर्वतीर्थाम्बुसंपूर्ण ! [10]पूरयास्य मनोरथम् ॥ ३२ ॥

---

१. प्रवालादिपञ्चरत्नं–क० प्रवालादीनि पञ्चानि–ख०, घ० ।
२. नदाः–ग० ।
३. वधूबीजे स्थिराकृतिः–ख० गन्धवस्त्रो हृदात्मना–घ० ।
४. सर्वां–ख० पूजां–ग० ।
५. ततः परम्–घ० ।
६. कुम्भेन–ख० ।
७. सम्पूर्य–ख० ।
८. बुधः–क०, ततः–ख० ।
९. उत्तिष्ठम्–ङ० ।
१०. पूरयाऽस्मन्मनोरथम्–क०, पूरयान्मन्मनोरथम्–ङ० ।

अभिषिञ्चेत् गुरुः शिष्यं [1]ततो मन्त्रैश्च पार्वति !।
मङ्गलैर्निखिलैर्द्रव्यैः[2] साधकैः शक्तिभिः सह ॥ ३३ ॥

पल्लवैराम्रकाद्यैश्च [3]नतिमच्छिष्यमेव च।
आनन्दैः परमेशानि ! भक्तानां हितकारिणि ॥ ३४ ॥

अस्याभिषेकमन्त्रस्य दक्षिणामूर्तिः ऋषिः, अनुष्टुप् छन्दः, शक्तिर्देवता, अमुकस्य सर्वसङ्कल्पसिद्धये विनियोगः।

ॐ राजराजेश्वरीशक्तिर्भैरवी कालभैरवी[4]
श्मशानभैरवी देवी त्रिपुरानन्दभैरवी ॥ ३५ ॥

[5]त्रिकुटा त्रिपुरा देवी तथा त्रिपुरसुन्दरी।
त्रिपुरेशी महादेवी तथा त्रिपुरमालिका ॥ ३६ ॥

त्रिपुरानन्दिनी देवी तथैव त्रिपुरातनी।
एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥ ३७ ॥

छिन्नमस्ता महादेवी तथैवैकजटेश्वरी।
[6]तारा च जयदुर्गा च शूलिनी भुवनेश्वरी ॥ ३८ ॥

त्वरिताख्या महादेवी तथैव[7] च त्रिखण्डिका।
नित्या च नित्यरूपा च वज्रप्रस्तारिणी तथा ॥ ३९ ॥

---

१. यद्वा देशिकसत्तमः–ख०।
२. श्चैव–क०, सर्वैः—ख०, घ०।
३. नतिसं–क०, लतां संवीक्ष्य एष च–ख०, नतिस्तं–घ०।
४. रुद्र–ख०।
५. त्रिजटा–ख०।
६. महाविद्या–ख०।
७. परा तारा जया दुर्गा–क०, ख०।
८. तथा वश्या त्रिकण्टिका–क०, त्रिकण्टकी–ख०।

एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ।
अश्वारूढा महेशानि ! तथा महिषमर्दिनी ॥ ४० ॥

दुर्गा च नवदुर्गा च श्रीदुर्गा भगमालिनी ।
तथा भगन्दरी देवी भगक्लिन्ना तथा परा ॥ ४१ ॥

सर्वचक्रेश्वरी देवी तथा नीलसरस्वती ।
सर्वसिद्धिकरी देवी सिद्धगन्धर्वसेविता ॥ ४२ ॥

उग्रतारा महादेवी तथा च भद्रकालिका ।
एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥ ४३ ॥

क्षेमङ्करी महामाया चानिरुद्धसरस्वती ।
मातङ्गिनी चान्नपूर्णा राजराजेश्वरी तथा ॥ ४४ ॥

एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ।
उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका ॥ ४५ ॥

चण्डा चण्डवती चैव चण्डरूपाऽतिचण्डिका ।
एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥ ४६ ॥

उग्रदंष्ट्रा महादंष्ट्रा शुभदंष्ट्रा [1]कपालिनी ।
भीमनेत्रा विशालाक्षी मङ्गला विजया जया ॥ ४७ ॥

एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ।
मङ्गला नन्दिनी भद्रा लक्ष्मीः कीर्तिर्यशस्विनी ॥ ४८ ॥

पुष्टिर्मेधा शिवा साध्वी[2] यशा शोभा जया धृतिः ।
श्रीनन्दा च सुनन्दा च नन्दिनी[3] नन्दपूजिता ॥ ४९ ॥

---

१. करालिनी--ख ।
२. माया--ख० ।
३. मन्दिनी--ङ० ।

एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन बारिणा।
विजया मङ्गला भद्रा धृतिः शान्तिः शिवा क्षमा[1] ॥ ५० ॥

सिद्धिस्तुष्टिरुमा पुष्टिः श्री ऋद्धिश्च[2] रतिस्तथा।
दीप्ता[3] कान्तिर्यशोलक्ष्मीरीश्वरी बुद्धिरेव[4] च ॥ ५१ ॥

चक्री जयावती ब्राह्मी जयन्ती चाऽपराजिता।
अजिता मानवी श्वेता दितिश्चाऽदितिरेव च ॥ ५२ ॥

माया चैव महामाया मोहिनी क्षोभिणी तथा।
कमला विमला गौरी शरण्यम्बुधिसुन्दरी ॥ ५३ ॥

दुर्गा क्रियाऽरुन्धती च घण्टाकर्णा कपालिनी।
रौद्री काली च मायूरी[5] त्रिनेत्रा चाऽपराजिता ॥ ५४ ॥

सुरूपा[6] बहुरूपा च तथैव विग्रहात्मिका।
चर्चिका[7] चापरा ज्ञेया तथैव सुरपूजिता ॥ ५५ ॥

वैवस्वती च कौमारी तथा माहेश्वरी परा[8]।
वैष्णवी च महालक्ष्मीः कार्तिकी कौषिकी तथा ॥ ५६ ॥

शिवदूती च चामुण्डा मुण्डमाला विभूषिता।
एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥ ५७ ॥

---

१. ऽक्षया–ख०।
२. श्रद्धा चैव–ख०।
३. दीप्तिः–ख०।
४. वृद्धिरेव–क०, ख०।
५. कौमारी–क०।
६. स्वरूपा–ख०।
७. चण्डिका–ख०।
८. परा–ख०।

इन्द्रोऽग्निश्च यमश्चैव निर्ऋतिर्वरुणस्तथा ।
पवनो धनदेशानौ ब्रह्माऽनन्तो[1] दिगीश्वराः ॥ ५८ ॥
एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ।
संवत्सरश्चायनौ च मासाः पक्षौ दिनानि च ॥ ५९ ॥
तिथयश्चाऽभिषिञ्चन्तु मन्त्रपूतेन वारिणा ।
रविः सोमः कुजः सौम्यो गुरुः शुक्रः शनैश्चरः ।
राहुः केतुश्च सततमभिषिञ्चन्तु ते ग्रहाः ॥ ६० ॥
नक्षत्रं करणं योगोऽमृतं सिद्धिस्ततः परम् ।
दग्धं पापं तथा भद्रा योगा वाराः क्षणास्तथा ॥ ६१ ॥
वारवेला कालवेला दण्डराश्यादयस्तथा ।
अभिषिञ्चन्तु सततं मन्त्रपूतेन वारिणा ॥ ६२ ॥
असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तसंज्ञकः ।
कपाली भीषणाख्यश्च संहारोऽष्टौ च भैरवाः ॥ ६३ ॥
अभिषिञ्चन्तु सततं मन्त्रपूतेन वारिणा ।
डाकिनीपुत्रकाश्चैव राकिणीपुत्रकास्तथा ॥ ६४ ॥
लाकिनीपुत्रकाश्चान्ये काकिनीपुत्रकाः परे ।
शाकिनीपुत्रका भूयो हाकिनीपुत्रकास्तथा ॥ ६५ ॥
ततश्च दक्षिणीपुत्रा देवीपुत्रास्ततः परम् ।
मातॄणां च तथा पुत्रा ऊर्ध्वमुख्याः सुताश्च वै[2] ॥ ६६ ॥
अधोमुख्या [3]सुताश्चैव उन्मुख्याश्च सुताः परे ।
अभिषिञ्चन्तु ते सर्वे मन्त्रपूतेन वारिणा ॥ ६७ ॥

---

१. नन्दी–ख० ।

२. ये–ख० ।

३. कालमुख्याः पुत्राश्च ये–ख० ।

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
एते त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥ ६८ ॥
पुरुषः प्रकृतिश्चैव विकाराश्चैव षोडश ।
आत्माऽन्तरात्मा परमज्ञानात्मानः प्रकीर्तिताः ॥ ६९ ॥
आत्मनश्च[1] गुणाश्चैव स्थूलाः सूक्ष्माश्च येऽपरे[2] ।
एते त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥ ७० ॥
वेदादिबीजं हुंबीजं स्त्रीबीजं मीनकेतनम् ।
शक्तिबीजं रमाबीजं मायाबीजं सुधाकरम् ॥ ७१ ॥
चिन्तामणिर्महाबीजं नारसिंहं च शाङ्करम् ।
मार्तण्डभैरवं दौर्गं बीजं श्रीपुरुषोत्तमम् ॥ ७२ ॥
गाणपत्यं च वाराहं कालीबीजं भयापहम् ।
एतानि चाभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥ ७३ ॥
गङ्गा गोदावरी रेवा यमुना च सरस्वती ।
आत्रेयी भारती चैव सरयूर्गण्डकी तथा ॥ ७४ ॥
करतोया चन्द्रभागा श्वेतगङ्गा च कौशिकी ।
भोगवती च पाताले स्वर्गे मन्दाकिनी तथा ॥ ७५ ॥
एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ।
भैरवो भीमरूपश्च [3]शोणो घर्घर एव च ॥ ७६ ॥
सिन्धुश्चैव ह्रदश्चैव तथा पातालसम्भवाः ।
एते त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥ ७७ ॥

---

१. आत्मानश्च–क० ।
२. परे–क० ख० ।
३. घोणः–ख० ।

यानि कानि च तीर्थानि पुण्यान्यायतनानि च ।
तानि त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥ ७८ ॥
मतिश्च वल्लभा वह्नेर्वषट्कूर्चमतः परम् ।
वौषट्कारं तु[1] फट्कारमभिषिञ्चन्तु सर्वदा ॥ ७९ ॥
जम्बुद्वीपादयो द्वीपाः सागरा लवणादयः ।
अनन्ताद्यास्तथा नागाः सर्पा ये तक्षकादयः ॥ ८० ॥
एते त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ।
नश्यन्तु प्रेतकूष्माण्डा राक्षसा दानवाश्च ये ॥ ८१ ॥
पिशाचा गुह्यका भूता अभिषेकेण ताडिताः ।
अलक्ष्मीः कालकर्णी[2] च पापानि च महान्ति च ॥ ८२ ॥
नश्यन्तु चाभिषेकेण ताराबीजेन ताडिताः ।
रोगाः शोकाश्च दारिद्र्यं दौर्बल्यं चित्तविक्रिया ॥ ८३ ॥
नश्यन्तु चाभिषेकेण वाग्बीजेनैव[3] ताडिताः ।
तेजोह्रासो बलह्रासो बुद्धिह्रासस्तथैव च ॥ ८४ ॥
नश्यन्तु चाभिषेकेण शक्तिबीजेन ताडिताः ।
विषाऽपमृत्युरोगाश्च डाकिन्यादिभयं तथा ॥ ८५ ॥
घोराभिचाराः क्रूराश्च ग्रहा नागास्तथा परे ।
नश्यन्तु चाभिषेकेण कालीबीजेन ताडिताः ॥ ८६ ॥
नश्यन्तु विपदः सर्वाः सम्पदः सन्तु सुस्थिराः ।
अभिषेकेण शाक्तेन पूर्णाः सन्तु मनोरथाः ॥ ८७ ॥

---

१. हुं–ख० ।
२. लक्ष्मी–ख० ।
३. कालीबीजेन–ख० ।

ततो गुरुः प्राप्तमन्त्रं दीक्षयेत् पुनरेव हि ।
तदा सिद्धिर्भवेत् सत्यं नान्यथा वचनं मम ॥ ८८ ॥
[1]ततो देवीं[2] गुरुं चैव प्रणमेद् बहुधा[3] मुदा ।
दक्षिणां गुरवे दद्यात् स्वर्णकाञ्चनमानतः ॥ ८९ ॥
नानावस्त्रैरलङ्कारैर्गन्धमाल्यादिभिस्तथा ।
तोषयेत् [4]स्तुतिवाक्यैश्च प्रणमेत् पुनरेव हि ॥ ९० ॥
कायेन मनसा वाचा गुरुः कुर्यात् तथाशिषः ।
वात्सल्यैर्विविधैः शिष्यं ग्राहयेत् तत्त्वमुत्तमम् ॥ ९१ ॥
गुरुश्च भैरवैः सार्धं शक्तिभिर्विहरेन्मुदा ।
भैरवाः शक्तयश्चापि कुर्युराशीः सुयत्नतः ॥ ९२ ॥
तथा त्रिदिवसं व्याप्य भोजयेद् भैरवान् बुधः ।
अष्टमे दिवसे शिष्यं[5] पुनः कुर्यात् तु सेचनम् ॥ ९३ ॥
ताम्रपात्रोदकैर्देवि ! विद्यां[6] राज्ञां जपन् सुधीः ।
कुन्दुकांश्च[7] तथा सप्तसम्पत्तिहेतवे प्रिये ! ॥ ९४ ॥
शक्तिभ्यो भैरवेभ्योऽपि ततो वस्त्रादिभूषणम् ।
दद्यात् प्रयत्नतः साधुर्विद्धि[8] देवि ! समापनम् ॥ ९५ ॥

---

१. ॐ राजराजेश्वरी शक्तिरि' त्यादि 'अभिषेकेण मात्रेण पूर्णाः सन्तु मनोरथाः ।' इत्यन्ता अभिषेकमन्त्रा निरुत्तरतन्त्रस्थितत्वादत्र न लिखिताः–घ० ।
२. ततस्तु श्रीगुरुं–क०, शिष्यो गुरुं देवीं–ख०, घ० ।
३. बहुयत्नतः–ख०, घ० ।
४. गुरु–ख० ।
५. शिष्यः–ख० घ० ।
६. विद्यारत्नं–घ० ।
७. कुल्लुकांश्च–क०, ख०- ग० ।
८. वृद्धि–घ० ।

श्रीदेवी उवाच

श्रुतं रहस्यं देवेश ! चाभिषेचनकर्मणि[1] ।
गुरुः [2]कौलाधिकारी स्यादत्र तन्मे वद प्रभो ! ॥ ९६ ॥

श्रीशिव उवाच

महाज्ञानी कौलिकेन्द्रः शुद्धो गुरुपरायणः ।
निग्रहानुग्रहे शक्तः शिष्यपालनतत्परः ॥ ९७ ॥
पुत्रदारादिभिर्युक्तः[3] [4]सज्जनस्तु प्रपूजितः ।
श्रद्धावानागमे[5] नित्यं सोऽधिकर्ता न चान्यथा[6] ॥ ९८ ॥
अन्धं खञ्जं तथा रुग्णं स्वल्पज्ञानयुतं पुनः ।
सामान्यकौलं वरदे ! वर्जयेन्मतिमान् सदा ॥ ९९ ॥
उदासीनं विशेषेण वर्जयेत् सिद्धिकामुकः[7] ।
उदासीनमुखाद् दीक्षा वन्ध्या नारी यथा [8]प्रिये ! ॥१००॥
अज्ञानाद् यदि वा मोहादुदासीनं तु पामरः ।
अभिषिक्तो भवेद् देवि ! विघ्नस्तस्य पदे पदे ॥१०१॥
किं तस्य जपपूजाभिः किं ध्यानैः किं च भक्तितः ।
सर्वं हि विफलं तस्य नरकं याति[9] चान्तिमे ॥१०२॥

---

१. कर्मणः–ख०, घ० ।
२. को वाऽधिकारी–घ० ।
३. युक्तैः सज्जनैश्च–व ।
४. सज्जनैश्च प्रयत्नतः–ख० ।
५. गमने क०, शुद्धबालागमे नित्यम्–ख०, अपि मे–घ० ।
६. च नान्यथा–क०, नान्यकः–घ० ।
७. कारकः–क० ।
८. रतिर्यथा–क०, तथा प्रिये !–घ० ।
९. यान्ति–ङ० ।

कल्पकोटिशतं[1] देवि ! भुङ्क्ते स नरकं सदा ।
ततो हि बहुजन्मभ्यो देवीमन्त्रमवाप्नुयात् ॥१०३॥

ततो[2] हि [3]विहितं शुद्धं गृहस्थं गुरुमालभेत् ।
अभिषेचनकर्माणि पुनः कुर्यात् प्रयत्नतः ॥१०४॥

सफलं हि सदा[4] कर्म सर्वं तस्य भवेद् ध्रुवम् ।
विद्यापि जननी तुल्या पातितं सततं प्रिये ! ॥१०५॥

यथा पशुं परित्यज्य कौलिकं गुरुमालभेत्[5] ।
उदासीनं परित्यज्य तथाऽभिषेचनं शतम्[6] ॥१०६॥

अभिषिक्तः शिवः साक्षादभिषिक्तो हि दीक्षितः ।
स एव ब्राह्मणो धन्यो देवीदेवपरायणः ॥१०७॥

तस्यैव सफलं जन्म धरण्यां शृणु पार्वति ! ।
तस्यैव सफलं कर्म तस्यैव सफलं धनम् ॥१०८॥

तस्यैव सफलो धर्मः कामश्च सफलो[7] मनुः ।
दीक्षा हि सफला देवि ! क्रिया च सफला तनुः ॥१०९॥

सर्वं हि सफलं तस्य गिरिजे ! बहु किं वचः ।
यत्र देशे वसेत् साधुः सोऽपि [8]वाराणसीसमः ॥११०॥

---

१. शतैः–ङ० ।
२. अतो–क० ।
३. तं महाशुद्धं–घ० ।
४. तदा–घ० ।
५. मा भजेत्–ध० ।
६. मतम्–ख०, घ० ।
७. फलदो–घ० ।
८. मतः–क०, घ० ।

तस्य क्रोडे वसन्तीह सर्वतीर्थानि निश्चितम् ।
सत्यं सत्यं महामाये ! पुनः सत्यं मयोदितम् ॥१११॥

उक्तानि यानि यानीह सेचनानि च पार्वति ! ।
सर्वतन्त्रेषु तान्यस्य कलां नार्हन्ति षोडशीम् ॥११२॥

योग्यं गुरुं तथा शिष्यं विनैतत् पटलं न हि ।
जायते देवदेवेशि ! सत्यं सत्यं मयोदितम् ॥११३॥

इदं तु सेचनं देवि ! त्रिषु लोकेषु दुर्लभम् ।
गणेशः पात्रमत्रैव कार्त्तिकेयोऽपि पार्वति ! ॥११४॥

मम तुल्यो ब्रह्मतुल्यो विष्णुतुल्योऽत्र[1] भाजनम् ।
पञ्चवक्त्रैश्च शक्तो न[2] वर्णितुं परमेश्वरि ! ॥११५॥

इति ते कथितं गुप्तं सेचनं परमं महत् ।
गोपनीयं गोपनीयं गोपनीयं प्रयत्नतः ॥११६॥

यथा रतिर्गोपनीया [3]तथाभिषेचनं परम्[4] ।
निखाते धनमागत्य गोपयेत् तु यथा नरः[5] ॥
तथैव तु महामाये गोपनीयं ममाज्ञया ॥११७॥

॥ इति श्रीकामाख्यातन्त्रे पार्वतीश्वरसंवादे सप्तमः पटलः ॥ ७ ॥



---

१. न संशयः–ख० ।
२. नो–घ० ।
३. यथा हि स्तनमण्डलम्–क०, ख०, घ० ।
४. यथा योनिर्गोपनीया–क०, ख०, घ० ।
५. यथापरम्–ङ० ।

# अथ अष्टमः पटलः

श्रीदेवी उवाच

मुक्तितत्त्वं महादेव ! वद मे करुणानिधे ।
यस्मिन् षड्दर्शनानीह चोपहास्यगतानि च ॥ १ ॥

श्रीशिव उवाच

शृणु देवि ! शुभे विज्ञे यत् पृष्टं तत्त्वमुत्तमम् ।
[1]एतन्मर्म च [2]देवेशि ! अहं वेद्मि तथा हरिः ॥ २ ॥

मोदकेन यथा लोकः [3]प्रतारयति बालकान् ।
[4]लगुडेन यथा देवि ! बध्नाति दुर्जनं नृपः[5] ॥ ३ ॥

[6]तथानङ्गीकृतो लोके दर्शनैर्बर्वरो मया[7] ।
दुर्जने यदि मुक्तिः स्याच्छङ्कीयति[8] शुभानने ! ॥ ४ ॥

षड्दर्शनमहाकूपे पतिताः[9] पशवः प्रिये ! ।
परमार्थं न जानन्ति [10]दर्वीपाकरसं यथा ॥ ५ ॥

---

१. एतद्धर्मार्चनं वेत्सि–ख० ।
२. वेत्सि त्वमहं वेद्मि तथा हरिः–घ० ।
३. प्रभावयति–ख० ।
४. निगडेन–ख० ।
५. हि च–घ० ।
६. यथा–ख० ।
७. तथा मुग्धीकृता लोका–घ० ।
८. यथा–ङ० ।
९. शङ्कया–ख० शङ्कराः–ङ० ।
१०. पतितः पाशवः–ङ० ।

न सारः कदलीवृक्षे नैरण्डे[1] तु शुभानने।
दर्शनेषु तथा मुक्तिर्नास्ति[2] देवि! मयोदितम्॥ ६॥

यथा मरीचिकायास्तु निवर्तन्ते पुनर्मृगाः।
दर्शनेभ्यो निवर्तन्ते तथा मुमुक्षवः पुनः॥ ७॥

श्रीगुरोश्च प्रसादेन मुक्तिमादौ सदा[3] लभेत्।
विचरेत् सर्वशास्त्रेषु कौतुकाय ततः सुधीः॥ ८॥

मुक्तितत्त्वं प्रवक्ष्यामि[4] सादरं श्रृणु पार्वति!।
शरीरधारणं यस्य[5] कुर्वन्तीह पुनः पुनः॥ ९॥

आदावनुग्रहो देव्याः श्रीगुरोस्तदनन्तरम्।
तदाननात् ततो[6] दीर्घा भक्तिस्तस्याः प्रजायते॥ १०॥

ततो हि साधनं शुद्धं तस्माज्ज्ञानं सुनिर्मलम्।
ज्ञानान्मोक्षो भवेत् सत्यमिति शास्त्रस्य निर्णयः॥ ११॥

मुक्तिश्चतुर्विधा प्रोक्ता सालोक्यं तु शुभानने!।
सारूप्यं सहयोज्यं च निर्वाणं हि परात् परम्॥ १२॥

सालोक्यं वसतिर्लोके सारूप्यं तु स्वरूपता।
सायुज्यं कलया युक्तं निर्वाणं तु मनोलयः॥ १३॥

श्रीदेवी उवाच

[7]सम्यग् लयो जनस्यैव निर्वाणं यत् तु कथ्यते।
तत् किं वद महादेव! संशयं लयसात् कुरु॥ १४॥

---

१. तत् सर्वं काकभाषितम्–ख०, घ०।
२. एरण्डे तु यथाऽनघे–ख०, घ०।
३. नास्ति नास्ति कलौ युगे–घ०।
४. समालभेत्–ख० घ०।
५. सारं मे–ख०।
६. यस्मै–घ०।
७. तदा नाना शुभा दीक्षा–ख०।

श्रीशिव उवाच

व्यक्तिर्लयात्मिका मुक्तिरसुराणां दयानिधे ! ।
दुर्जनत्वाल्लोपयित्वा क्रीडयामि सुरानहम् ॥ १५ ॥

मनोलयात्मिका मुक्तिरिति जानीहि शङ्करि ! ।
प्राप्ता मया विष्णुना च ब्रह्मणा नारदादिभिः ॥ १६ ॥

[1]सालोकी केवलं [2]यत् तु याति [3]सारोप्ययुक् द्वयम् ।
त्रिधा सायोज्यवानेति निर्वाणी सर्वमेव हि ॥ १७ ॥

नीलोत्पलदलश्यामा मुक्तिर्द्विदलवर्तिनी ।
मुक्तस्यैव सदा स्फीता स्फुरत्यविरतं[4] प्रिये ! ॥ १८ ॥

सनातनी जगद्वन्द्या सच्चिदानन्दरूपिणी[5] ।
परा च जननी सैव सर्वाभीष्टप्रदायिनी ॥ १९ ॥

इष्टे निश्चलसम्बन्धः[6] स च निर्वाणमीरितम् ।
मुक्तिज्ञानं कुलज्ञानं नान्यज्ञानं कुलेश्वरि ! ॥ २० ॥

साधूनां देव देवेशि ! सर्वेषां विद्धि निश्चितम् ।
स्वर्गे मर्त्ये च पाताले ये ये मुक्ता भवन्ति हि ॥ २१ ॥

बभूवुश्च भविष्यन्ति सर्वेषां मुक्तिरीदृशी ।
तथा च साधनं ज्ञेयं पञ्चतत्त्वैश्च मुक्तिदम् ॥ २२ ॥

अनुग्रहस्तु देव्या यः कुलमार्गप्रदर्शकः ।
दीक्षा कुलात्मिका देवि ! श्रीगुरोर्मुखपङ्कजात् ॥ २३ ॥

---

१. दीक्षा–घ० ।
२. यस्य यस्य–घ० ।
३. सालोक्यं–ख० ।
४. तत् तु–घ० ।
५. सारोप्ययुगलत्रयम्–ख० ।
६. अविरतां–ङ० ।
७. दायिनी–ख० ग० ।
८. सम्बन्धं निर्वाणमुक्तिरीदृशी–ङ० ।

कुलद्रव्येषु या भक्तिः सा मोक्षदायिनी मता ।
ज्ञात्वा चैवं प्रयत्नेन कुलज्ञानं[1] भजेद् बुधः ॥ २४ ॥

यदि भाग्यवशाद् देवि ! मन्त्रमेतत् तु लभ्यते ।
मुक्तेश्च कारणं तस्याः स्वयं ज्ञातं[2] न चान्यथा ॥ २५ ॥

अश्रुतं मुक्तितत्त्वं हि कथितं ते महेश्वरि ! ।
आत्मयोनिर्यथा देवि ! तथा गोप्यं ममाज्ञया ॥ २६ ॥

॥ इति श्रीकामाख्यातन्त्रे पार्वतीश्वरसंवादे अष्टमः पटलः ॥ ८ ॥



१. कुलज्ञानी भवेद्–ख० ।
२. जातं–ङ० ।

# अथ नवमः पटलः

श्रीदेवी उवाच

कामाख्या या महादेव ! कथिता सर्वरूपिणी ।
सा का वद जगन्नाथ ! कपटं मा कुरु प्रभो ॥ १ ॥
कुर्यास्तु कपटं नाथ ! यदि मे शपथस्त्वयि ।
रतौ का कामिनी योनिं सम्यक् सन्दर्शयेत् पतिम् ॥ ॥

श्रुत्वैतद् गिरिजावाक्यं प्रहस्योवाच शङ्करः ॥ २ ॥

श्रीशिव[1] उवाच

शृणु देवि ! मम प्राणवल्लभे ! कथयामि ते ।
या देवी कालिका माता सर्वविद्यास्वरूपिणी ॥ ३ ॥
कामाख्या सैव विख्याता सत्यं सत्यं न चान्यथा ।
[2]सैव ब्रह्मेति जानीहि [3]संज्ञार्थं दर्शनानि च ॥ ४ ॥
विचरन्ति [4]चोत्सुकानि यथा चन्द्रे चकोरकाः ।
अस्या हि जायते सर्वं जगदेतच्चराचरम् ॥ ५ ॥
लीयन्ते पुनरस्यां च सन्देहं मा कुरु प्रिये ! ।
स्थूला सूक्ष्मा परा देवी सच्चिदानन्दरूपिणी ॥ ६ ॥
अमेयविक्रमश्यामा करुणासागरा मता ।
मुक्तिमयी जगद्धात्री सदानन्दमयी तथा ॥ ७ ॥

---

१. नास्ति–घ० ।
२. शिव–ख० ।
३. यज्ञार्थं०–ख० ।
४. शृणु काली यथा चन्द्रो हि वामनः–ख० ।
मुत्सुकानि यथा चन्द्रे हि राननः–ङ० ।

विश्वम्भरी क्रियाशक्तिस्तारा [1]चैव सनातनी ।
यथा कर्मसमाप्तौ च दक्षिणा फलसिद्धिदा ॥ ८ ॥

तथा मुक्तिरसौ देवि ! सर्वेषां फलदायिनी ।
अतो हि दक्षिणाकाली कथ्यते [2]वरवर्णिनि! ॥ ९ ॥

कृष्णवर्णा सदा काली आगमस्येति निर्णयः ।
उक्तानि सर्वतन्त्राणि तन्त्रेणानेन निश्चितम् ॥ १० ॥

कृत्वा [3]सङ्कल्पसिद्धौ तत् [4]कामेषु पाठयेद् बुधः ।
पठित्वा श्रावयेद् वापि शृणोति पूजयेद् यदि ॥ ११ ॥

तं तं काममवाप्नोति श्रीमत्कालीप्रसादतः ।
यथास्पर्शमणिर्देवि ! तथैतत् तन्त्रमुत्तमम् ॥ १२ ॥

यथा कल्पतरुर्दाता तथा ज्ञेयं मनीषिभिः ।
यथा सर्वाणि रत्नानि सागरे सन्ति निश्चितम् ॥ १३ ॥

तथाऽत्र सिद्धयः सर्वा भुक्तिर्मुक्तिर्वरानने ! ।
[5]सर्वदेवाशयो मेरुर्यथा सिद्धं तथा पुनः ॥ १४ ॥

सर्वविद्यायुतं[6] तन्त्रं शपथेन वदाम्यहम् ।
यस्य गेहे स्थितं देवि ! तन्त्रमेतद् भयापहम् ॥ १५ ॥

रोगशोकपातकानां लेशो नास्ति कदाचन ।
तत्र दस्युभयं नास्ति ग्रहराजभयं न च ॥ १६ ॥

---

१. सैव–च० ।
२. वरवर्णिनी–ङ० ।
३. संकल्पा तत्कामे शुभदः पाठयेन्नरः–घ० ।
४. काम्येषु–ख० ।
५. सन्ध–ङ० ।
६. मतं मन्त्रं–क० ।

न चोत्पातभयं तत्र न च मारीभयं तथा।
न पराजयमेषां हि भयं देवि! मयोदितम् ॥ १७ ॥

भूत-प्रेत-पिशाचानां दानवानां च रक्षसाम्।
न भयं क्वापि सर्वेषां व्याघ्रादीनां तथैव च ॥ १८ ॥

कूष्माण्डानां भयं नैव वह्न्यादीनां भयं न च।
[1]विनायकानां सर्वेषां गन्धर्वाणां तथा न च ॥ १९ ॥

स्वर्गे मर्त्ये च पाताले ये ये सन्ति भयानकाः।
हिंस्रा विघ्नकराश्चैव न तेषां भयमीश्वरि! ॥ २० ॥

यमदूताः पलायन्ते [2]विमुखा भयविह्वलाः।
सत्यं सत्यं महादेवि! शपथेन वदाम्यहम् ॥ २१ ॥

सम्पत्तिरतुला तत्र तिष्ठेत् तु साप्तपौरुषम्।
वाणी तथैव देव्यास्तु प्रसादाचल ईरितः ॥ २२ ॥

एतत् ते कथितं [3]देवि! न प्रकाश्यं कदाचन।
गोपनीयं गोपनीयं गोपनीयं सदा प्रिये! ॥ २३ ॥

पशोरग्रे विशेषेण गोपनीयं प्रयत्नतः।
भ्रष्टानां साधकानां च सान्निध्ये न वदेदपि ॥ २४ ॥

न दद्यात् काणखञ्जेभ्यो विगीतेभ्यस्तथैव च।
उदासीनजनस्यैव सान्निध्ये न वदेदपि ॥ २५ ॥

दाम्भिकाय न दातव्यमभक्ताय विशेषतः।
मूर्खाय भावहीनाय [4]दरिद्राय ममाज्ञया ॥ २६ ॥

---

१. वैनायकानां–घ०, वैनारकानां–ङ० ।
२. तिष्ठन्ति–ङ० ।
३. स्नेहात्–ख० ।
४. दुरिताय–ख० ।

दद्यात् शान्ताय शुद्धाय कौलिकाय महेश्वरि ! ।
कालीभक्ताय शैवाय वैष्णवाय शिवाज्ञया ॥ २७ ॥

अद्वैतभावयुक्ताय महाकालप्रजापिने ।
सुरा-स्त्री-वन्दकायाऽपि शिवाबलिप्रदाय च ॥ २८ ॥

॥ इति श्रीकामाख्यातन्त्रे पार्वतीश्वरसंवादे नवमः पटलः समाप्तः ॥ ९ ॥

समाप्तश्चायं ग्रन्थः ।



# सनत्कुमारतन्त्रम्

## प्रथमः पटलः

ॐ नमो गणेशाय

नमः [1]कनक-किञ्जल्क-पीत-निर्मल-वाससे ।
महाभुज-रिपुस्कन्ध-घृष्टचक्राय[2] चक्रिणे ॥ १ ॥
विविक्ते भुवने रम्ये सिद्धचारणसेविते ।
सनत्कुमारं नत्वाऽथ पप्रच्छेदं पुलस्त्यकः ॥ २ ॥
कृष्णस्य च महाबाहोर्माहात्म्यं वक्तुमर्हसि ।
मन्त्रराजं यथान्यायं प्रसादं कुरु सुव्रत ! ॥ ३ ॥

सनत्कुमार उवाच

शृणु रूपं प्रवक्ष्यामि कृष्णस्यार्भ[4]ककर्मणः ।
यस्याऽहं वशगा नित्यं रवि-रुद्राः सवासवाः ॥ ४ ॥
किं वा ते महिमा तस्य वक्तव्यो [6]द्विजसत्तमः ।
दिवि भुव्यन्तरिक्षे च विष्णुरित्यभिधीयते ॥ ५ ॥

---

१. कमल-ग० ।
२. निर्मित-ग० ।
३. चक्राधिचक्रिणे-ग० ।
४. अभेद-ग० ।
५. वशगो-ग० ।
६. मुनि-ग० ।

विधानं तस्य वक्ष्यामि यथातत्त्वं निशामय ।
आदौ गुरुमुखाल्लब्ध्वा मन्त्रं भक्तिसमन्वितः ॥ ६ ॥
गुरवे दक्षिणां दत्वा [1]पूर्वसेवां समाचरेत् ।
द्विजसन्तर्पणं कृत्वा प्रहृष्टेनाऽन्तरात्मना ॥ ७ ॥
आदौ नैमित्तिकं कृत्वा सूर्यं सम्पूज्य भक्तितः ।
देवार्चनं तथा कृत्वा यागं [3]कुर्याद् दयान्वितः ॥ ८ ॥
गिरौ नद्यां वने तीर्थे गोष्ठे[4] देवालये तथा ।
अश्वत्थे सागरान्ते वा जपेत् प्रतिसहस्रकम् ॥ ९ ॥
शतं चैवाष्टकं कृत्वा भुक्त्वा स्थानेषु बुद्धिमान् ।
षोडशेनोपचारेण सम्पूज्य मधुसूदनम् ॥ १० ॥
काले ध्यात्वा यथान्यायं नैवेद्यं च निवेदयेत् ।
[5]विष्णवे हृदयाह्वानं मन्त्रराजं निशामय ॥ ११ ॥
समाहितः शुचिर्भूत्वा भक्तिमानुद्धरेद् बुधः ।
ओङ्कारं पूर्वमुद्धृत्य त्रिवारं परमेश्वरम् ॥ १२ ॥
[6]यद्यत्कामो भवेन्मन्त्री मन्त्रस्यादौ [7]निवेदयेत् ।
पद्मजं तन्मुखोपेतं शक्रस्योपरि संस्थितम् ॥ १३ ॥
सेन्दुबिन्दुशिखोपेतं प्रथमं सर्वकामदम् ।
[8]तीर्थं वह्निसमारूढं श्रिया मूर्ध्नि [9]व्यवस्थितम् ॥ १४ ॥

---

१. पूर्वं–ग० ।
२. प्रकृष्टेन–ग० ।
३. ग्रासं दद्याद् दयान्वितः –ग० ।
४. गौष्ठे–ग० ।
५. वैष्णवे–ग० ।
६. यत्र कामो–प० ।
७. निवेशयेत्–ग० ।
८. तिथि–ग० ।
९. करस्थितम्–ग० ।

शशिबिन्दुशिखाव्याप्तं द्वितीयं श्रीप्रदायकम् ।
रुद्रं पञ्चसमायुक्तं पावकोपरि संस्थितम् ॥ १५ ॥

सेन्दुबिन्दुशिखाक्रान्तं तृतीयं मोक्षदं मतम् ।
खान्तं नान्तं तथा छान्तं धान्तं लान्तं चलद्वयम् ॥ १६ ॥

वान्तं [1]मान्तं तथा [2]षान्तं लान्तं सान्तान्तकं तथा ।
एपरम् ऐपरं चैव अपरान्तं [3]परात्रयम् ॥ १७ ॥

आद्यं [4]गोपीजनपदं वल्लभाय ततः परम् ।
स्वाहा शब्दं ततो दद्यात् सम्पूर्णं सिद्धिदायकम् ॥ १८ ॥

॥ इति सनत्कुमारीये प्रथमः पटलः समाप्तः ॥ १ ॥



---

१. वर्ण–ग० ।
२. रान्तं–ग० ।
३. सान्तं–ग० ।
४. परत्रयम्–ग० ।
५. ठद्वयं च–ग० ।

# अथ द्वितीयः पटलः

अथ सम्यक् प्रवक्ष्यामि यजनं ध्यानमेव च ।
ध्यानं चैव [1]त्रिकालस्य नैवेद्यं च निशामय ॥ १ ॥

ब्राह्मे मुहूर्ते उत्थाय शुचिर्भूत्वा समाहितः ।
आसने उपविश्याथ[2] गुरुं नत्वा पुटाञ्जलिः ॥ २ ॥

आत्मानं ब्रह्मणो रूपं चिन्तयेच्च मुहुर्मुहुः ।
जप्त्वा मन्त्रं च सर्वेषां वादिनां विजयी भवेत् ॥ ३ ॥

ततः स्नात्वा शुचिर्भूत्वा सन्ध्यादीन् वैदिकांस्तथा[3] ।
कुर्याद् गुरूपदेशेन लौकिकानपि देशिकः ॥ ४ ॥

श्रीकृष्णं तर्पयामीति मूलमुच्चार्य तर्पयेत् ।
पूजाद्वारे[4] चोपविश्य पादप्रक्षालनं सुधीः ॥ ५ ॥

शिखाया बन्धनं चैव चास्त्रमन्त्रेण मन्त्रवित् ।
आचम्य द्वारदेवांस्तु पूजयेत् साधकोत्तमः ॥ ६ ॥

विघ्नानुत्सादयित्वा तु हस्तभूम्योर्विशोधनम् ।
गुरुं नत्वा गणेशं च वास्तुपूजां समाचरेत् ॥ ७ ॥

ब्रह्माणं पूजयित्वा तु आत्मासनमतः परम् ।
भूतशुद्धिं विधायाऽथ देवेऽहं चिन्तयेद् बुधः ॥ ८ ॥

---

१. हि–ग० ।

२. उपविश्याम–ग० ।

३. वैदिकान् तथा–ग० ।

४. पूजालये–ग० ।

ऋष्यादिन्यासस्वाँश्च मातृकाणां ततो न्यसेत् ।
प्राणायामत्रयं [1]कुर्यादङ्गन्यासं च मन्त्रवित् ॥ ९ ॥
[2]आचक्रं च सुचक्रं च विचक्रं च द्विजोत्तमः ।
त्रैलोक्यरक्षणं चक्रमसुरान्तकमेव च ॥ १० ॥
एकैकं पूर्वतः कृत्वा [3]चक्रशब्दं नियोजयेत् ।
[4]चतुर्थ्यन्तं तु संसाध्य स्वाहाशब्दमनन्तरम् ॥ ११ ॥
तथा चाङ्गं समुच्चार्य प्रत्येकैकं नियोजयेत् ।
नमः स्वाहा स्वधा वौषट् वषट्कारं तथास्त्रकम्[5] ॥ १२ ॥
हृदि [6]मूर्ध्नि शिखादेशे तनौ दिक्षु [7]तथाक्रमम् ।
[8]स्वशक्तिभिः केशवाद्यैन्यासं कुर्याद् विचक्षणः ॥ १३ ॥
विभूतिपञ्जरं न्यस्य[9] न्यसेत् तन्मूर्तिपञ्जरम् ।
तत्त्वन्यासं प्रकुर्वीत करन्यासं तथा बुधः ॥ १४ ॥
मन्त्रन्यासं प्रकुर्वीत व्यापकं च त्रिधा न्यसेत् ।
विभूतिपञ्जरन्यासं यत्र यत्र दशाक्षरम् ॥ १५ ॥
एवं कल्पोक्तकान् न्यासान् क्रमेण परिकल्पयेत् ।
शङ्खस्थापनकं[10] चापि कुर्याद् गुरूपदेशतः ॥ १६ ॥

---

१. कृत्वा मूलेन प्रणवेन वा–ग० ।
२. आदक्षपादकेशान्तं व्यापकन्यासमाचरेत्–ग० ।
३. द्वादशं चक्रमेव च–ग० ।
४. चतुर्थ्यन्तेन सन्न्यस्य स्वाहान्तेन समापयेत्–ग० ।
५. स्तु मस्तके–ग० ।
६. पूज्य–ग० ।
७. यथा–ग० ।
८. स–ग० ।
९. पञ्जरन्यासं–ग० ।
१०. स्थापनं–ग० ।

अर्घ्यं चापि तथा कृत्वा द्रव्यमभ्युक्ष्य यत्नतः ।
पीठं प्रकल्प्य देहे स्वे धर्मादीन् वै [1]प्रपूजयेत् ॥ १७ ॥

हृदि चैवमनन्तादीन्[2] पूजयेच्च [3]यथाविधि ।
बाह्यं मुख्यं गृहस्थस्य वर्णिनोऽन्तःप्रपूजनम् ॥ १८ ॥

यन्त्रं निर्माय ताम्रे तु ह्यनन्तादीन् [4]प्रकल्पयेत् ।
तस्य कोणेषु धर्मादीन् तत्पार्श्वे पूर्वधर्मकान् ॥ १९ ॥

मध्येऽपि पूजयेन्नित्यमनन्तादि[5] [6]चतुर्दश ।
केशरेषु च पूजा वै विमलाद्याश्च[7] देवताः ॥ २० ॥

आत्मानं [8]देवतां भाव्य स्वनासापुटकेन तु ।
निःसार्य[9] पूजयेद् देवं समावाह्य[10] च यत्नतः ॥ २१ ॥

अनन्ताद्यैश्च बीजैश्च प्राणस्थानं समाचरेत् ।
पाद्यादींश्चैव यत्नेन पूजयेदाकृतीगणान्[11] ॥ २२ ॥

धूपदीपौ समासाद्य नैवेद्यं च निवेदयेत् ।
जप्त्वा मन्त्रं च तन्त्रोक्तं पूजयेद् देववत् स्वयम् ॥ २३ ॥

---

१. पूजयेद् यतः–ग० ।
२. अनन्तादीन्–ग० ।
३. यथाविधिः–क०, ख० ।
४. प्रपूजयेत्–ग० ।
५. आनन्दादि–ग० ।
६. चतुर्दशः–क०, ख० ।
७. विमलाद्यैश्च–ग० ।
८. देवता–ग० ।
९. निर्माय–ग० ।
१०. सदाबाह्यप्रयत्नतः–ग० ।
११. आवृतिगणान्–क० ।

श्रीकृष्णं तर्पयामीति, मूलमुच्चार्य यत्नतः ।
वारत्रिरर्घ्यतोयेन तर्पयेन्मन्त्रमध्यके[1] ॥ २४ ॥

प्राणायामत्रयं कुर्याद्[2] व्यापकं च त्रयं न्यसेत् ।
[3]तन्त्रोक्तेन विधानेन प्रयोगं कुरुते सुधीः ॥ २५ ॥

॥ इति [4]सनत्कुमारतन्त्रे पूजासूत्रं नाम द्वितीयः पटलः ॥ २ ॥



१. मस्तके–ग० ।
२. त्वा–ग० ।
३. स्वतन्त्रोक्तेन विधिना–ग० ।
४. सनत्कुमारीय–क० ।

# अथ तृतीयः पटलः

अथ विस्तार्य वक्ष्यामि साधकानां हिताय च ।
हंसमन्त्रेण जीवं वै सतत्त्वं कुण्डलीयुतम् ॥ १ ॥
योगयुक्तेन विधिना परं ब्रह्मणि योजयेत् ।
वामनासापुटे धूम्रं वायुबीजं विचिन्तयेत् ॥ २ ॥
तेन [1]संशोधिततनुर्दक्षे [2]वातं विरेचयेत् ।
दक्षनासापुटे रक्तं वह्निबीजं विचिन्तयेत् ॥ ३ ॥
तेन सञ्जनितो वह्निः शुष्कं देहं च भस्मसात् ।
कृत्वा तं वामया [3]सेच्यं ठं बीजं शुक्लवर्णकम् ॥ ४ ॥
ललाटे योज्य चन्द्रस्थं[4] तेन वै ताडयेत् ततः ।
तेन सञ्जनितं देहं पवित्रं सुमनोहरम् ॥ ५ ॥
भावयित्वा विधानेन जीवं स्वस्थानमानयेत् ।
सोऽहं मन्त्रेण कुण्डल्या तत्त्वैश्च [5]परिवारितम् ॥ ६ ॥
भूतशुद्धिरियं[6] प्रोक्ता [7]सर्वसम्पत्प्रदायिनी ।
[8]प्राणयाममथो वक्ष्ये यथावदवधारय ॥ ७ ॥

---

१. संशोधयेद् देहं–ग० ।
२, यातं विचिन्तयेत्–ग० ।
३. रेच्यं–ग० ।
४. चन्द्रस्थममृतं तेन पातयेत्–ग० ।
५. परिवारितः–ग० ।
६. रिति–ग० ।
७. सर्वदा तत्प्रदायिनी–ग० ।
८. 'प्राणायाममथो' इत्यारभ्य मनोरि'त्यन्तं नास्ति–क० ख० ।

दक्षया रेचयेद् वायुं द्वात्रिंशन्मानमानतः ।
ईडया कर्षयेद् वायुं मनोः षोडशमात्रया ॥ ८ ॥

सुषुम्नामध्यगं कृत्वा विद्यासङ्ख्येन धारयेत् ।
येनैव पूरयेद् वायुं तेनैव रेचयेत् पुनः ॥ ९ ॥

येनैव रेचयेत् पूर्वं तेनैव पूरयेत् पुनः ।
उभयोर्मध्यगं कृत्वा तत्तन्मात्राभिधारणम् ॥ १० ॥

ततः पूर्वोक्तरूपं तत् [1]प्राणायामं व्यवस्थितम् ।
[2]मातृकान्यासकं वक्ष्ये यथावदवधारय ॥ ११ ॥

ललाटे च मुखे चैव चक्षुषोः कर्णयोस्तथा ।
[3]नसोश्च गण्डयोश्चैव ओष्ठयोर्दन्तयोस्तथा ॥ १२ ॥

मस्तके च मुखे चैव स्वरान् वै[4] क्रमतो न्यसेत् ।
हस्तयोः पादयोश्चैव सन्धिष्वग्रे यथाविधि ॥ १३ ॥

पार्श्वयोः पृष्ठतश्चैव नाभौ च उदरे तथा ।
ककारादीन् मकारान्तान् वर्णान्[5] तत्तद्गतान् न्यसेत् ॥ १४ ॥

हृदये स्कन्धद्वन्द्वे[6] च अंसयोश्च निरामयः ।
यादयश्चैव चत्वारो न्यसनीयाः प्रयत्नतः ॥ १५ ॥

शादयश्च षडेवैते[7] हृदयादिषु निर्दिशेत् ।
हस्तपादयुगे[8] नाभौ वक्त्रौष्ठसुविनिश्चयः ॥ १६ ॥

---

१. प्राणायाम–ग० ।
२. 'मातृकान्यासकम्' इत्यारभ्य अवधारय' इति भागः नास्ति–क०, ख० ।
३. नासायां–ग० ।
४. स्वरांश्च–ग० ।
५. तत्वगतां–म० ।
६. देशे च कन्धरायां–ग० ।
७. षडेव ते–ख० । शादयश्चैव षष्ठ्येव–ग० ।
८. द्युगे–ग० ।
९. वक्त्रे चैव विनिश्चयः–ग० ।

मातृकान्यासमेतद्धि प्रोक्तं सर्वसमृद्धिदम् ।
पीठन्यासमथो वक्ष्ये यथावदवधारय ॥ १७ ॥
कल्पयेदात्मनो देहे पीठं धर्मादितः क्रमात् ।
[1]भास्करं च गणेशानं शिवं दुर्गां प्रपूजयेत् ॥ १८ ॥
[2]अंशोरुयुगयोर्विद्वान् प्रादक्षिण्येन देशिकः ।
धर्मं ज्ञानं च वैराग्यमैश्वर्यं न्यसतु क्रमात् ॥ १९ ॥
[3]मुखपार्श्वनाभिपार्श्वेष्वधर्मादीन् प्रकल्पयेत् ।
धर्मादयः स्मृताः पादाः पीठगात्राणि चापरे ॥ २० ॥
अनन्तहृदये पद्ममस्मिन् सूर्येन्दुपावकान् ।
एषां स्वस्वकला न्यस्याः प्रणवाक्षरपूर्विकाः ॥ २१ ॥
सत्वादींस्त्रीन् गुणान् [4]न्यस्येत् तथैव त्रिगुरूत्तमः ।
आत्मानमन्तरात्मानं [5]परमात्मानमेव च ॥ २२ ॥
ज्ञानात्मानं न्यसेद् धीमान् [6]मायाबीजपुरःसरम् ।
[7]नमो भगवते ब्रूयात् विष्णवे च पदं वदेत् ॥ २३ ॥
सर्वात्मसंयोगपदं योगपद्मपदं वदेत् ।
पीठात्मने हृदन्तोऽयं मनुस्तवादिरीरितः ॥ २४ ॥
विमलोत्कर्षिणी ज्ञाना क्रियायोगा च शक्तयः ।
ब्रह्मीशयोस्तथेशाना नान्तर्ग्रहा नवमी मता ॥ २५ ॥

---

१. अयमंशः नास्ति–ग० ।
२. अपशायुगयो–ग० ।
३. मुखपार्श्वे नाभिपार्श्वे धर्मादींस्तु–ग० ।
४. न्यस्य तथैवात्र–ग० ।
५. परमात्मनि मद्र तु–क० ख० ।
६. मायाबीजं च पूर्वकम्–क० ख० ।
७. 'नमो भगवते' (२३) इत्यारभ्य 'देवासने यजेत्' (२६) इति श्लोकाः न सन्ति–ग० :

यदासनं भवेद् यस्य तस्मिन् देवासने यजेत् ।
इच्छा ज्ञानं क्रिया चैव कामिनी कामदायिनी ॥ २६ ॥

रती रतिप्रिया चैव मध्ये चैव मनोन्मनी ।
सोऽहं सदाशिवप्रेतं ङेऽतं देव्या समाश्रयेत् ॥
पीठन्यासं विधायेत्थं चिन्तयेदिष्टदेवताम् ॥ २७ ॥

॥ इति [1]सनत्कुमारतन्त्रे पीठयजनं नाम तृतीयः पटलः ॥ ३ ॥

१, सनत्कुमारीये–क० ।

# अथ चतुर्थः पटलः

ध्यात्वा विश्वमयं[1] देवं नवीनजलदप्रभम् ।
नवनीतं दक्षहस्ते दधानं पीतवाससम् ॥ १ ॥
आवाह्य [2]पूजयेन्मंत्रे शङ्खस्थापनपूर्वकम् ।
[3]शङ्खमन्त्राम्बुभिः प्रोक्ष्य वामतो वह्निमण्डले ॥ २ ॥
साधारं स्थापयेद् विद्वान् बिन्दुश्रुतसुधामयैः ।
तोयैः सुगन्धिपुष्पाद्यैः [4]पूजयेत् तं यथाविधि ॥ ३ ॥
आधारं [5]पावकं शङ्खं सूर्यं तोयं सुधाकरम् ।
स्मरेद् वह्न्यर्कचन्द्राणां कलास्तास्[6]ताष्वनुक्रमात् ॥ ४ ॥
मूलमन्त्रं जपेत् स्पृष्ट्वा न्यसेत् तस्याङ्गमन्त्रवित् ।
हृन्मन्त्रेणाऽभिसम्पूज्य हस्ताभ्यां छादयेत् पुनः ॥ ५ ॥
जपेन्मन्त्रं यथाकालं देशिको देवताधिया ।
अस्त्रमन्त्रेण संरक्ष्य कवचेनाऽवगुण्ठ्य च ॥ ६ ॥
धेनुमुद्रां समापाद्य[7] बोधयेत् तं स्वमुद्रया ।
गंगे ! च यमुने ! चैव गोदावरि ! सरस्वति ! ॥ ७ ॥
नर्मदे ! सिन्धु ! कावेरि ! जलेऽस्मिन् सन्निधिं कुरु ।
तीर्थावाहनमन्त्रोऽयं प्रोक्तः सर्वसमृद्धिदः ॥ ८ ॥

---

१. वेणुकरं–ग० ।
२. पूजयेद् यन्त्रे–ग० ।
३. शंखं–ग० ।
४. पूरयेत्–ग० ।
५. कापकं–क०, कोपकं–ख० ।
६. स्तेष्वनु–ग० ।
७. साद्य–ग० ।

दक्षिणे प्रोक्षणीपात्रमादायाऽद्भिः प्रपूरितम् ।
किञ्चिदर्घ्याम्बु सङ्गृह्य प्रोक्षण्यम्भसि योजयेत् ॥ ९ ॥
अर्घ्यस्योत्तरतः कार्यं पाद्यार्घ्याचमनीयकम् ।
आत्मानं यागवस्तूनि [1]सर्वत्र प्रोक्षयेद् गुरुः ॥ १० ॥
शङ्खस्थापनकं सम्यक् प्रोक्तं सर्वसमृद्धिदम् ।
शिवादयश्च सम्पूज्याः [2]केशवेष्वङ्गदेवताः ॥ ११ ॥
आवाह्य प्राणमनुना [3]प्राणस्थापनमाचरेत् ।
[4]पाशादित्र्यक्षरस्यान्ते हंसोऽमुष्य पदं पुनः ॥ १२ ॥
क्रमात् प्राणा इह प्राणास्तथा[5] जीव इह स्थितः ।
अमुष्य सर्वेन्द्रियाणि भूयोऽमुष्यपदं वदेत् ॥ १३ ॥
वाङ्मनोनयनश्रोत्रघ्राणप्राणाः पदान्यथ ।
पश्चादिहागत्य सुखं चिरं तिष्ठन्तु ठद्वयम् ॥ १४ ॥
अयं प्राणमनुः प्रोक्तः सर्वेषां प्राणदायकः[6] ।
स्वागतं कुशलप्रश्नं निगदेदग्रतो गुरुः ॥ १५ ॥
पाद्यं पादाम्बुजे दद्याद् देवस्य हृदयात्मना[7] ।
एतच्छ्यामाकदूर्वाब्जविष्णुक्रान्ताभिरीरितम् ॥ १६ ॥
स्वधामन्त्रेण वदने दद्यादाचमनीयकम् ।
जाती-लवङ्ग-कक्कोलैस्तदुक्तं तन्त्रवेदिभिः ॥ १७ ॥

---

१. शीर्षाणि–ग० ।
२. प्रेतेष्वङ्काः शिवादितः–क० ।
३. स्थानं समाचरेत्–क० ।
४. त्र्यक्षरात् स्वान्ते–ग० ।
५. अथो–ग० ।
६. धारकः–ग० ।
७. हृदयामुना–क० ।

अर्घ्यं दिशेत् ततो मूर्ध्नि शिरोमन्त्रेण देशिकः ।
गन्ध-पुष्पाऽक्षत-यव-कुशाम्बु-तिल-सर्षपैः ॥ १८ ॥
दूर्वाभिः सर्व-देवानामेतदर्घ्यमुदीरितम् ।
स्वधात्मना ततः कुर्यान्मधुपर्कं समाहितः ॥ १९ ॥
आज्यं दधिमधून्मिश्रमेतदुक्तं मनीषिभिः ।
स्वधात्मना ततः कुर्यादद्भिराचमनीयकम् ॥ २० ॥
गन्धाद्भिः कारयेत् स्नानं वाससी परिधापयेत् ।
दद्याद् यज्ञोपवीतं च हाराद्याभरणैः सह ॥ २१ ॥
अर्घ्येणाऽभ्युक्ष्य देवेशं गन्धाद्यैः पूजयेत् तदा ।
गन्ध-चन्दन-कर्पूर-कालागुरुभिरीरितम् ॥ २२ ॥
[1]षोडशैरुपचारैश्च पूजयित्वा प्रयत्नतः ।
[2]आवृतीः पूजयेद् भक्त्या यथावदवधारय ॥ २३ ॥
वासुदेवं देवकीं च नन्दं नन्दप्रियं तथा ।
कमलां भारतीं चैव रतिं शान्तं[3] च पत्रतः ॥ २४ ॥
शङ्खं चक्रं गदां चैव पद्मं कौस्तुभमेव च ।
श्रीवत्सं वत्सकं[4] चैव वनमालां समर्चयेत् ॥ २५ ॥
मूलेनैव खगाध्यक्षं पूजयेत् तदनन्तरम् ।
स्वबीजेन ततो देवं गन्धपुष्पादिभिः क्रमात् ॥ २६ ॥
यथासङ्ख्यं ततो मन्त्रं पद्माक्षेण[5] जपेदथ ।
समर्चयेत् ततो देवं हृदयादीननन्तरम् ॥ २७ ॥

---

१ 'षोडशैरि'त्यारभ्य 'प्रयत्नत' इति नास्ति–क० ।

२. आवृतिं–ग० ।

३. शक्तिं च पत्रतः–ग० ।

४. वत्सकं–ग० ।

५. पद्माख्येन–ग० ।

आत्मदेहमयं[1] कृत्वा प्राणायामं समाचरेत् ।
अथ देवस्य निर्माल्यैर्विष्वक्सेनं समर्चयेत् ॥ २८ ॥

एवं क्रमेण कर्तव्या कृष्णपूजा [2]समाहितैः ।
पश्चाद् गोभ्यः समभ्यर्च्य ग्रासं कुर्यात् सुशोभनम् ॥ २९ ॥

केयूराङ्गदहारैश्च कुण्डलैः कटिसूत्रकैः ।
नूपुरैर्वन्यपुष्पैश्च [3]नानारत्नैर्विभूषितम् ॥ ३० ॥

सचन्द्रग्रहनक्षत्रैर्निर्मलं गगनेचरम् ।
अथ रत्नप्रभायुक्तं सर्वालङ्कारभूषितम् ॥ ३१ ॥

सनकाद्यैः स्तूयमानं विमानस्थैर्नभोगतैः ।
सर्वलक्षणसंयुक्तं प्रातः कृष्णं समर्चयेत् ॥ ३२ ॥

तथा कल्पप्रभायुक्ते वन्ये काञ्चनमण्डपे ।
रत्नपीठे समासीनं कामिनीशतमध्यगम् ॥ ३३ ॥

[4]चामराद्यैर्वीज्यमानं चन्दनाऽगुरुचर्चितम् ।
ध्यायेन्मध्यन्दिनं कृष्णं सुन्दरं स्मरवर्धनम् ॥ ३४ ॥

गोपालगणमध्यस्थं सुन्दरीशतमध्यगम् ।
तत्सर्वं स्ववशं कृत्वा क्रीडयन्तं मुदान्वितम् ॥ ३५ ॥

गन्धचन्दनमालाद्यैर्भूषितं नयनोत्सवम् ।
यथा मध्ये तथा रात्रौ चिन्तयेत् कञ्जलोचनम् ॥ ३६ ॥

काञ्चने राजते पात्रे ताम्रके वाऽप्यभावतः ।
भक्त्या कृष्णं समभ्यर्च्य नैवेद्यं च निवेदयेत् ॥ ३७ ॥

---

१. आत्मदेहे न यं–क० ।
२. समाप्य च–ग० ।
३. नानारत्नविभूषणम्–क० ।
४. 'चामराद्यैरित्यारभ्य' 'सुन्दरीशतमध्यगमि'ति नास्ति–क० ।

प्रातर्दध्यौदनं दद्यात् पायसं च तथोत्तरम् ।
तथा सशर्करं क्षीरं रात्रौ दद्यात् सुशोभनम् ॥ ३८ ॥

एभिरेव विधानैश्च संसेव्यः परमेश्वरः ।
धर्मार्थकाममोक्षांश्च[1] [2]लभते जपकृन्नरः ॥ ३९ ॥

॥ इति [3]सनत्कुमारतन्त्रे चतुर्थः पटलः ॥ ४ ॥



---

१. मोक्षं हि–ण० । २. लभेते नात्र संशयः–ग० ।
३. सनत्कुमारीये–क० ।

## अथ पञ्चमः पटलः

अथ मन्त्रान्तरं वक्ष्ये यथावदवधारय ।
[1]मन्त्रदेहं प्रवक्ष्यामि त्रिषु लोकेषु दुर्लभम् ॥ १ ॥

यस्य ग्रहणमात्रेण सर्वज्ञो जायते नरः ।
अचलां च [2]लभेत् लक्ष्मीं कवित्वं [3]भवसम्मतम् ॥ २ ॥

असाध्यं [4]साधयेन्मन्त्री देवानामपि दुर्लभम् ।
इदं[5] मे हृदयं गुह्यं यत् प्रष्टव्यं महामुने ! ॥ ३ ॥

अन्येषु[6] साधिता मन्त्राः सर्वे च फलदायकाः ।
गृहीतस्य फलं दाता मन्त्रो यद्यप्यसाधितः ॥ ४ ॥

सन्तुष्टो हि गुरुर्यत्र तस्य तुष्टो जगत्पतिः ।
मन्त्रं न्यस्य गुरोर्वाक्यं न कदाचिद् विकल्पयेत् ॥ ५ ॥

गुरोर्देहं समाश्रित्य मन्त्रदेहोऽवतिष्ठते[7] ।
ततः सर्वेण भावेन गुरुं मन्त्रेण पूजयेत् ॥ ६ ॥

गन्धमाल्यैर्धूपदीपैः सम्पूज्य गुरुमन्त्रतः ।
ततो मन्त्रं च गृह्णीयात् वस्त्रेणाऽऽच्छाद्य मस्तकम् ॥ ७ ॥

---

१. मंत्रं तेऽहं–ग० ।
२. अचलां भजते–ग० ।
३. लभते ध्रुवम्–ग० ।
४. लभते–ग० ।
५. इयं–ग० ।
६. अन्येद्युः–क० ।
७. अवतिष्ठति–न० ।

दक्षिणां गुरवे दद्यात् सुवर्णं धेनुमेव वा[1]।
सर्वकर्म प्रकुर्वीत [2]वित्तशाठ्यविवर्जितः ॥ ८ ॥

[3]अदक्षिणं कृतं कर्म वृथा विप्रेन्द्रनिश्चितम्।
नारदाय पुरा प्रोक्तं स्वयं विष्णुरतन्द्रितः ॥ ९ ॥

स्वर्णं मे दक्षिणां देहि साक्षसूत्रकमण्डलुम्[4]।
ततो मन्त्रं गृहाण त्वं यथाविधि महामुने ! ॥ १० ॥

विधिहीनं कृतं कर्म [5]सिद्धिं नैव प्रयच्छति।
भूमिभागे समे शुद्धे गोमयेनोपलेपिते ॥ ११ ॥

तत्र शङ्खं प्रतिष्ठाप्य [6]मातृकावपुषि न्यसेत्।
परं ब्रह्मादितः कृत्वा [7]वर्णसङ्घं समुद्धरेत् ॥ १२ ॥

सान्तं [8]मथान्तं मां वह्निं वामत्रिकबिन्दुसंयुतम्।
त्रिभिरेकार्णवीभूतं[9] स्वाहान्तं मन्त्रमुद्धरेत् ॥ १३ ॥

ततो गुरुमुखाल्लब्ध्वा हृदये च निवेशयेत्।
अयुतं च जपं कृत्वा हविष्याशी जितेन्द्रियः ॥ १४ ॥

---

१. च–ग०।
२. किन्तु शाठ्यविवर्जितः–क।
३. यदक्षिणम्–क०।
४. कमण्डलू–ग०।
५. सिद्धं–क० ग०।
६. मातृकावद् ऋषिं–ग०।
७. मन्त्रं हंसं समुद्धरेत्–ग०।
८. युगान्तं–ग०।
९. एकान्तरीभूतं–ग०।
१०. रमे भृगुबिन्दुसंयुतम्–ग०।

दशांशं जुहुयादग्नौ मधुरत्रयसंयुतम् ।
[1]सहस्रं वाऽपि पुष्पाणां वैष्णवानां सुसंयतः ॥ १५ ॥

माणिक्यसाधनार्थं च सहस्रमधिकं जपेत् ।
दशांशं जुहुयात् तस्य [3]जपस्य द्विगुणं स्मृतम्[4] ॥ १६ ॥

[5]तस्य तत्त्वं निबोध त्वं वाह्यमानं महामुने[6] !
[7]शंभोर्मूलाक्षरं ह्यस्य [8]त्रिशक्तिश्चाप्यवस्थिता ॥ १७ ॥

[9]शिवोमन्तं तथा ब्रह्मा चेन्दुबिन्दुस्वरूपवान्[10] ।
एतत् ते कथितं वत्स ! हृदयं मन्त्रमुत्तमम् ॥ १८ ॥

कस्यचिन्न हि वक्तव्यं त्रिषु लोकेषु दुर्लभम् ।
एवं[11] संसाधिते मन्त्रे साधितं भुवनत्रयम् ॥ १९ ॥

कामं कृत्वा जपेन्मन्त्रं शुचिर्भूत्वा जितेन्द्रियः ।
कर्मणा मनसा वाचा कुर्याद् यदभिवाञ्छितम् ॥ २० ॥

[12]तत् तस्य [13]सिद्ध्यति क्षिप्रं यद्यपि स्यात् सुदुष्करम् ।
विष्णुर्ब्रह्मा च रुद्रश्च दुर्गा च सर्वदेवताः ॥ २१ ॥

---

१. भोजयेद् ब्राह्मणानां च–ग० ।
२. शालिका–ग० ।
३. जप्यस्य–ग० ।
४. द्विगुणः स्मृतः–ग० ।
५. बाह्यमान–ग० ।
६. इतोऽग्रे 'तत्त्वमस्य विजानन्ति लभन्ते सुराणतफलम्' इत्यधिकः पाठः–क० ।
७. शम्भो–ग० ।
८. त्रिशक्तिश्च पदे स्थितः–ग० ।
९. स्मरेन्मन्त्रं–ग० ।
१०. समप्रभम्–ग० ।
११. एवं च–ग० ।
१२. तत्तस्थ–ग० ।
१३. सिध्यते–ग० ।

अयं मन्त्रो महामन्त्रः सर्वेषां [1]हृदये स्थितः ।
मन्त्रमेनं समुच्चार्य लभते द्विगुणं फलम् ॥ २२ ॥

पूजनं चास्य मन्त्रस्य यथाकार्यं तथा शृणु ।
अङ्गन्यासकरन्यासौ मन्त्रस्याऽप्यक्षरेण तु ॥ २३ ॥

कृत्वा चाऽष्टदलं पद्मं देवमावाह्य यत्नतः ।
स्थण्डिले वा जले वाऽपि गोपालं पूजयेत् [2]तदा ॥ २४ ॥

ध्यानं चैव प्रवक्ष्यामि गोपालस्य जगद्गुरोः ।
जटिलं द्विभुजं नग्नं नीलोत्पलदलप्रभम् ॥ २५ ॥

बालं षण्मासदेशीयं[3] देवं जानुचलं हरिम् ।
दाम्ना चैवोदरे बद्धं [4]वृक्षावुदूखलेन च ॥ २६ ॥

लीलया कर्षमाणं च तिर्यक्कृतमुदूखलम् ।
यमलार्जुनयोर्मध्ये द्रुतमागत्य लीलया ॥ २७ ॥

मन्त्रेणाऽनेन चोत्पाट्य वृक्षौ द्वौ योजनायतौ ।
दाम्नि वासुकिमारोप्य [5]मन्त्रेणाऽनेन यन्त्रितम् ॥ २८ ॥

उदूखले द्रुतं लग्नं नागराजेन वेष्टितम् ।
समाकृष्य समुत्पाट्य हसन्तं यमलार्जुनौ ॥ २९ ॥

हाहाकारपरैः सर्वैर्गोपगोपीजनैर्वृतम् ।
यशोदया कृतं क्रोडे क्रन्दन्त्याऽऽगत्य सत्वरम् ॥ ३० ॥

---

१. हृदयं–ग० ।
२. तथा–क० ।
३. देहीवं–ग० ।
४. बद्धोदूखलकेन च–ग० ।
५. यन्त्रेणा–ग० ।

सर्वतो जगतो रूपं गोपवेशतिरोहितम् ।
एवं सञ्चिन्त्य गोपालं मायामयमनामयम् ॥ ३१ ॥

पाद्यादिभिः समभ्यर्च्य जपकर्म [1]समापयेत् ।
एभिरेवाऽथवा पूजा कर्तव्या सुरवैरिणः ॥
धूपं दीपं च नैवेद्यं ताम्बूलादिकमर्पयेत् ॥ ३२ ॥

॥ इति सनत्कुमारीये पञ्चमः पटलः ॥ ५ ॥



१. समर्पयेत्–ग० ।

## अथ षष्ठः पटलः

कृष्णाय पदमाभाष्य गोविन्दाय ततः परम् ।
गोपीजनपदस्याऽन्ते वल्लभाय द्विठावधिः ॥ १ ॥

कामबीजादिराख्यातो मनुरष्टादशाक्षरः ।
अष्टादशार्णसंयुक्त उक्तो मन्त्रो यथाविधि ॥ २ ॥

शक्तिश्रीपूर्वकोऽष्टादशार्णो विंशतिवर्णकः ।
स्मरः कृष्णाय ठद्वन्द्वं षड्वर्णो मनुरीरितः ॥ ३ ॥

प्रणवं हृदयं कृष्णं ङेऽन्तमुक्त्वा ततः परम् ।
तादृशं देवकीपुत्रं हुँफट्-स्वाहासमन्वितम् ॥ ४ ॥

षोडशाक्षरमन्त्रोऽयं गोविन्दस्य समीरितः ।
श्रीमन्मुकुन्दचरणं यदेति शरणं ततः ॥ ५ ॥

अहं प्रसन्न इत्युक्तो मौकुन्दोऽष्टादशाक्षरः ।
पञ्चान्तको धरासंस्थो मनुर्बिन्दुविभूषितः ॥ ६ ॥

पिण्डबीजमिदं प्रोक्तं सर्वसिद्धिप्रदायकम् ।
पिण्डं रतिपतेर्बीजं नमो भगवते ततः ॥ ७ ॥

नन्दपुत्राय बालादिवपुषे श्यामलाय च ।
गोपीजनपदस्यान्ते वल्लभाय द्विठावधिः ॥ ८ ॥

अनुष्टुब् मन्त्र आख्यातो गोपालस्य जगत्पतेः ।
गोपालायाऽग्निजायान्तः षडक्षर उदाहृतः ॥ ९ ॥

कृष्णगोविन्दकौ ङेन्तौ सप्तवर्णो मनुर्मतः ।
श्रीशक्तिमाराः कृष्णाय मारः सप्ताक्षरः परः ॥ १० ॥

क्लीं ग्लौं श्रीं श्यामलाङ्गाय नतिः स्याद् दशवर्णकः ।
चक्री वामनसर्गौ च मनुरेकाक्षरः स्मृतः ॥ ११ ॥
काममिन्द्रश्च माया च लवलाञ्छितमस्तकः ।
एकवर्णो मनुः प्रोक्तः काममन्त्रः पुरोदितः ॥ १२ ॥
एतत् सर्वं हृषीकेशं चतुर्थ्यन्तं नमःपदम् ।
अष्टवर्णो मनुः प्रोक्तः सर्वेषां हृदयस्थितः ॥ १३ ॥
वाग्भवं कामबीजं च कृष्णाय सुरसुन्दरी ।
गोविन्दं ङेयुतं चैव रमाबीजमनन्तरम् ॥ १४ ॥
दशाक्षरं ततः पश्चात् स्वबीजं तदनन्तरम् ।
द्वाविंशत्यक्षरो मन्त्रः सर्वसिद्धिप्रदायकः ॥ १५ ॥
कामं मायां च लक्ष्मीं च दशार्णं च ततः परम् ।
त्रयोदशार्णमन्त्रोऽयं प्रोक्तः सर्वसमृद्धिदः ॥ १६ ॥
कामं लक्ष्मीं च मायां च जयकृष्णपदद्वयम् ।
मायां लक्ष्मीं तथा कामं जयं देहि पदद्वयम् ॥ १७ ॥
चतुर्विंशत्यक्षरात्मा स्वाहान्तो मनुरीरितः ।
कामं पिण्डं तथा लक्ष्मीं गोपालाय ततः परम् ॥ १८ ॥
[1]लक्ष्मीं पिण्डं तथा कामं गोविन्दाय पदं तथा ।
कामपिण्डं तथा लक्ष्मीं स्वाहान्तः प्रणवादिकः ॥ १९ ॥

॥ इति सनत्कुमारीये षष्ठः पटलः ॥ ६ ॥



१. इतः पूर्वस्थिताः अष्टादशश्लोकाः न सन्ति–क० ।

# अथ सप्तमः पटलः

क्रमात् पूजाविधिं वक्ष्ये यथावदवधारय ।
नारदोऽस्य ऋषिः प्रोक्तो गायत्रीच्छन्द ईरितम्[1] ॥ १ ॥
देवता कथितः कृष्णः सर्वकामफलप्रदः ।
चतुष्करणवेदाद्रि नेत्रयुग्मा[2]क्षरैः क्रमात् ॥ २ ॥
पञ्चाङ्गानि मनोः कुर्यात् मन्त्रविन्नेत्रवर्जितम् ।
अन्येषामपि मन्त्राणां ऋष्याद्याः पूर्वदेवताः ॥ ३ ॥
अङ्गानि कामबीजेन सनेत्रं दीर्घयुक्तकैः ।
दशाक्षरे विराट् छन्द आचक्राद्यैश्च पञ्चकम् ॥ ४ ॥
पूर्वप्रोक्तानि कर्माणि न्यासादीनि विधानतः ।
कुर्याच्छुद्धमतिर्धीमान् ध्यानमेवं जगत्पतेः ॥ ५ ॥
स्मरेद् वृन्दावने रम्ये मोहयन्तमनारतम्[3] ।
गोविन्दं पुण्डरीकाक्षं गोपकन्याः सहस्रशः ॥ ६ ॥
आत्मनो वदनाम्भोजे[4] प्रेरिताक्षिमधुव्रताः ।
पीडिताः कामबाणेन चिरमाश्लेषणोत्सुकाः ॥ ७ ॥
मुक्ताहारलसत्पीनतुङ्गस्तनभरानताः ।
स्रस्तधम्मि[5]ल्लवसना मदस्खलितभूषणाः ॥ ८ ॥

---

१. उच्यते—ग० ।
२. वर्मा—ग० ।
३. अनारतम्—ग० ।
४. अम्भोज—ग० ।
५. धम्मिल—ग० ।

दन्तपङ्क्तिप्रभोद्भासिस्पन्दमालाधराश्चिताः ।
विलोकयन्तीर्विविधैर्विभ्रमैर्भावगर्वितैः ॥ ९ ॥

फुल्लेन्दीवरकान्तिमिन्दुवदनं बर्हावतंसप्रियं
श्रीवत्साङ्कमुदारकौस्तुभधरं पीताम्बरं सुन्दरम् ।
गोपीनां नयनोत्पलार्चिततनुं गोगोपसङ्घावृतं
गोविन्दं कलवेणुनादनपरं दिव्याङ्गभूषं भजे ॥ १० ॥

एवं ध्यात्वा जपेल्लक्षं पञ्च चाऽष्टादशाक्षरम् ।
अन्येषां लक्षमेकं[1] च दशलक्षं दशार्णकम् ॥ ११ ॥
पूर्वसेवां पुरा कुर्यात् पूर्वोक्तविधिना स्मृतः ।
बालगोपालमन्त्राणां ध्यानं शृणु यथाविधि ॥ १२ ॥
नवीननीरदश्यामं[2] पक्वबिम्बाधरं विभुम् ।
नवनीतं पायसं च धारयन्तं करद्वये ॥ १३ ॥
होमश्चैव तथा कार्यो जपस्यैव दशांशतः ।
सर्पिषा नवनीतेन दध्ना वा पायसेन वा ॥ १४ ॥
[3]मल्लिका-मालती-पुष्पैः शुक्लपद्मेन चैव हि ।
तर्पणं तद्दशांशेन विशुद्धेन जलेन वा[4] ॥ १५ ॥
गन्धपुष्पाक्षतैर्युक्तमभिषेकं च मस्तके ।
ब्राह्मणान् भोजयेच्चैव दशांशक्रमयोगतः ॥ १६ ॥
यद् यदङ्गं भवेद् भङ्गं तत्सङ्ख्याद्विगुणो जपः ।
होमाशक्तौ जपः प्रोक्तो होमसङ्ख्याचतुर्गुणः ॥ १७ ॥

---

१. लक्षमानं च–ग० ।
२. जलद जलद–क० ।
३. हुत्वा मालतिभिः–ग० ।
४. तु–क० ।

विप्राणां क्षत्रियाणां च रससङ्ख्यागुणः[1] स्मृतः ।
वैश्यानां वसुसङ्ख्याकमेषां स्त्रीणामयं विधिः ॥ १८ ॥
यं वर्णमाश्रितः शूद्रः स च तस्य विधिं चरेत् ।
वैश्याश्रितस्य शूद्रस्य दशसङ्ख्यागुणः स्मृतः[2] ॥ १९ ॥
होमार्थोऽयं विधिः प्रोक्तस्तर्पणेऽपि निबोधत[3] ।
तर्पणे द्विगुणं प्रोक्तं[4] शक्तौ च सर्वसाधनम् ॥ २० ॥

॥ इति सनत्कुमारीये जपहोमादिनिर्णयः
सप्तमः पटलः ॥ ७ ॥

---

१. गुणं स्मृतम्–क० ।
२. गुणं स्मृतम्–ग० ।
३. निबोधतम्–ग० ।
४. प्रोक्तमशक्तौ–ग० ।

## अथाष्टमः पटलः

अथ प्रयोगान् वक्ष्यामि यथावदवधारय।
लक्ष्मीप्रसूनैर्जुहुयात् श्रियमिच्छन्ननिन्दिताम्[1] ॥ १ ॥

साज्येनाऽन्नेन जुहुयाद् आज्यान्नस्य समृद्धये।
आरण्यैः कुसुमैर्विप्रान् जातिभिः पृथिवीपतीन् ॥ २ ॥

चम्पकैश्च सितोपेतैर्वैश्यांश्च कमलैः शुभैः।
शूद्रांश्च वशयेन्मन्त्री त्रिमध्वक्तैर्यथाक्रमात् ॥ ३ ॥

एवं हुत्वा द्विजश्रेष्ठः सर्वान् कामानवाप्नुयात्।
ततो भक्त्या श्यामलाङ्गं प्रसन्नं गोकुलश्रियम् ॥ ४ ॥

शिशुवेषधरं देवं किङ्किणीदाममण्डितम्।
स्मृत्वा तं तर्पयेन्मन्त्री दुग्धबुद्ध्या शुभैर्जलैः ॥ ५ ॥

धनधान्यांशुकादीनि प्रीतस्तस्मै ददाति सः।
[3]मालतीकुसुमैर्देवमर्चयित्वा यथाविधि ॥ ६ ॥

आयुरारोग्यमैश्वर्यं मनोऽभीष्टानि विन्दति।
काशप्रसूनैर्जुहुयादष्टोत्तरसहस्रकम् ॥ ७ ॥

नाममात्रेण वशगास्तस्य स्युः सकला नृपाः।
हुत्वा बिल्वफलैः पक्वैः श्रियमाप्नोत्यनिन्दिताम् ॥ ८ ॥
प्रफुल्लैररुणाम्भोजैस्तामेव लभते पुनः।
[4]हुत्वा ज्योतिष्मतीतैलं सहस्रं बहुसङ्ख्यया ॥ ९ ॥

---

१. श्रियमिच्छन्निन्दिताम्–ग० ।
२. सान्नाज्येन–ग० ।
३. हयादि–क० ।
४. जुहुयात्–क० ।

सुभगो जायते सम्यक् सर्वेषां नाऽत्र संशयः ।
विधानेनाऽमुना मन्त्री महारोगात् प्रमुच्यते ॥ १० ॥

अश्वत्थसमिधैर्होमः[1] [2]पराहृतधनावहः ।
आज्याक्तदूर्वाहोमेन मुच्यते महतो भयात् ॥ ११ ॥

यस्य नामयुतं पुण्यं [3]जपेदयुतसङ्ख्यया ।
स भवेद् दासवत् तस्य नात्र कार्या विचारणा ॥ १२ ॥

बहुनाऽत्र किमुक्तेन मनुना साधकोत्तमः ।
साधयेदखिलान् कामान् साक्षाद् विष्णुरिवाऽपरः ॥ १३ ॥

अपुत्रो द्वादशीं प्राप्य पूजयित्वा जगद्गुरुम् ।
'देवकीसुत ! गोविन्द ! वासुदेव ! जगत्पते ! ॥ १४ ॥

देहि मे तनयं देव ! त्वामहं शरणं गतः ।'
इति स्तुत्वा विधानेन पूजयेदावृतिगणान् ॥ १५ ॥

आदावङ्गावृतीः पूज्या दामादि तदनन्तरम् ।
दिक्षु दामसुदामौ [4]च वसुदामश्च किङ्किणी ॥ १६ ॥

रुक्मिण्याद्यष्टमहिषीर्दलेषु पूजयेत् ततः ।
[5]दक्षिणकरधृतकमलारसपूरितमुद्रि [6]तान्यकराः ॥ १७ ॥

---

१. धनेप्सूनां–ग० ।
२. होमो–ग० ।
३. जपेदष्ट च–ग० ।
४. नौवसुद्राः किंकिणीपुटाः–क० ।
५. दक्ष–क० ।
६. पात्रन्यकराः–क० ।

रुक्मिण्याख्या तथा[1] सत्या नागजित्या सुनन्दा च ।
मित्तविन्धा सुलक्षणा [2]ऋक्षजा सुशीला तथा ॥ १८ ॥
ततो यजेद् दलाग्रेषु वसुदेवं च देवकीम् ।
नन्दगोपं यशोदां च बलभद्रं सुभद्रिकाम् ॥ १९ ॥
गोपा गोप्यश्च सम्पूज्याश्चित्रमाल्यानुलेपनाः[3] ।
यथाविधि इमाः पूज्या ब्रह्माद्यास्तदनन्तरम् ॥ २० ॥
इन्द्राद्याः पूजनीयाश्च[4] वज्राद्यास्तदनन्तरम् ।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवीति च ॥ २१ ॥
वाराही च [5]तथेन्द्राणी चामुण्डा सप्तमी तथा ।
अष्टमी स्यान्महालक्ष्मीः प्रोक्ताः स्युर्विश्वमातरः ॥ २२ ॥
इन्द्रादीन् पूजयेद् बाह्ये जातिहेतिसशक्तिकान् ।
वज्रं शक्तिं च दण्डं च खड्गं पाशं तथाऽङ्कुशम् ॥ २३ ॥
[6]गदां शूलं च चक्रं च पद्मं तत्रैव पूजयेत् ।
नैवेद्यं विधिवद् दत्वा देवं ध्यात्वा जपेत् सुधीः ॥ २४ ॥
स्तुत्वा प्रणम्य शिरसा जलेनाऽऽत्मानमर्पयेत् ।
इतः पूर्वं पदं दत्त्वा प्राणबुद्धिपदं ततः ॥ २५ ॥
देहधर्माधिकारतो जाग्रत्स्वप्नपदान्यथ[7] ।
सुषुप्त्यवस्थासु मनसा वाचा कर्मणा तथा ॥ २६ ॥

---

१. सत्यभामा–क० ।
२. सुशीला च–क० ।
३. लेपना–क० ।
४. पूजनीयश्च–क० ।
५. वाराह्यनन्तरेन्द्राणी–क० ।
६. पदाम्–क० ।
७. पदान्यत ख–ग० ।

हस्ताभ्यां च यथा पद्भ्यामुदरेण पदं तथा ।
शिश्ना च यत् स्मृतं चैव यदुक्तं यत् कृतं तथा ॥ २७ ॥

तत् सर्वं ब्रह्मार्पणमतो भवतु वह्निसुन्दरी ।
मां मदीयं च सकलं हरये सम्यक् समर्पयेत् ॥ २८ ॥

ॐ तत्सदिति च प्रोक्तो मन्त्रः स्वात्मसमर्पणे ।
प्रत्यहं पूजयेद् देवं षोडशैरुपचारकैः ॥ २९ ॥

तदशक्तौ तु पूजा स्याद् देशोपचारिकी तथा ।
तदशक्तौ पञ्चभिस्तु पूजा स्यादुपचारकैः ॥ ३० ॥

आसनं स्वागतं चैव पाद्यादिपञ्चकं तथा ।
स्नानं वासो भूषणं च गन्धपुष्पं च धूपकम् ॥ ३१ ॥

प्रदीपं चैव नैवेद्यं पुष्पाञ्जलिरतः परम् ।
गन्धादयो नैवेद्यान्ता पूजा पञ्चोपचारिका ॥ ३२ ॥

अर्घ्याद्याः पञ्च पञ्चैव गन्धाद्या इति भेदतः ।
नमस्कृत्य षडङ्गं च पञ्चाङ्गं च विधानतः ॥ ३३ ॥

देवं विसृज्य हृदये विष्वक्सेनं समर्चयेत् ।
दण्डवत् प्रणिपत्याऽथ गण्डाभ्यां चिबुकेन च ॥ ३४ ॥

नासया च कपालेन मनसा वचसा तथा ।
साष्टाङ्गकः प्रणामः स्यात् हरेः प्रीतिप्रदायकः ॥ ३५ ॥

एतत् सर्वं मयाऽऽख्यातं क्रमेण व्युत्क्रमेण च ।
कथितं यन्न कथितं तत् सर्वं क्रमतः शृणु ॥ ३६ ॥

प्रातः कृत्यमनुप्रदाय विनतिः स्नानं स्वसन्ध्यात्मकं
सङ्कल्पान्तकभूतशुद्धिसकलामालामयं न्यासनम् ।
अन्तर्यागविधिर्बहिर्यजनकं शङ्खादिसंस्थापनं
पीठस्याऽर्चनमङ्गदेवयजनं प्राणप्रतिष्ठा ततः ॥ ३७ ॥

आह्वानं निजमुद्रिकाविरचनं ध्यानं प्रभोः पूजनं
वृत्याऽऽराधनधूपदीपवरनैवेद्यं जपो गुह्यतः ।
जापस्याऽर्पणवायुधारणमतः स्वात्मार्पणं संस्तुति-
र्लभ्यन्ते च विसर्जनं मुररिपोः पूजाक्रमः कीर्तितः ॥ ३८ ॥

सूत्रं चैतत् प्रकथितमनेनाऽऽराधयेदच्युतम् ।
इति नारायणेनैव सूत्रं प्रकथितं पुरा ॥ ३९ ॥

ब्रह्मणे ब्रह्मणा पूर्वं मयि स्नेहात् प्रकाशितम् ।
पुलस्त्यविधिनाऽनेन मया कृष्ण उपासितः ॥ ४० ॥

॥ इति सनत्कुमारीये पूजाविधानं नामाऽष्टमः पटलः ॥ ८ ॥



## अथ नवमः पटलः

पुलस्त्य उवाच

भगवन्! सर्वधर्मज्ञ! कवचं यत् प्रकाशितम्।
त्रैलोक्यमङ्गलं नाम कृपया कथय प्रभो! ॥ १ ॥

सनत्कुमार उवाच

शृणु वक्ष्यामि विप्रेन्द्र! कवचं परमाद्भुतम्।
नारायणेन कथितं कृपया ब्रह्मणे पुरा ॥ २ ॥

ब्रह्मणा कथितं मह्यं परं स्नेहाद् वदामि ते।
अतिगुह्यतरं तत्त्वं ब्रह्ममन्त्रौघविग्रहम् ॥ ३ ॥

यद् धृत्वा पठनाद् ब्रह्मा सृष्टिं वितनुते ध्रुवम्।
यद् धृत्वा पठनात् पाति महालक्ष्मीर्जगत्त्रयम् ॥ ४ ॥

पठनाद् धारणात् शम्भुः संहर्ता सर्वतत्त्ववित्।
त्रैलोक्यजननी दुर्गा महिषादिमहासुरान् ॥ ५ ॥

नरदृप्तान् जघानैव पठनाद् धारणाद् यतः।
एवमिन्द्रादयः सर्वे सर्वैश्वर्यमवाप्नुयुः ॥ ६ ॥

शिष्याय विष्णुभक्ताय साधकाय प्रकाशयेत्।
शठाय परशिष्याय दत्त्वा मृत्युमवाप्नुयात् ॥ ७ ॥

त्रैलोक्यमङ्गलस्याऽस्य कवचस्य प्रजापतिः।
ऋषिः च्छन्दश्च गायत्री देवो नारायणः स्वयम् ॥ ८ ॥

धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः।
प्रणवो मे शिरः पातु नमो नारायणाय च ॥ ९ ॥

भालं पायान्नेत्रयुग्ममष्टार्णो भुक्तिमुक्तिदः ।
क्लीं पायात् श्रोत्रयुग्मं चैकाक्षरः सर्वमोहनः ॥ १० ॥
क्लीं कृष्णाय सदा घ्राणं गोविन्दायेति जिह्विकाम् ।
गोपीजनपदं वल्लभाय स्वाहाऽऽननं मम ॥ ११ ॥
अष्टादशाक्षरो मन्त्रः कण्ठं पातु दशाक्षरः ।
गोपीजनपदं वल्लभाय स्वाहा भुजद्वयम् ॥ १२ ॥
क्लीं ग्लीं क्लीं श्यामलाङ्गाय नमः स्कन्धौ दशाक्षरः ।
क्लीं कृष्ण क्लीं करौ पायात् क्लीं कृष्णाय चाङ्गजोऽवतु ॥ १३ ॥
हृदयं श्रीं क्लीं भुवनेशीं क्लीं कृष्णाय क्लीं स्तनौ मम ।
गोपालायाऽग्निजायान्तं कुक्षियुग्मं सदाऽवतु ॥ १४ ॥
क्लीं कृष्णाय सदा पातु पार्श्वयुग्मं मनूत्तमः ।
कृष्णगोविन्दकौ पातु स्मराद्यौ ङेयुतौ मनुः ॥ १५ ॥
अष्टाक्षरः पातु नाभिं कृष्णेति द्व्यक्षरोऽवतु ।
पृष्ठं क्लीं कृष्ण कङ्कालं क्लीं कृष्णाय द्विठान्तकः ॥ १६ ॥
सक्थिनी सततं पातु श्रीं ह्रीं क्लीं कृष्ण ठद्वयम् ।
ऊरू सप्ताक्षरः पातु त्रयोदशाक्षरोऽवतु ॥ १७ ॥
श्रीं ह्रीं क्लीं पदतो गोपीजनवल्लभदं ततः ।
भायस्वाहेति पायुं वै क्लीं ह्रीं श्रीं दशवर्णकः ॥ १८ ॥
जानुनी च सदा पातु ह्रीं श्रीं क्लीं सदशाक्षरः ।
त्रयोदशाक्षरः पातु जङ्घे चक्रायुधः स्वयम् ॥ १९ ॥
अष्टादशाक्षरो ह्रीं श्रीं पूर्वको विंशवर्णकः ।
सर्वाङ्गं मे सदा पातु द्वारकानायको बली ॥ २० ॥
नमो भगवते पश्चाद् वासुदेवाय तत्परम् ।
ताराद्या द्वादशार्णोऽयं प्राच्यां मां सर्वदाऽवतु ॥ २१ ॥

श्रीं ह्रीं क्लीं दशवर्णं तु क्लीं ह्रीं श्रीं षोडशाक्षरः ।
गदाद्युदायुधो विष्णुर्मामग्नेर्दिशि रक्षतु ॥ २२ ॥
ह्रीं श्रीं दशाक्षरो मन्त्रो दक्षिणे मां सदाऽवतु ।
तारो नमो भगवते रुक्मिणीवल्लभाय च ॥ २३ ॥
स्वाहेति षोडशार्णोऽयं नैर्ऋत्यां दिशि रक्षतु ।
क्लीं हृषीकेशाय नमो मां वारुणेऽवतु ॥ २४ ॥
अष्टादशार्णः कामान्तो वायव्ये मां सदाऽवतु ।
श्रीं मायाकामकृष्णाय गोविन्दाय द्विठो मनुः ॥ २५ ॥
द्वादशाक्षरके विष्णुरुत्तरे मां सदाऽवतु ।
वाग्भवं कामकृष्णाय ह्रीं गोविन्दाय ततः परम् ॥ २६ ॥
श्रीं गोपीजनवल्लभान्ते भायस्वाहेति सौस्ततः ।
द्वाविंशत्यक्षरो मन्त्रो मामैशान्यां सदाऽवतु ॥ २७ ॥
काली यस्य फणामध्ये दिव्यं नृत्यं करोति यः ।
नमामि देवकीपुत्रं नृत्यराजानमच्युतम् ॥ २८ ॥
द्वाविंशत्यक्षरो मन्त्रोऽप्यधो मां सर्वतोऽवतु ।
'कामदेवाय विद्महे पुष्पबाणाय धीमहि ॥ २९ ॥
तन्नोऽनङ्गः प्रचोदयादेष' मां पातु चोर्ध्वतः ।
इति ते कथितं विप्र ! ब्रह्ममन्त्रौघविग्रहम् ॥ ३० ॥
त्रैलोक्यमङ्गलं नाम कवचं ब्रह्मरूपकम् ।
ब्रह्मेशप्रमुखाऽधीशनारायणमुखाऽच्युतम् ॥ ३१ ॥
तव स्नेहान्मयाख्यातं प्रवक्तव्यं न कस्य चित् ।
गुरुं प्रणम्य विधिवत् कवचं प्रपठेत् ततः ॥ ३२ ॥
सकृद् द्विस्त्रिर्यथाज्ञानं सोऽपि सर्वतपोमयः ।
मन्त्रेषु सकलेष्वेव देशिको नाऽत्र संशयः ॥ ३३ ॥

शतमष्टोत्तरं चास्य पुरश्चर्याविधिः स्मृतः ।
हवनादीन् दशांशेन कृत्वा तत् साधयेद् ध्रुवम् ॥ ३४ ॥
यदि स्यात् [1]सिद्धकवचो विष्णुरेव भवेत् स्वयम् ।
मन्त्रसिद्धिर्भवेत् तस्य पुरश्चर्याविधानतः ॥ ३५ ॥
स्पर्धामुद्धूय सततं लक्ष्मीर्वाणी वसेत् सदा ।
पुष्पाञ्जल्यष्टकं दत्त्वा मूलेनैव पठेत् सकृत् ॥ ३६ ॥
दशवर्षसहस्राणां पूजायाः फलमाप्नुयात् ।
भूर्जे विलिख्य गुलिकां स्वर्णस्थां धारयेद् यदि ॥ ३७ ॥
कण्ठे वा दक्षिणे बाहौ सोऽपि विष्णुर्न संशयः ।
अश्वमेधसहस्राणि वाजपेयशतानि च ॥ ३८ ॥
महादानानि यान्येव प्रादक्षिण्यं भुवस्तथा ।
कलां नार्हन्ति तान्येव सकृदुच्चारणात् ततः ॥ ३९ ॥
कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः ।
त्रैलोक्यं क्षोभयत्येव त्रैलोक्यविजयी भवेत् ॥ ४० ॥
इदं कवचमज्ञात्वा भजेद् यः पुरुषोत्तमम् ।
शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥ ४१ ॥

इति सनत्कुमारीये त्रैलोक्यमङ्गलं नाम
नवमः पटलः ॥ ९ ॥



१. सिद्धिं-ग० ।

# अथ दशमः पटलः

पुलस्त्य उवाच

करमालान्तरे माला जपमाला च कथ्यताम् ।

सनत्कुमार उवाच

शृणु वक्ष्यामि विप्रेन्द्र ! माला पृष्टा त्वया हि या ॥ १ ॥

अनामामध्यमारभ्य कनिष्ठादित एव च ।
तर्ज्जनीमूलपर्यन्तं दशपर्वसु सञ्जपेत् ॥ २ ॥
तर्जनी मध्यमा चेति कनिष्ठा चापि ताः क्रमात् ।
तिस्रोऽङ्गुल्यस्त्रिपर्वाः स्युर्मध्यमा चैकपर्विका ॥ ३ ॥
पर्वद्वयं मध्यमाया मेरुत्वेनोपकल्पयेत् ।
क्रमोत्क्रमगतैर्माला मातृकार्णैः सबिन्दुकैः ॥ ४ ॥
क्षमेककैः साष्टवर्गैरन्तर्यजनकर्मणि ।
आदिकचटतपयशला इत्येवं चाष्टवर्गाः ॥ ५ ॥
पद्मबीजादिभिर्माला बहिर्यागे शृणुष्व ताः ।
रुद्राक्ष-शङ्ख-पद्माक्ष-पुत्र-जीवक-मौक्तिकैः ॥ ६ ॥
स्फाटिकैर्मणिरत्नैश्च सौवर्णैर्विद्रुमैस्तथा ।
कुशपत्रैर्द्वादश स्युर्गृहस्थस्याऽक्षमालिका ॥ ७ ॥
अङ्गुलीगणनादेकं रेखयाऽष्टगुणं भवेत् ।
पुत्रजीवैर्दशगुणं शतशङ्खैः सहस्रकम् ॥ ८ ॥
प्रवालैर्मणिरत्नैश्च दशसाहस्रकं स्मृतम् ।
तदेव स्फटिकं प्रोक्तं मौक्तिकैर्लक्षमुच्यते ॥ ९ ॥

कुशग्रन्थ्या कोटिशतं रुद्राक्षं स्यादनन्तकम् ।
तुलसीकाष्ठघटितैर्मालाभिर्जपमालिका ॥ १० ॥
सर्वकर्माणि सर्वेषामीप्सितार्थफलप्रदा ।
अष्टोत्तरशतैर्माला पञ्चाशत्तूत्तराधिकैः ॥ ११ ॥
सप्तविंशतिभिः कार्या सर्वसाधारणे जपे ।
मोक्षार्थी पञ्चविंशत्या धनार्थी त्रिंशता जपेत् ॥ १२ ॥
पुष्ट्यर्थी पञ्चविंशत्या पञ्चदश्याभिचारके ।
मालासङ्ग्रथनं वक्ष्ये यदुक्तं ब्रह्मणा पुरा ॥ १३ ॥
गोपुच्छसदृशी माला यद्वा सर्पाकृतिर्भवेत् ।
मुखं मुखेन संयोज्य पुच्छं पुच्छेन योजयेत् ॥ १४ ॥
सूत्रं विप्रेन्द्रकन्याभिः स्त्रीभिर्वाऽपि विनिर्मितम् ।
त्रिगुणं त्रिगुणीकृत्य तदेव त्रिगुणं तथा ॥ १५ ॥
शुक्लं रक्तं तथा कृष्णं पट्टसूत्रमथापि वा ।
शान्तिवश्याभिचारेषु तथैव मारणेऽपि च ॥ १६ ॥
शुक्लं रक्तं तथा पीतं कृष्णं वर्णेषु च क्रमात् ।
सर्वेषामेव वर्णानां रक्तं सर्वेप्सितप्रदम् ॥ १७ ॥
आश्रमेषु तथाऽप्येवं रक्तं सर्वेषु सिद्धिदम् ।
फलोपचारतः कृष्णमिष्टा तन्त्रानुसारतः ॥ १८ ॥
एकैकं मातृकार्णं तु शतारं प्रजपेत् सुधीः ।
मणिमादाय सूत्रेषु ग्रथनं मध्यमाग्रतः ॥ १९ ॥
मध्यग्रन्थिं विधायेत्थं मेरुं च ग्रन्थियन्त्रितम् ।
ग्रथयित्वा पुरो मालां ततः संस्कारमारभेत् ॥ २० ॥
क्षालयेत् पञ्चगव्यैस्तु सद्योजातेन सज्जलैः ।
चन्दनागरुगन्धाद्यैर्वामदेवेन घर्षयेत् ॥ २१ ॥

धूपयेत् वामघोरेण प्रीणयेत् पुरुषेण तु ।
मन्त्रयेत् पञ्चमेनैव प्रत्येकं तु सकृत् सकृत् ॥ २२ ॥

मेरुं सकृन्मन्त्रयेच्च मनसा च शतं शतम् ।
येन प्रतिष्ठिता माला तयैव तु मनुं जपेत् ॥ २३ ॥

अन्यमन्त्रं जपेद् विद्वान् न कार्या कर्हिचिद् बुधैः ।
सद्योजातं प्रपद्यामि सद्योजाताय वै नमः ॥ २४ ॥

भवे भवेऽनादिभवे भजस्व मां भवोद्भवम् ।
ङेन्तान्तप्रणवाद्येन नमोऽन्तेन क्रमाज्जपेत् ॥ २५ ॥

वामदेवाय नमो ज्येष्ठाय नमः रुद्राय नमः ।
कालाय नमः कलविकरणाय नमो बलप्रमथनाय ॥
सर्वभूतदमनाय मनोन्मनाय नमः ॥ २६ ॥

अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यश्च ।
सर्वतः सर्वेभ्यो नमस्ते रुद्ररूपेभ्यः ॥ २७ ॥

तत्पुरुषाय विद्महे महादेवाय धीमहि
तन्नो रुद्रः प्रचोदयात् ॥ २८ ॥

ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां
ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मणि मे शिवोऽस्तु
सदाशिवोऽम् ॥ २९ ॥

प्रणवाद्यो महामन्त्रः सदाशिवमिति क्रमात् ।
संस्कृत्यैवं बुधो मालां तत्प्राणांस्तत्र योजयेत् ॥ ३० ॥

मूलमन्त्रेण तां मालां पूजयेद् द्विजसत्तमः ।
गुरुं सम्पूज्य तद्धस्तात् गृह्णीयादक्षमालिकाम् ॥ ३१ ॥

न स्पृशेद् वामहस्तेन करभ्रष्टां न कारयेत ।
अङ्गुष्ठं मोक्षदं प्रोक्तं तर्जनी शत्रुनाशिनी ॥ ३२ ॥

मध्यमा धनसिद्धिः स्यात् शान्तिकर्मण्यनामिका ।
कनिष्ठाऽऽकर्षणे ज्ञेया जपकर्मणि सिद्धिदा ॥ ३३ ॥

अङ्गुष्ठपर्वमध्यस्थं परिवर्त्तं समाचरेत् ।
पुरश्चर्यां ततः कुर्यात् स्वयमेव समाहितः ॥ ३४ ॥

गुरुणा स्वानुगेनैव तद्भ्रातृपुत्रकैस्तथा ।
सर्वासु दीक्षितेनैव पुरश्चर्यां समाचरेत् ॥ ३५ ॥

पुलस्त्य उवाच

सङ्कल्पश्च पुरश्चर्याविधानं तत्र कीदृशम् ।
तत् सर्वं कृपया नाथ ! सङ्क्षेपेण प्रकथ्यताम् ॥ ३६ ॥

सनत्कुमार उवाच

प्रणवं तत्सदिति च मासपक्षतिथावपि ।
अमुकोऽमुकगोत्रोऽहं मूलमुच्चार्य तत्परम् ॥ ३७ ॥

सिद्धिकामोऽस्य मन्त्रस्य इयत्सङ्ख्यं जपेत् ततः ।
दशांशं हवनं कुर्याद् दशांशं तर्पणं ततः ॥ ३८ ॥

दशांशं मार्जनं तस्माद् दशांशं विप्रभोजनम् ।
पुरश्चरणमेवं हि करिष्ये प्रागुदङ्मुखः ॥ ३९ ॥

इति सङ्कल्प्य विप्रेन्द्र ! जपयज्ञादिकं चरेत् ।
मन्त्रं च प्रातरारभ्य जपेन्मध्यन्दिनावधि ॥ ४० ॥

इत्यादि विधिनाऽऽलम्ब्य पुरश्चर्यां समाचरेत् ।
अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ॥ ४१ ॥

ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्वमुपोषितः ।
नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः ॥ ४२ ॥

ग्रहणान्मोक्षपर्यन्तं जपेन्मन्त्रं समाहितः ।
दृष्ट्वा स्नात्वा तु सङ्कल्प्य विमोक्षान्तं जपं चरेत् ॥ ४३ ॥

तावज्जपादिकं कुर्याद् ग्रहणान्ते शुचिः पुमान् ।
इति जापान्मन्त्रसिद्धिर्भवत्येव न संशयः ॥ ४४ ॥
श्राद्धादेरनुरोधेन यदि जापं त्यजेन्नरः ।
स भवेद् देवताद्रोही पितॄन् सप्त नयत्यधः ॥ ४५ ॥
मासकृत्यं प्रवक्ष्यामि सावधानोऽवधारय ।
कृष्णभक्तस्य सिद्ध्यर्थं यदुक्तं ब्रह्मणा पुरा ॥ ४६ ॥
तत्तत् सर्वं समासेन वक्ष्येऽहमञ्जसा शृणु ।
पूर्णिमाप्रतिपत्सन्धौ फल्गुन्यां फाल्गुने मुने ॥ ४७ ॥
राजोपचारैः सम्पूज्य दोलयेद् यो जनार्दनम्[1] ।
अश्वमेधसहस्रस्य वाजपेयशतस्य च ॥ ४८ ॥
गोसहस्रप्रदानस्य फलं प्राप्नोति मानवः ।
दक्षिणाभिमुखं कृष्णं दोलमानश्च सन्नरः ॥ ४९ ॥
दृष्ट्वाऽपराधनिचयैर्मुक्तास्ते नाऽत्र संशयः ।
दोलारूढस्य कृष्णस्य येऽग्रे कुर्वन्ति जागरम् ॥ ५० ॥
सर्वपुण्यफलावाप्तिं निमेषाल्लभते नरः ।
ततो विधिं प्रवक्ष्यामि यत्र यत्तु समाचरेत् ॥ ५१ ॥
पौर्णमास्यां महत्पूजा सङ्क्रौ[2] च दोलयेत् प्रभुः ।
त्रयोदशाक्षरेणैव अष्टादशाक्षरेण वा ॥ ५२ ॥
फल्गुन्यां च प्रकर्त्तव्या पूजा पूर्वोक्तवर्त्मना ।
उत्थाय मन्त्रं जप्तव्यमष्टाधिकसहस्रकम् ॥ ५३ ॥
सूत्रं चैतत् प्रकथितं विस्तरेण शृणुष्व मे ।
रेवत्यां तु वास्तुबलिं मण्डलं रचयेत् सुधीः ॥ ५४ ॥

१. जनार्धनं–क० ।
२. सङ्कोच–क० ।

दिक्षु ध्वजान् समारोप्य लोकपालसमप्रभान् ।
गोविन्दं फलकाधस्ताद् दोलारूढं जगत्पतिम् ॥ ५५ ॥

पूजयेद् विधिवद् भक्त्या मण्डले च समाहितः ।
ऋग्यजुःसामसूक्तैश्च मन्त्रैः पौराणिकैस्तथा ॥ ५६ ॥

मन्त्रैरागमिकैश्चैव वैष्णवैः पूजयेद्धरिम् ।
तद्गुणोत्कीर्त्तनं चैव दिवारात्रिं नयेद् बुधः ॥ ५७ ॥

केशवाग्रे नृत्यगीतं यः करोति कलौ युगे ।
अपराधसहस्रैस्तैर्मुक्तः स्यान्नात्र संशयः ॥ ५८ ॥

कर्मान्तरं प्रवक्ष्यामि येन विष्णुः प्रसीदति ।
ब्रह्मणा कथितं पूर्वं प्रतिष्ठाविधिनिर्णयम् ॥ ५९ ॥

गृहस्य भगवद्विष्णोः सावधानोऽवधारय ।
तृणैस्तृणध्वजैश्चैव मन्दिरं निर्मितं शुचिः ॥ ६० ॥

विधिनाऽनेन यो दद्याद् विष्णवे मनुजोत्तमः ।
कोट्यब्दशतसङ्ख्यानि विष्णुलोके भवेद्ध्रुवम् ॥ ६१ ॥

मन्दिरं दारवं चित्रं वासुदेवाय यो ददेत् ।
युगानामयुतं तत्र निवसेत् सत्यमीरितम् ॥ ६२ ॥

इष्टकैर्विविधैश्चित्रं वासुदेवाय यो जनः ।
तत्रानुसङ्ख्यकान् कल्पान् विष्णुलोके वसेत् सदा ॥ ६३ ॥

पाषाणैर्मन्दिरं चित्रं वासुदेवाय यो नरः ।
प्रदद्याद् विधिवद् भक्त्या प्रोक्तं शतगुणं ततः ॥ ६४ ॥

पुलस्त्य उवाच

केन वा विधिना नाथ ! प्रदद्यान्मन्दिरं बुधः
मोक्षप्रदाय कृष्णाय क्रमशः कथ्यतां प्रभो ! ॥ ६५ ॥

सनत्कुमार उवाच

आदौ वास्तुबलिं दत्त्वा लोकेशाऽनुध्वजेषु च ।
उक्तवर्णेषु गन्धाद्यैर्मूलपारिषदान्वितान् ॥ ६६ ॥
हेतिजात्यधिपोपेतान् पूर्वदिक्क्रमतो यजेत् ।
वज्रादीन् तन्त्रकुम्भेषु गन्धाद्यैस्तत्क्रमाद् यजेत् ॥ ६७ ॥
ततन्मण्डपतः पूर्वे यागमन्दिरमाचरेत् ।
तत्त्रिभागमिते क्षेत्रेऽरत्निमात्रसमुन्नताम् ॥ ६८ ॥
वेदिं कृत्वा तु तत्रैव सर्वतोभद्रमालिखेत् ।
प्रधानमन्दिरे चापि सर्वतोभद्रमण्डलम् ॥ ६९ ॥
विधाय पूजयेत् तत्र तोरणेषु समाहितः ।
जयं च विजयं चैव विघ्नेशं क्षेत्रनायकम् ॥ ७० ॥
गङ्गां च यमुनां चैव महालक्ष्मीं सरस्वतीम् ।
पूर्वदिक्क्रमतो युग्मं क्रमशो गन्धपूर्वकैः ॥ ७१ ॥
सम्पूज्य विधिवद् भक्त्या गन्धपुष्पैश्च धूपकैः ।
ततो गृहं प्रविश्याऽथ वास्त्वीशमजमर्चयेत् ॥ ७२ ॥
पञ्चगव्याऽर्घ्यतोयाभ्यां प्रोक्षयेन्मण्डलं ततः ।
निरस्य विघ्नान् तत्रैव बद्धपद्मासनो भवेत् ॥ ७३ ॥
पूर्वोक्तेनैव विधिना भूतशुद्ध्यादिकं चरेत् ।
अर्घ्यपात्रं ततः कृत्वा मण्डले पीठमर्चयेत् ॥ ७४ ॥
प्रतिमां वासुदेवाख्यां तत्र संस्थापयेद् बुधः ।
हृत्पद्मे देवमाराध्य गन्धाद्यैर्मानसैर्यजेत् ॥ ७५ ॥
करस्थकुसुमे तेजः समानीय श्वासमार्गतः ।
मूर्त्तौ तस्यां समारोप्य तत् तेजोमूलमन्त्रतः ॥ ७६ ॥
हृदये करमादाय जीवन्यासं समाचरेत् ।
मायापाशाङ्कुशाद्यन्ता यादीन् सप्तसबिन्दुकान् ॥ ७७ ॥

वियत्सत्येन्दुसंयुक्तं समस्तेऽहं समुच्चरेत् ।
तस्य प्राणा इह प्राणाः पुनर्जीव इह स्थितः ॥ ७८ ॥

पुनरुच्चार्य तस्यैव सर्वेन्द्रियाणि पुनर्वदेत् ।
तस्यापि वाङ्मनश्चक्षुःश्रोत्रघ्राणपदान्यथ ॥ ७९ ॥

प्राणा इहाऽऽगत्य सुखं चिरं तिष्ठन्तु ठद्वयम् ।
इति प्राणान् प्रतिष्ठाप्य देवमावाह्य पूर्ववत् ।
करकच्छपिकां कृत्वा ततो ध्यायेदनन्यधीः ॥ ८० ॥

विष्णुं शारदकोटिचन्द्रसदृशं शङ्खं रथाङ्गं गदा-
मम्भोजं दधतं सिताब्जनिलयं कान्त्या जगन्मोहनम् ।
आबद्धाङ्गदहारकुण्डलमहामौलिं स्फुरत्कङ्कणं
श्रीवत्साङ्कमुदारकौस्तुभधरं वन्दे मुनीन्द्रैः स्तुतम् ॥ ८१ ॥

इति ध्यात्वा जपेन्मन्त्रं राजोपचारवत् सुधीः ।
तारोहृद्भगवन् ङेन्तो वासुदेवाय तत्परम् ॥ ८२ ॥

सर्वेषु विष्णुमन्त्रेषु प्रधानमनुरीरितः ।
मनुनाऽनेन तत्सर्वानासनादीन् प्रदापयेत् ॥ ८३ ॥

आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ।
मधुपर्काऽऽचमनस्नानं वसनाऽऽभरणानि च ॥ ८४ ॥

गन्धपुष्पधूपदीपनैवेद्याचमनं तथा ।
प्रदक्षिणं नमस्कारो विसर्गश्चैव षोडश ॥ ८५ ॥

छायामण्डलमागत्य मण्डले पूर्ववद्धरिम् ।
अभ्यर्च्य जुहुयाद् वन्हौ संस्कृते पूर्ववर्त्मना ॥ ८६ ॥

शतमष्टोत्तरं हुत्वा मनुनाऽनेन वैष्णवः ।
पुनर्यजेद् देवताग्रे ततः पारिषदान् यजेत् ॥ ८७ ॥

प्रथमाऽऽवृत्तिरङ्गैः स्याद् वासुदेवादिभिः परा ।
शान्त्यादिशक्तिसहितैः परा द्वादशमूर्त्तिभिः ॥ ८८ ॥

चतुर्थी सुरनाथाद्यैर्वज्राद्यैः पञ्चमी मता ।
एवं सम्पूजितो विष्णुः प्रसीदत्येव सत्वरम् ॥ ८९ ॥

तारेण हृदयं प्रोक्तं नमसा शिर ईरितम् ।
चतुर्वर्णैः शिखा प्रोक्ता पञ्चार्णैः कवचं मतम् ॥ ९० ॥

समस्तेन भवेदस्त्रमङ्गकल्पनमीरितम् ।
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चाऽनिरुद्धकः ॥ ९१ ॥

शङ्खचक्रगदाम्भोजधरा एते चतुर्भुजाः ।
ततश्च मन्दिरं दद्यान्मनुनाऽनेन मानवः ॥ ९२ ॥

पुण्यात्मा वैष्णवश्रेष्ठः स देवो न तु मानवः ।
कृत्वैवं कृतकृत्यः स्यात् सत्यं सत्यं न संशयः[1] ॥ ९३ ॥

ऋग्यजुःसामसूक्तैश्च स्मार्तैः पौराणिकैरपि ।
मन्त्रैरागमिकैश्चैव वैष्णवैः कीर्तयेद्धरिम् ॥ ९४ ॥

दर्पणं चामरं छत्रं व्यञ्जनं च पृथक् पृथक् ।
दत्त्वा च मनुनाऽनेन प्राणायामं ततश्चरेत् ॥ ९५ ॥

शतमष्टोत्तरं जप्त्वा पूर्णां दद्यात् ततः परम् ।
गायत्र्या मूलमन्त्रेण स्वाहान्तेन द्विजोत्तमः[2] ॥ ९६ ॥

पूर्णाहुतिं ततः कृत्वा विसर्जनमतः परम् ।
ऋत्विग्भ्यो दक्षिणां दत्त्वा भोजयेच्च द्विजोत्तमान्[3] ॥ ९७ ॥

---

१. न संशयः—ग० ।

२. द्विजोत्तम—ख० ।

३. द्विजपुङ्गवान्—ख० ।

एवं कृत्वा तु पुण्यात्मा साक्षान्नारायणो भवेत् ।
गृहादीनां च दानेषु ब्राह्मणः क्षत्रियस्तथा ।
वैश्यश्च पादजश्चैव सर्वेऽप्यत्राऽधिकारिणः ॥ ९८ ॥

॥ इति [1]सनत्कुमारीये मालानिर्णयो नाम दशमः पटलः ॥ १० ॥

१. सानत्कौमारीये-क० ।

# अथैकादशः पटलः

ततो दीक्षाविधिं वक्ष्ये यथावदवधारय।
क्रियावती कलावती वर्णात्मा वेदमप्ययपि ॥ १ ॥

[1]पञ्चायतनदीक्षायां[2] सर्वदीक्षोत्तमोत्तमा।
[3]पितृमातृकृतं नाम [4]त्यक्त्वायुर्वर्णवर्णकान् ॥ २ ॥

संसृष्टिमन्त्रतो विद्वान् चक्रेषु गणयेत् क्रमात्।
आषाढो [5]निन्दितो ज्येष्ठः[6] पौषो भाद्रपदस्तथा ॥ ३ ॥

मासेष्वनिन्दितेष्वेव दीक्षोक्ता ग्रहणे शुभा[7]।
पुरुषार्थसमावाप्त्यै स शिष्यो गुरुमाश्रयेत् ॥ ४ ॥

मातृतः पितृतः शुद्धः शुद्धभावो जितेन्द्रियः।
सर्वागमानां सारज्ञः सर्वशास्त्रार्थतत्त्ववित् ॥ ५ ॥

परोपकारनिरतः [8]पूजाजपपरायणः।
अमोघवचनः शान्तो वेदवेदाङ्गपारगः ॥ ६ ॥

---

१. पंञ्चायतनी–क० ।
२. स्यात्–क० ।
३. मातृपितृ–ख० ।
४. त्वायुवर्णवर्णकान्–ख० ।
५. निन्दित–ख० ।
६. ज्येष्ठे–ख० ।
७. शुभम्–ख० ।
८. निरतो जपपूजातितत्पर:–ख० ।

योगमार्गानुसन्धायी[1] देवताहृदयङ्गमः ।
इत्यादिगुणसम्पन्नो गुरुर्भवति [2]मानवः ॥ ७ ॥

शिष्यः कुलीनः शुद्धात्मा पुरुषार्थपरायणः ।
अधीतवेदः कुशलो दूरमुक्तमनोभवः ॥ ८ ॥

हितैषी प्राणिनां नित्यमास्तिकस्त्यक्तनास्तिकः ।
स्वधर्मनिरतो नित्यं पितृमातृहिते रतः ॥ ९ ॥

वाङ्मनःकायकृतिभिर्गुरुशुश्रूषणोद्यतः ।
एभिरेव गुणैर्युक्तः [3]शिष्यो भवति नाऽपरः ॥ १० ॥

द्वादशेषु च मासेषु यान्येव शुभदानि च ।
दिनानि तानि विप्रेन्द्र ! सावधानाऽवधारय ॥ ११ ॥

चैत्रे त्रयोदशी शुक्ला वैशाखैकादशी सिता ।
ज्येष्ठे च दशमी कृष्णा [4]चाऽऽषाढे नागपञ्चमी ॥ १२ ॥

श्रावणे [5]द्वादशी भाद्रे रोहिणीसहिताऽष्टमी ।
आश्विने च महापुण्या महाष्टम्यप्यभीष्टदा ॥ १३ ॥

कार्त्तिके पूर्णिमा शुक्ला मार्गशीर्षे सिता तथा ।
षष्ठी चतुर्दशी पौषे माघेऽप्येकादशी सिता ॥ १४ ॥

फाल्गुने च सिता षष्ठी चेति कालविनिर्णयः ।
प्रशस्तास्तिथयः पुण्याः सिद्धिदाः श्रूयतां बुधः ॥ १५ ॥

---

१. योगमार्गानुसंधानी–ख० ।

२. जन्मतः–ख०

३. नान्यो भवति वापरः–ख० ।

४. आषाढ़े–क० ।

५. श्रावणैकादशी–ख० ।

६. इतः परं नास्ति–ख० ।

पञ्चमी सप्तमी षष्ठी पूर्णिमा च सिता तथा ।
त्रयोदशी तु दशमी प्रशस्ता सर्वकर्मणि ॥ १६ ॥
एकादशी सिता कृष्णा प्रशस्ता कीर्तिता बुधैः ।
अश्विनी श्रवणाऽऽर्द्रा च रेवती चोत्तरात्रयम् ॥ १७ ॥
पुष्या शतभिषा चैव दीक्षादिषु प्रकीर्त्तिता ।
अथ योगं प्रवक्ष्यामि साधकानां हिताय च ॥ १८ ॥
ऐक्यं जीवात्मनोराहुर्योगं योगविशारदाः ।
शिवात्मनोरभेदेन प्रतिपत्तिं परे विदुः ॥ १९ ॥
कामक्रोधौ लोभमोहौ तत्परं मदमत्सरौ ।
वदन्ति विषमानेतान् विषमं दुर्गमात्मनः ॥ २० ॥
इडया कर्षयेद् वायुं बाह्यं षोडशमात्रया ।
मध्यमा कुम्भयेद् वायुं विद्यया मात्रया शनैः ॥ २१ ॥
नाड्या पिङ्गलया चैनं रेचयेद् योगवित्तमः ।
प्राणायाममिदं प्राहुर्योगशास्त्रविशारदाः ॥ २२ ॥
भूयो भूयः समाक्रम्य अभ्यासेन समाचरेत् ।
सनत्कुमारतन्त्रं तत् सम्भूतं मुनिपुङ्गवात् ॥ २३ ॥
सनत्कुमारात् सारं च तन्त्राणां ब्रह्मभावनात् ।
यः पठेच्छृणुयाद् वाऽपि सोऽपि पुण्यवतां वरः ॥ २४ ॥
पुस्तकं लिखितं यस्य गृहे तिष्ठति नित्यशः ।
लक्ष्मीस्तस्य गृहं साक्षात् त्रिसन्ध्यं न विमुञ्चति ॥ २५ ॥

॥ इति सनत्कुमारतन्त्रे सनत्कुमारपुलस्त्यसंवादे श्रीगोपालपूजाप्रयोगविधानं नामैकादशः पटलः ॥ ११ ॥



# भूतशुद्धितन्त्रे

## थमः पटलः

श्रीदेवी उवाच

देवदेव महादेव साम्प्रतं कथय प्रभो ! ।
भूतशुद्धिं देहशुद्धिं प्राणायामं ततः परम् ॥ १ ॥

क्रमेण कथ्यतां देव शूलपाणे पिणाकधृक् ।
मन्त्रं यन्त्रं महादेव येन शुध्यति भूतले ॥ २ ॥

श्रीईश्वर उवाच

कथयामि वरारोहे खञ्जनाक्षि शुचिस्मिते ।
तत्त्वत्रयं प्रवक्ष्यामि गुह्याद् गुह्यतरं महत् ॥ ३ ॥

तत्त्वत्रयं विना देवि ! सिद्धिविद्यां जपेत् तु यः ।
तस्य सर्वार्थहानिः स्याज्जपं च विफलं प्रिये ॥ ४ ॥

भूतशुद्धिं महेशानि ! न्यासं परमदुलभम् ।
प्राणायामं ततः कुर्यात् तत्त्वत्रयमिदं स्मृतम् ॥ ५ ॥

सर्वं कुर्यान्महेशानि ! मातृकाक्षरसंयुतम् ।
अकारादिक्षकारान्तां मातृकाक्षररूपिणीम् ॥ ६ ॥

वैदिकं तान्त्रिकं स्नानं कृत्वा सन्ध्यामुपाश्रयेत् ।
आगत्य देवदेवेशि ! यागमण्डलसन्निधिम् ॥ ७ ॥

अन्तःस्नानं ततः कृत्वा अन्तःसन्ध्यामुपाश्रयेत् ।
अन्तःस्नानं च सन्ध्यां च कथयामि शृणु प्रिये ! ॥ ८ ॥

गुरुध्यानं प्रथमतस्ततः स्नानं समाचरेत् ।
प्रणवेन महेशानि ! जीवं धृत्वा शुचिस्मिते ॥ ९ ॥
मूलाधारात् समाकृष्य द्वादशार्णं नयेत् सुधीः ।
स्नायाच्च विमले तीर्थे पुष्करे हृदयान्विते ॥ १० ॥
मूलाधारात् महेशानि सह स्वदलमानयेत् ।
सङ्गं परशिवे कृत्वा आनन्द उपजायते ॥ ११ ॥
तेनानन्देन देवेशि स्नायाज्जीवमनाहते ।
ततस्तु परमेशानि अजपां प्राणरूपिणीम् ॥ १२ ॥
अष्टोत्तरशतं जप्त्वा स्नातो भवति पार्वति ! ।
अन्तःसन्ध्यां महेशानि ! कुरु यत्नेन पार्वति ॥ १३ ॥
शिवशक्तिसमायोगो यस्मिन् काले प्रजायते ।
सा सन्ध्या कुलसाधूनां समाधिस्थः प्रतीयते ॥ १४ ॥
एवं तु ते महेशानि ! सन्ध्यापूतो भवेद् ध्रुवम् ।

श्रीदेवी उवाच

अजपां परमेशान ! कथ्यतां मे दयानिधे ! ॥ १५ ॥

श्रीईश्वर उवाच

शृणु वक्ष्यामि देवेशि ! गुह्याद् गुह्यतरं प्रिये ।
ध्यानमस्याः प्रवक्ष्यामि यथा ध्यात्वा जपेन्नरः ॥ १६ ॥
'हंसं नित्यमनन्तमक्षयगुणं स्वाभावतो निर्गता
यान्ती स्वाश्रयमर्ककोटिरुचिरा ध्येया जगन्मोहिनी'
इति ध्यानं महेशानि कृत्वा समारभेत् जपम् ।
षट्चक्रं मध्यगं कृत्वा अजपां परमाक्षराम् ॥ १७ ॥
शिवबीजं समुद्धृत्य भृगुबीजं ततः परम् ।
बिन्द्वर्द्धं चन्द्रसंयुक्तं कुरु यत्नेन सुन्दरि ! ॥ १८ ॥

एषा विद्या वरारोहे ! चातुर्वर्णेषु शस्यते ।
एतज्जपं विना देवि भूतशुद्धिश्च निष्फला ॥ १९ ॥

तस्मादादौ जपेद् विद्यामजपां प्राणरूपिणीम् ।
अष्टोत्तरशतं जप्त्वा भूतशुद्धिं समाचरेत् ॥ २० ॥

षट्चक्रदलसंस्थाने यानि वर्णानि पार्वति ! ।
तानि सर्वाणि देवेशि जीवं संन्यस्य पार्वति ॥ २१ ॥

भूतशुद्धिं महेशानि यत्नतः समुपास्महे ।
मूलाधारान्महेशानि ! मूलपद्मं शुचिस्मिते ॥ २२ ॥

चतुर्दलयुतं मूलं दशवर्णेन संयुतम् ।
रक्तवर्णं सदा सेव्यं योगिभिः परमेश्वरि ! ॥ २३ ॥

त्रिकोणं सुन्दरं शुद्धं पृथ्वीबीजं तु मध्यगम् ।
तन्मध्ये भावयेद् देवं शिवं श्यामलसुन्दरम् ॥ २४ ॥

अत्र कुण्डलिनी देवि परं प्रकृतिरूपिणी ।
शिवं वेष्ट्य महेशानि ! सर्वदा तत्र तिष्ठति ॥ २५ ॥

प्रसुप्तभुजगाकारं विद्युत्कोटिनिभां पराम् ।
ब्रह्मविष्णुस्तुतां देवीं कुण्डलीं ब्रह्मरूपिणीम् ॥ २६ ॥

मूलाधारे मनो देवि विन्यस्य भावयेत् सदा ।
चतुर्दलयुतं वर्णं तारणं विघ्ननाशनम् ॥ २७ ॥

बिन्द्वर्धसंयुतं कृत्वा दशधा प्रजपेत् ततः ।
अजपानां महेशानि ! चतुर्दलगतं कुरु ॥ २८ ॥

स्वाधिष्ठाने ततो नीत्वा पुष्पहंससमन्वितम् ।
तत्पुरीं च महेशानि ! नीरेण परिपूरितम् ॥ २९ ॥

मूलाधारं यथा पृथ्व्या शोभते परमेश्वरि ।
नीरेण शोभितं देवि ! स्वाधिष्ठानं शुचिस्मिते ॥ ३० ॥

षडङ्गविद्युदाधारं षडक्षरसमन्वितम् ।
व-भ-म-य-र-लैर्युक्तं कुन्दपुष्पसमन्वितम् ॥ ३१ ॥
स्वाधिष्ठानस्थितं देवि शिवं सर्वज्ञभावनम् ।
मूलाधारात् समुत्थाप्य कुण्डलीं ब्रह्मरूपिणीम् ॥ ३२ ॥
नीत्वा मणिपुरं देवि ! तद्वर्णं जपमाचरेत् ।
बिन्द्वर्धसंयुतं कृत्वा शोभितं शिवमर्चयेत् ॥ ३३ ॥
तत्रैव परमेशानि ! षडक्षरजपं कुरु ।
षट्पापं नाशयेद् देवि ! तत्क्षणात् परमेश्वरि ! ।
षड्दलं षड्गुणं देवि ! गुदं च चतुरङ्गुलम् ॥ ३४ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरगौरीसंवादे प्रथमः पटलः ॥ १ ॥

# अथ द्वितीयः पटलः

ततस्तु परमेशानि ! मणिपूरं विभिद्यते ।
वायुं च तत्र वै नीत्वा मनसा परमेश्वरि ॥ १ ॥

समानं संयुतं कुर्यादपानं परमेश्वरि ! ।
ततो ब्रह्मनदीं भित्त्वा वायुर्मणिपुरं ययौ ॥ २ ॥

तत्रस्थं शिवलिङ्गं तु नीलनीरदसन्निभम् ।
तत्पात्रं कृष्णवर्णं च अक्षरं कृष्णरूपकम् ॥ ३ ॥

तन्मध्यस्थं महादेवं सर्वदेवादिकारणम् ।
मणिपूरं महेशानि ! महामरकतप्रभम् ॥ ४ ॥

शिवं सम्भाव्य देवेशि ! दशवर्णं मनुं जपेत् ।
डकारादिफकारान्तं बिन्द्वर्धसंयुतं कुरु ॥ ५ ॥

दशपत्रस्थितं वर्णं पूर्वादिक्रमतो जपेत् ।
दशपत्रं कृष्णवर्णं अक्षरं कृष्णरूपकम् ॥ ६ ॥

तन्मध्यस्थं महादेवं सर्वदेवादिकारणम् ।
दशाक्षरजपाद् देवि दशजन्माघनाशदम् ॥ ७ ॥

ततो वायुर्महेशानि ! अनाहतपुरीं ययौ ।
आदित्यपत्रसंयुक्तं वर्णैर्द्वादशभिर्युतम् ॥ ८ ॥

तत्पत्रं परमेशानि ! वर्णं च शुक्लरूपकम् ।
कादिठान्ताक्षरैर्वर्णैः शोभितं परमाक्षरम् ॥ ९ ॥

हृत्पद्मं परमेशानि शुद्धसत्त्वात्मकं सदा ।
प्रदीपकलिकाकारं तन्मध्ये ब्रह्मरूपिणम् ॥ १० ॥

वेष्टितं द्वादशवर्णैः सर्वशक्तिमयं प्रिये ।
सम्मुखे तस्य देवेशि ! जीवस्तिष्ठति सर्वदा ॥ ११ ॥

तत्र जीवो महेशानि सदा तिष्ठति पार्वति ! ।
वायुं तेजोयुतं जीवं दृष्ट्वा मनोलयं कुरु ॥ १२ ॥

आत्मरूपं वायुरूपं निरीहं निर्मलं सदा ।
यकारस्याष्टसंबीजं जीवं हेमप्रभं सदा ॥ १३ ॥

तत्रादित्याक्षरं देवि बिन्द्वर्धसंयुतं कुरु ।
कृत्वा जपं महेशानि ! यत्नेन कुरु सुन्दरि ॥ १४ ॥

जन्मभिश्च द्वादशभिर्देवि यत् [कृतम्] पापमर्जितम् ।
तत्सर्वं नाशयत्येव तत्क्षणात् परमेश्वरि ॥ १५ ॥

एवं हि मरुतो भित्त्वा विशुद्धं प्रतिगच्छति ।
विशुद्धं निर्मलं शुद्धं षोडशस्वरसंयुतम् ॥ १६ ॥

धूम्रवर्णं महेशानि ! विशुद्धाख्यं मनोहरम् ।
तस्य मध्ये स्थितं देवि आकाशं शक्तिरूपिणम् ॥ १७ ॥

क्रमाज्जीवं कुण्डलिन्या प्रणवेण समाहरेत् ।
मनस्तत्र महेशानि ! सारथिः सर्वतः सदा ॥ १८ ॥

सर्वं मनसि कर्त्तव्यं भूतशुद्ध्यादिकं प्रिये ! ।
स्वरं च षोडशं देवि बिन्द्वर्धसंयुतं कुरु ॥ १९ ॥

ततस्तु परमेशानि ! जपेत् षोडशमक्षरम् ।
पूर्वादिक्रमतो देवि दशधा प्रजपेत् प्रिये ॥ २० ॥

जन्मभिः षोडशभिर्यत् तु (कृतं) पापं शुभाशुभम् ।
दहेत् तस्य जपाद् देवि तूर्णं वह्निर्यथा दहेत् ॥ २१ ॥

ततो वायुं महेशानि ! द्रुतमाज्ञापुरीं नयेत् ।
तत्पुरीं परमेशानि द्विदलं युगवर्णकम् ॥ २२ ॥

वर्णं हेमप्रभं देवि ! पुरीं चन्द्रप्रभं सदा ।
बिन्द्वर्धसंयुतं कृत्वा साधको जपमाचरेत् ॥ २३ ॥
मनःसारथिना देवि ! जीवं कुण्डलिनीं प्रिये ।
आज्ञां पुरीं नयेत् शीघ्रं मनो मनसि भावनम् ॥ २४ ॥
मनसः परमेशानि ! आज्ञापुर्यां स्थितिः सदा ।
गुरोराज्ञाधारणात् तु आज्ञापुरमिमं स्मृतम् ॥ २५ ॥
सदाशिवपुरद्वारं गवाक्षं परमेश्वरि ! ।
एवं प्रपञ्चं भित्त्वा वै कुण्डलीं जीवसंयुताम् ॥ २६ ॥
मनःसारथिना देवि सदाशिवपुरं नयेत् ।
पञ्चप्राणसमायुक्ता चतुर्विंशतिसंयुता ॥ २७ ॥
इन्द्रियाणि दशैकं च महाभूतानि पञ्च च ।
बुद्ध्यहङ्कारचित्तानि नयेत् शिवपुरं प्रति ॥ २८ ॥
सहस्रारे ततो नीत्वा मनसा योजयेत् सदा ।

श्रीदेवी उवाच

तत्र गत्वा महेशान कुण्डली किमकरोत् प्रभो ॥ २९ ॥

श्रीईश्वर उवाच

चतुर्विंशतितत्त्वेन पञ्चप्राणेन सुन्दरि ।
इन्द्रियैरक्षरैर्देवि ! एकत्वं जायते यदा ॥ ३० ॥
तत्र देवि महेशानि कुण्डलीं भावतत्पराम् ।
पूर्वोक्तध्यानमार्गेण परां तत्र विभावयेत् ।
सर्वात्मसम्पुटं देवि ! सर्वविद्याभिधारणम् ॥ ३१ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरगौरीसंवादे द्वितीयः पटलः ॥ २ ॥

# अथ तृतीयः पटलः

श्रीईश्वर उवाच

शृणु पार्वति ! वक्ष्यामि रहस्यं परमाद्भुतम् ।
गुह्याद् गुह्यतरं देवि सुगोप्यं भुवनत्रये ॥ १ ॥
ब्रह्मरन्ध्रे सहस्रारे यत्र देवः सदाशिवः ।
संवेष्ट्य परमा देवी यत्रास्ते परमेश्वरि ! ॥ २ ॥
कुण्डलीं योजयेत् तत्र एकत्वं जायते तदा ।
अकारादिक्षकारान्ताः सर्वबीजे नियोजयेत् ॥ ३ ॥
आदौ मनसि देवेशि ! प्राणविद्यां वरानने ।
प्रजप्य दशधा देवि ! कुण्डलीं परमां व्रजेत् ॥ ४ ॥
पुरीं शक्तिमयीं देवि नित्यानन्दमयं सदा ।
सहस्रदलसंयुक्तं पद्मं नित्यागमं प्रिये ॥ ५ ॥
पद्ममध्ये महेशानि ! पुरीं शक्तिमयीं प्रिये ।
सदाशिवो महेशानि ! यत्रास्ते परमेश्वरि ॥ ६ ॥
शुद्धतत्त्वादिकं देवं निर्मलं निश्चलं सदा ।
शिवं प्राप्य महेशानि ! कुण्डली शिवसन्निधौ ॥ ७ ॥
शिवस्य मुखपद्मं हि चुचुम्बे कुण्डली प्रिये ।
सर्वत्र सम्पुटं दत्त्वा मोहयेत् परमं शिवम् ॥ ८ ॥
सदाशिवः शिवस्तत्र शान्तो भवति सुप्रिये ।
पद्ममध्ये स्थितं देवं निरीहं शवरूपवत् ॥ ९ ॥
शवरूपो महादेवो ह्यद्यो नास्ति कदाचन ।
शक्तिसंयोगमात्रेण कर्मकर्ता स उच्यते ॥ १० ॥

तस्मात् तत् परमेशानि ! शक्तेः प्राधान्यमुच्यते ।
शक्तिं विना महेशानि न किञ्चिदपि वर्तते ॥ ११ ॥

सदाशिवो महाप्रेतः केवलं निश्चयं प्रिये ।
सदाशिवपुरं देवि वैकुण्ठं परमं पदम् ॥ १२ ॥

सदाशिवपुरं गत्वा कुण्डली परदेवता ।
सदाशिवेन च समं क्षणमात्रं रमेत् प्रिये ! ॥ १३ ॥

सदाशिवेन देवेशि सङ्गमं जायते प्रिये ।
अमृतं जायते देवि तत्क्षणात् परमेश्वरि ।
तेनामृतेन देवेशि षट्चक्रं प्लावयेत् क्रमात् ॥ १४ ॥

श्रीईश्वर उवाच

शृणु पार्वति ! वक्ष्यामि रहस्यं भुवि दुर्लभम् ।
गुह्याद् गुह्यतरं रम्यं त्रिषु लोकेषु दुर्लभम् ॥ १५ ॥

अपानमूर्ध्वगं कृत्वा दिव्यमर्थं प्रपूर्य च ।
प्राणमन्त्रेण देवेशि ! शक्तिं कुण्डलिनीं पराम् ॥ १६ ॥

क्रमाच्चक्राणि निर्भिद्य जीवात्मानमनोहरात् ।
सहस्रारे शिरःपद्मे परे ब्रह्मणि योजयेत् ॥ १७ ॥

बुद्ध्यहङ्कारचित्तानि तत्त्वानि प्रकृतिर्वपुः ।
तस्मात् सर्वाणि तत्त्वानि बीजरूपेण भावयेत् ॥ १८ ॥

ततः शून्ये शरीरे च कुक्षौ वामे विचिन्तयेत् ।
सर्वपापात्मकं क्रूरं पुरुषं पिङ्गमूर्धजम् ॥ १९ ॥

ततो नाभौ वायुबीजं धूम्रं सञ्चिन्त्य तज्जपेत् ।
दशधा वायुमुत्पाद्य वपुः पापं विशोधयेत् ॥ २० ॥

स पापं तु ततो मन्त्री हृदये वह्निबीजकम् ।
रक्तं विभाव्य दशधा तज्जपाच्च हुताशनम् ॥ २१ ॥

समुत्पाद्य देहत्येनं सपापं तद्वपुः प्रिये ।
ललाटे वारुणं बीजं शुद्धं सञ्चिन्त्य तज्जपात् ॥ २२ ॥

दशधामृतविष्टिन्तु समुत्पाद्य शुचिस्मिते ।
सर्वव्यथाविनिर्मुक्तं जातं दिव्यवपुस्ततः ॥ २३ ॥

निष्पापं प्लावयेत् तस्मात् तथा भावेन तत्परः ।
अवगत्य धराबीजं मूलाधारे विचिन्तयेत् ॥ २४ ॥

दशधा तज्जपाद् देवि ! पृथ्वीमुत्पाद्य सुन्दरि ।
ततः सर्वाणि बीजानि तत्त्वानि च शुचिस्मिते ॥ २५ ॥

यथास्थाने न्यसेद् बीजं आज्ञाचक्रात् शुचिस्मिते ।
आज्ञादिगुणपद्मान्तं संस्थाप्य परमेश्वरि ! ॥ २६ ॥

क्रमं तस्य प्रवक्ष्यामि सावधानाऽवधारय ।
एतद् रहस्यं परमं सदा मम हृदि स्थितम् ॥ २७ ॥

यन्मन्त्रसहितं देवि क्रमात् सुन्दरि तत् शृणु ।
बीजं कुण्डलिनीं देवि आज्ञाचक्रं समानयेत् ॥ २८ ॥

तस्मिन् चक्रे महेशानि आत्मा मनःसमन्वितः ।
पञ्चाशन्मातृकामन्त्रं दशधा प्रजपेत् प्रिये ॥ २९ ॥

तत्र युग्मकलां ध्यात्वा मूलमन्त्रेण तर्पयेत् ।
लम्बयेत् परमेशानि जीवं कुण्डलिनीसह ॥ ३० ॥

मनसा संयुतं कृत्वा विशुद्धौ लम्बयेत् प्रिये ! ।
तच्चक्रे परमेशानि मातृकावर्णमुत्तमम् ॥ ३१ ॥

प्रजपेद् दशधा देवि ! मनःसारथिना प्रिये ।
सर्वं हि मनसा कार्यं मनः सर्वार्थसाधकम् ॥ ३२ ॥

तत्रस्थां षोडशकलां मूलमन्त्रेण तर्पयेत् ।
लम्बयेत् प्रणवैर्देवि पुरीं[प्रति]ध्वनिमयीं प्रति ॥ ३३ ॥

तत्रस्थं देवदेवेशं महादेवं च तर्पयेत् ।
प्रणवेन तु मन्त्रेण तर्पयेत् शिवरूपिणम् ॥ ३४ ॥
तत्रस्थां द्वादशकलां तडित्कोटिसमप्रभाम् ।
तर्पयेत् मूलमन्त्रेण मातृकाजपपूर्वकम् ॥ ३५ ॥
लम्बयेत् मणिपूरे च शिवं तत्र प्रतर्पयेत् ।
तत्रस्थां दशकलां देवि ! मूलमन्त्रेण तर्पयेत् ॥ ३६ ॥
मातृकां प्रथमे जप्त्वा तर्पयेत् परमां कलाम् ।
तदधः परमेशानि ! स्वाधिष्ठानेषु लम्बयेत् ॥ ३७ ॥
स्वाधिष्ठानं महेशानि ! शुक्लं हीरकसन्निभम् ।
तत्रस्थं शिवदेवं च मूलमन्त्रेण तर्पयेत् ॥ ३८ ॥
मूलमन्त्रं महेशानि ! प्रासादं परमं शिवम् ।
तत्रस्थां षट्कलां दिव्यां मायाबीजेन तर्पयेत् ॥ ३९ ॥
मूलाधारं ततो नीत्वा बीजं कुण्डलिनीसह ।
मनःसारथिना देवि ! शिवं सम्भाव्य यत्नतः ॥ ४० ॥
तर्पयेन्मूलमन्त्रेण प्रासादेन शिवं प्रिये ! ।
ततो युगकलां नित्यां मूलमन्त्रेण तर्पयेत् ॥ ४१ ॥
मातृकां दशधा जप्त्वा शिवं सन्तोषयेत् सदा ।
स्वस्थानं प्राप्य देवेशि ! कुण्डली परदेवता ॥ ४२ ॥
ब्रह्मविष्णुशिवयुता विषतन्तुतनीयसीम् ।
जवासिन्दूरसङ्काशामुद्यद्भास्करसन्निभाम् ॥ ४३ ॥
शिवस्य युवतीं योग्यां वह्निरूपधरां प्रिये ! ।
ततस्तु परमेशानि ! जीवं पुष्करमानयेत् ॥ ४४ ॥
हृदिस्थं पुष्करं पद्मं जीवस्थानं सदा स्मृतम् ।
ब्रह्मस्थानं च तद् देवि ! सूर्यमण्डलसन्निभम् ॥ ४५ ॥

शब्दब्रह्म परं ब्रह्म शब्दास्तिष्ठन्ति तत्र वै ।
प्रदीपकलिकाकारं शब्दब्रह्म शुचिस्मिते ॥ ४६ ॥

प्रदीपकलिकाकारं जीवं च परमेश्वरि ! ।
शब्दब्रह्म परं ब्रह्म शक्तियुक्तं सदा प्रिये ! ॥ ४७ ॥

जलसूर्याग्निचन्द्रेषु शक्तिः सर्वत्र वर्तते ।
शक्तिः सर्वेषु देवेषु देवीषु च शुचिस्मिते ॥ ४८ ॥

शक्तियुक्तं जायते सर्वं यो न जानाति पामरः ।
प्रेतलोकं स गत्वा वै शूकरत्वं प्रजायते ॥ ४९ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरपार्वतीसंवादे तृतीयः पटलः ॥ ३ ॥

# अथ चतुर्थः पटलः

श्रीईश्वर उवाच

नाभिमध्ये तु वामा च ज्येष्ठा च हृदि संस्थिता ।
रौद्री च परमेशानि ! सदा शिरसि संस्थिता ॥ १ ॥

वामा ब्रह्मा महेशानि ! ज्येष्ठा च विष्णुरीरिता ।
रौद्री रुद्रं तु विज्ञेया बिन्दुत्रयमितीरिता ॥ २ ॥

ब्रह्मा विष्णुश्च रुद्रश्च सदा प्रकृतिरूपिणी ।
बिन्दुना परमेशानि ! कर्मकर्ता सदा प्रिये ॥ ३ ॥

ब्रह्मविष्णुमहेशानां बिन्दुबीजं शुचिस्मिते ! ।
बिन्दुना जायते सृष्टिः पालनं च शुचिस्मिते ॥ ४ ॥

बिन्दुना हरते सृष्टिं क्रमतः परमेश्वरि ! ।
बिन्दुं विना महेशानि ! सकलं प्रेतवत् प्रिये ॥ ५ ॥

अतः परं प्रवक्ष्यामि रहस्यं परमाद्भुतम् ।
मूलाधारे महेशानि ! त्र्यक्षरीं दशधा जपेत् ॥ ६ ॥

त्र्यक्षरीं शृणु देवेशि ! सावधानाऽवधारय ।
शिवबीजं समुद्धृत्य पृथ्वीबीजपुटं कुरु ॥ ७ ॥

बिन्द्वर्धसंयुतं कृत्वा साधको जपमारभेत् ।
हृत्पद्मे रञ्जितशिवा समुद्धृत्य शुचिस्मिते ॥ ८ ॥

शिवबीजे पुटीकृत्य बिन्द्वर्धसंयुतं कुरु ।
ललाटे परमेशानि ! रलबीजं समुद्धर ॥ ९ ॥

कलावती पुटीकृत्वा बिन्द्वर्धसंयुक्तं कुरु ।
एता विद्या महेशानि ! भूतशुद्धेस्तु कारणम् ॥ १० ॥

श्रीदेवी उवाच

कथ्यतां देवदेवेश ! ज्ञानचक्षुस्तपोमयम् ।
कृपया कथयेशान ! यद्यहं तव वल्लभा ॥ ११ ॥
वामपार्श्वे स्थितं देवं संदह्य परमेश्वर ! ।
जीवः शुद्धात्मको भूत्वा मनसा परमेश्वर ॥ १२ ॥
पूजयेदिष्टदेवं च जपेद् विद्यां प्रसन्नधीः ।
पुनस्तु पुरुषं पापं कथमुत्पद्यते तथा ॥ १३ ॥
एतत्तु संशयं देव हृदये शल्यवन्मम ।
संशयं मे महादेव ! छिन्धि देव दयानिधे ॥ १४ ॥

श्रीईश्वर उवाच

शृणु कमलपत्राक्षि ! रहस्यं परमाद्भुतम् ।
शोषणैर्दहनैर्देवि ! पुरुषं पापरूपकम् ॥ १५ ॥
संदह्य परमेशानि ! पुनरुत्पद्यते सदा ।
इडा तु वामदेशे हि सदा तिष्ठति पार्वति ॥ १६ ॥
वामनाड्या कृतं पापं वामकुक्षौ स्थितं प्रिये ।
नाडीसंयोगमात्रेण पापमूलं निकृन्तति ॥ १७ ॥
अत एव महेशानि ! पुरुषं कृष्णमूर्धजम् ।
पुनरुत्पद्यते देवि ! जपपूजाविधेरनु ॥ १८ ॥
शृणु कमलपत्राक्षि ! रहस्यं हृदये स्थितम् ।
दहन्तं शेषपापं च नाशनं यदि चेच्छसि ॥ १९ ॥
तत् पापस्यापनोदे च विद्यामेनां जपं कुरु ।
कामनया तथा देवि ! मन्मथं परमेश्वरि ॥ २० ॥
अष्टोत्तरशतं जप्त्वा तस्मात् पापाद् विमुच्यते ।
मनो जीवात्मनोः शुद्धिः प्राणयामेन सुन्दरि ॥ २१ ॥

एतत् शुद्धिर्महेशानि सर्वतन्त्रेषु शस्यते ।
सर्वेषु विष्णुमन्त्रेषु शिवमन्त्रे गणाधिपे ॥ २२ ॥
शक्तौ सूर्ये महेशानि ! अन्यदेवगणेषु च ।
एवं ते कथितं देवि ! रहस्यं परमाद्भुतम् ॥ २३ ॥
आधारं पृथ्वीतत्त्वं वै स्वाधिष्ठानं जलं प्रिये ।
मणिपुरम् अग्नितत्त्वं वायुतत्त्वमनाहते ॥ २४ ॥
कण्ठे च परमेशानि ! शून्यतत्त्वं सदा स्मृतम् ।
मनस्तत्त्वं तदूर्ध्वं च मनः सर्वत्र व्यापकम् ॥ २५ ॥
विभुत्वाद् व्यापकत्वाच्च साक्षाद् बिन्दुमयं मनः ।
यावस्ति परमेशानि भूतशुद्ध्यादि यानि च ॥ २६ ॥
तानि सर्वाणि देवेशि ! मनसैव प्रणीयते ।
सर्वगामी सर्ववेत्ता सर्वसाक्षी सदा मनः ॥ २७ ॥
पापपुण्ये महेशानि रक्षकं स्यात् मनः प्रिये !
मनसा वाक्यमुत्पन्नं मनसैव प्रणीयते ।
मन्त्रं विद्या महेशानि ! मनसा जपमाचरेत् ॥ २८ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरपार्वतीसंवादे चतुर्थः पटलः ॥ ४ ॥

# अथ पञ्चमः पटलः

श्रीईश्वर उवाच

मनसा जीवसंयुक्तः कर्मकर्ता सदा प्रिये ।
मनः प्रविभवे देवि ! उन्मनीसहिता यतः ॥ १ ॥

उन्मनी च महेशानि ! भवपापनिकृन्तनी ।
जीवस्य परमेशानि ! गुप्ततत्त्वं शृणु प्रिये ॥ २ ॥

मूलाधारे स्थितं जीवं प्रदीपकलिकाकृतिम् ।
प्रणवेन समाकृष्य द्वादशान्तं लयेत् सुधीः ॥ ३ ॥

आकाशे च महेशानि ! सुखमोक्षमवाप्नुयात् ।
हृत्पद्मे च महेशानि परं ब्रह्म निरीक्षणम् ॥ ४ ॥

आज्ञायां परमेशानि प्रथमं गुरुदर्शनम् ।
मणिपूरं ततो गत्वा स्नापयेन्मनसा सह ॥ ५ ॥

स्वाधिष्ठानं ततो गत्वा अग्निस्पर्शं समाचरेत् ।
ततो जीवं महेशानि ! मूलाधारं लयेत् प्रिये ॥ ६ ॥

मनःसारथिना देवि ! उन्मनी भवनाशिनी ।
संहत्य सदसत्कर्म जीवः सर्वं करोति हि ॥ ७ ॥

शुद्धसत्त्वात्मको जीवः सदसत्कर्मवर्जितः ।
वामपार्श्वे स्थितं पापं पुरुषेण यदा प्रिये ॥ ८ ॥

संयोगो जायते तत्र असत्कर्म तदाऽकरोत् ।
पापस्य परमेशानि ! संयोगो यदि जायते ॥ ९ ॥

मनसा जीवसंयोगात् सत्कार्यं कुरुते तदा ।
शुद्धसत्त्वात्मको जीवस्तस्य कार्यं कुतः प्रिये ॥ १० ॥

मनश्च परमेशानि उन्मनी संयुता यदि ।
जीवस्य वामपार्श्वे तु तदा तिष्ठति पापधृक् ॥ ११ ॥

दक्षिणे परमेशानि मनश्च उन्मनी यतः ।
उन्मज्जन्ति निमज्जन्ति प्रपञ्चेषु शुचिस्मिते ॥ १२ ॥

उन्मनीकरणं देवि ! दशासु परमेश्वरि ।
जाग्रत्स्वप्नसुषुप्त्यवस्थां चापि परमेश्वरि ॥ १३ ॥

सुषुम्नान्तर्गता चित्रा चन्द्रकोटिसमप्रभा ।
तत्र कुण्डलिनी देवि यातायातं करोति हि ॥ १४ ॥

कदाचित् मासि तं पद्मं कदाचित् रक्तपङ्कजम् ।
कदाचित् शुक्लपद्मं हि वह्निपद्मं कदा प्रिये ॥ १५ ॥

भित्वा पुरीं याति पुनरायाति कुण्डली सदा ।
प्रपञ्चानां महेशानि ! देवानुचरमुत्तमम् ॥ १६ ॥

कथयामि महेशानि सर्वतन्त्रेषु गोपितम् ।
यज्ज्ञात्वा साधको देवि सर्वसिद्धिमवाप्नुयात् ॥ १७ ॥

धर्मार्थकाममोक्षाणां फलभाग् वैष्णवो यतः ।
तव स्नेहान्महेशानि ! निगदामि शुचिस्मिते ॥ १८ ॥

ब्रह्माणी चण्डिका रौद्री गौरीन्द्राणी तथैव च ।
कौमारी वैष्णवी दुर्गा नारसिंही च कालिका ॥ १९ ॥

शिवदूती च वाराही माहेशी कौशिकी तथा ।
शाङ्करी च जयन्ती च विशुद्धपद्मसंस्थिता ॥ २० ॥

मङ्गला कपालिका चैव मेधा च शिवरूपिका ।
शाकम्भरी च भीमा च गाण्डा च भ्रामरी तथा ॥ २१ ॥

रुद्ररूपिण्यम्बिका च क्षमा च वह्निरूपिणी ।
एतास्तु परमेशानि ! हृत्पद्मे संस्थिताः सदा ॥ २२ ॥

धात्री च वह्निरूपा च मध्यमा च शुचिस्मिते ! ।
अपर्णा च महेशानि तथा वामा महोदरी ॥ २३ ॥
घोररूपा महाकाली तथा चैव भयङ्करी ।
क्षेमङ्करी च देवेशि ! मणिपूरे स्थिता सदा ॥ २४ ॥
उग्रचण्डा च देवेशि तथा चण्डावती प्रिये ।
चण्डा चैव प्रचण्डा च चण्डनायकसेविता ॥ २५ ॥
चण्डिका चैव देवेशि ! स्वाधिष्ठाने स्थिता सदा ।
महादेवी महेशानि तथैव मोहरूपिणी ॥ २६ ॥
तथा प्रियङ्करी चैव तथा चैव सनातनी ।
एतास्तु परमेशानि मूलाधारे स्थिताः सदा ॥ २७ ॥
फलविकरिणीरूपा बलप्रमथिनी तथा ।
अक्षरं युगलं देवि आज्ञाचक्रे स्थिता सदा ॥ २८ ॥
अस्यास्तु परमेशानि विशेषं शृणु पार्वति ।
एतज्ज्ञानं महेशानि सदाशिवव्यवस्थितम् ॥ २९ ॥
अस्य ज्ञानप्रभावेण संहरामि जगत् त्रयम् ।
स्थितिकर्ता भवेद् विष्णुर्ब्रह्मा सृष्टिकरं सदा ॥ ३० ॥
यस्य यस्य च देवेशि ! यद् वीजं पूर्वसूचितम् ।
तद्वीजे पुटितं कृत्वा देवानां जपमाचरेत् ॥ ३१ ॥
भूतशुद्धिस्तदा देवि ! सिद्धो भवति पार्वति ।
अन्यथा प्रेतवच्छुद्धिर्जायते कमलेक्षणे ॥ ३२ ॥
पञ्चाशन्मातृणां देवि षट्चक्रे क्रमतो जपेत् ।
षट्चक्रे परमेशानि ! यत्नतो जपमाचरेत् ॥ ३३ ॥
तदैव महती सिद्धिः साधकस्यापि जायते ।
कलावृक्षे समो भूत्वा साधकः खेचरो भवेत् ॥ ३४ ॥

अणिमादिगुणाधारं तथा भवति साधकः ।
अणिमा सूक्ष्मरूपं च लघिमा स्थूलरूपकम् ॥ ३५ ॥
सर्वैश्वर्यपदप्राप्तिं प्राप्तिं परममुच्यते ।
मनःक्लेशकरं चैव प्राकाश्यं कमलानने ॥ ३६ ॥
महिमा सर्वलोकेषु गीयते कमलानने ।
तदैव महिमा देवि ! मम ज्ञानेषु वर्तते ॥ ३७ ॥
ब्रह्माण्डव्यापकं रूपं ईशित्वं च प्रकीर्तितम् ।
ब्रह्माण्डवशरूपं च वशित्वं कथितं प्रिये ! ॥ ३८ ॥
कन्दर्पध्वंसजननमेतत् कामवशायिता ।
अणिमादिगुणं देवि ! तव भक्त्या प्रकाशितम् ॥ ३९ ॥
न कस्मैचित् प्रवक्तव्यं तव योनिं यथा प्रिये ।
शृणु देवि प्रवक्ष्यामि भूतशुद्धेस्तु कारणम् ॥ ४० ॥
··· महेशानि ! अष्टोत्तरशतं जपेत् ।
तारं व्योमाग्नि गुण्डी तथा ज्योतिर्मनुः स्मृतः ॥
एतज्ज्ञानप्रभावेण भूतशुद्धेः फलं भवेत् ॥ ४१ ॥

॥ इति श्रीभूतशुद्धितन्त्रे हरपार्वतीसंवादे पञ्चमः पटलः ॥ ५ ॥

# अथ षष्ठः पटलः

श्रीईश्वर उवाच

शृणु ज्ञानं महेशानि ! विशेषं कथयामि ते ।
यज्ज्ञात्वा परमेशानि शिवोऽहं मृत्युनाशकः ॥ १ ॥
यज्ज्ञात्वा परमेशानि ! ब्रह्मा सृष्टिकरः सदा ।
यज्ज्ञात्वा विष्णुदेवश्च स्थितिकर्ता शुचिस्मिते ॥ २ ॥
यज्ज्ञात्वा तु महेशानि ! नाशकोऽहं महेश्वरि ।
चन्द्रः सूर्यो महेशानि यज्ज्ञात्वा परमेश्वरि ॥ ३ ॥
प्रकाशं कुरुते विश्वं ब्रह्माण्डं सचराचरम् ।
अव्यक्तरूपिणीं रम्यां योगगम्यां सदा प्रिये ॥ ४ ॥
सदा शरीरमाश्रित्य वसते कामरूपिणी ।
शरीरं द्विविधं देवि ! स्थूलं सूक्ष्मं शुचिस्मिते ॥ ५ ॥
मांसास्थिलोमरक्तानि मेदो मज्जा वरानने ! ।
विण्मूत्रस्थे हरं चैच वातपित्ते तु सङ्गतम् ॥ ६ ॥
एतत् स्थूलमयं देवि सूक्ष्मं च कथयामि ते ।
इडा वामे स्थिता नाडी शुक्ला तु चन्द्ररूपिणी ॥ ७ ॥
दक्षिणे पिङ्गला नाम्नी पुंरूपा सूर्यविग्रहा ।
तन्मध्ये परमेशानि ! सुषुम्ना ब्रह्मरूपिणी ॥ ८ ॥
वामावर्तक्रमेणैव वेष्टनं विषतन्तुवत् ।
मूलादिब्रह्मरन्ध्रान्तं व्याप्य तिष्ठति सर्वदा ॥ ९ ॥
इच्छाज्ञानक्रियारूपा त्रिनाडी सर्वतन्तुषु ।
तिस्रः कोट्यः सहस्रं तु शरीरे नाड्यो मताः ॥ १० ॥

तासु मुख्या दश प्रोक्ता तासु तिस्रो व्यवस्थिताः ।
वामनाड्यां महेशानि ! वायुबीजेन पूरयेत् ॥ ११ ॥

वायुं षोड्शधा जप्त्वा पूरयेद् वामवर्त्तनि ।
मणिपूरे महेशानि चतुःषष्ठी च धारयेत् ॥ १२ ॥

रेचयेत् कुम्भकार्धेन दक्षनाड्यां शुचिस्मिते ।
वह्निबीजं महेशानि ! हृत्पद्मे पूर्ववत् प्रिये ॥ १३ ॥

संशोध्य वायुबीजेन वह्निबीजेन सन्दहेत् ।
ललाटे वारुणं बीजं शुक्लं सञ्चिन्त्य सुन्दरि ॥ १४ ॥

कुम्भकार्धं जपित्वा वै रेचयेद् दक्षिणे पथे ।
एवं द्वादशधा देवि भूतशुद्धिं समाचरेत् ॥ १५ ॥

बृहच्छुद्धिं महेशानि पञ्चभूतस्य पार्वति ! ।
पूर्वोक्तं परमेशानि सामान्यं शुद्धिमेव च ॥ १६ ॥

देहस्य परमेशानि भूतशुद्धिरितीरिता ।
देहस्य सूक्ष्मरूपस्य भूतशुद्धिरियं प्रिये ॥ १७ ॥

मनसः परमेशानि ! उन्मनीसहिता यदि ।
जीवेन सह देवेशि सुषुम्नायां निमज्जयेत् ॥ १८ ॥

ध्यानधारणयोगेन ब्रह्म साक्षान्न संशयः ।
प्रजपेत् परया भक्त्या मालया वर्णसङ्ख्यया ॥ १९ ॥

मुहूर्तं भावयेद् विद्यां मनोन्मनीयुता प्रिये ।
मनोन्मनीयुते जीवः ब्रह्मरन्ध्रे च संजपेत् ॥ २० ॥

ततो ब्रह्मनदीं प्राप्य स्नानं कृत्वा वरानने ! ।
जीवः शुद्धो भवेद् देवि गणैः परिकरैः सह ॥ २१ ॥

जीवस्य परमेशानि परिवारं शृणु प्रिये ।
अक्षिणी नासिके कर्णौ जिह्वा च कमलेक्षणे ॥ २२ ॥

इदं हि योनिकवचं रहस्यं परमाद्भुतम् ।
अज्ञात्वा यो जपेन्मन्त्रं सर्वं निष्फलतां व्रजेत् ॥ ८४ ॥

रहस्यं परमं दिव्यं सावधानाऽवधारय ।
मूलाधारे महेशानि जपेद् यन्त्रं वरानने ॥ ८५ ॥

मूलाधारे महेशानि वरारोहेऽन्तरात्मनि ।
प्रतिचक्रे महेशानि पठेद् योनिं सनातनीम् ॥ ८६ ॥

चन्द्रसूर्योपरागे च पठेद् वा कवचं प्रिये ।
स्वनारीं रमयेद् यन्त्रे परनारीमथापि वा ॥ ८७ ॥

कवचस्य प्रसादेन योनिमुद्रा हि सिद्ध्यति ।
इदं हि कवचं देवि पठित्वा कमलानने ॥ ८८ ॥

मैथुनं महदाख्यानं त्वया सह मया कृतम् ।
कवचस्य प्रसादेन जना यान्ति परां गतिम् ॥ ८९ ॥

भूर्जपत्रे समालिख्य स्वयंभूकुसुमेन तु ।
शुक्लेन कुसुमेनापि रोचनालक्तकेन च ॥ ९० ॥

स्वर्णस्थां गुटिकां कृत्वा धारयेद् यन्त्रमानवः ? ।
इह लोके परत्रे च स एव श्रीसदाशिवः ॥ ९१ ॥

अष्टोत्तरशतश्चास्य प्रपठेत् सिद्धि वाञ्छया ।
किमत्र बहुनोक्तेन अस्मात् परतरो नहि ।
नमो योन्यै नमो योन्यै कुण्डलिन्यै नमो नमः ॥ ९२ ॥

इति दक्षिणाम्नाये सार्धलक्षग्रन्थे कङ्कालमालिनीतन्त्रे
योनिमुद्रादिकथनं द्वितीयः पटलः ॥ २ ॥

# अथ तृतीयः पटलः

श्रीदेवी उवाच

इदानीं श्रोतुमिच्छामि गुरुपूजनमुत्तमम् ॥

श्रीईश्वर उवाच

कथयामि महादेवि अप्रकाश्यं वरानने ।
निर्गुणश्च परं ब्रह्म गुरुरित्यक्षरद्वयम् ॥ १ ॥

महामन्त्रं महेशानि गोपनीयं परात्परम् ।
तत्र ध्यानं प्रवक्ष्यामि शृणु पार्वति सादरम् ॥ २ ॥

सहस्रदलपद्मस्थमन्तरात्मानमुज्ज्वलम् ।
तस्योपरि नादबिन्दोर्मध्ये सिंहासनोज्ज्वले ॥ ३ ॥

चिन्तयेन्निजगुरुं नित्यं रजताचलसन्निभम् ।
वीरासनसमासीनं मुद्राभरणभूषितम् ॥ ४ ॥

शुभ्रमाल्याम्बरधरं वरदाभयपाणिनम् ।
वामोरुशक्तिसहितं कारुण्येनावलोकितम् ॥ ५ ॥

प्रियया सव्यहस्तेन धृतचारुकलेवरम् ।
वामेनोत्पलधारिण्या रक्ताभरणभूषया ॥ ६ ॥

ज्ञानानन्दसमायुक्तं स्मरेत्तन्नामपूर्वकम् ।
मानसैस्तूपचारैश्च संपूज्य कल्पयेत् सुधीः ॥ ७॥

गन्धं भूम्यात्मकं दद्याद् भावपुष्पैस्ततः परम् ।
धूपं वाय्वात्मकं देवि तेजसा दीपमेव च ॥ ८ ॥

नैवेद्यममृतं दद्यात् पानीयं वरुणात्मकम् ।
अम्बरं मुकुटं दद्यात् वस्त्रश्चैव मम प्रिये ॥ ९ ॥

चामरं पादुकाच्छत्रं तथालङ्कारभूषणैः।
तत्तन्मुद्राविधानेन संपूज्याथ गुरुं यजेत्॥ १०॥
यथाशक्ति जपं कृत्वा समर्प्य कवचं पठेत्।
इति ते कथितं सम्यग् गुरुपूजनमुत्तमम्॥ ११॥

श्रीदेवी उवाच

भूतनाथ महादेव कवचं तस्य मे वद॥ १२॥

श्रीईश्वर उवाच

अथ ते कथयामीशे कवचं मोक्षदायकम्।
यस्य ज्ञानं विना देवि न सिद्धिर्न च सद्गतिः॥ १३॥
ब्रह्मादयोऽपि गिरिजे सर्वत्र जयिनः स्मृताः।
अस्य प्रसादात् सकला वेदागमपुरःसराः॥ १४॥
कवचस्यास्य देवेशि ऋषिर्विष्णुरुदाहृतः।
छन्दो विराड् देवता च गुरुदेवः स्वयं शिवः॥ १५॥
चतुर्वर्गे ज्ञानमार्गे विनियोगः प्रकीर्तितः।
सहस्रारे महापद्मे कर्पूरधवलो गुरुः॥ १६॥
वामोरुगतशक्तिर्यः सर्वतः परिरक्षतु।
परमाख्यो गुरुः पातु शिरसं मम वल्लभे॥ १७॥
परापराख्यो नासां मे परमेष्ठिर्मुखं मम।
कण्ठं मम सदा पातु प्रह्लादानन्दनाथकः॥ १८॥
बाहू द्वौ सनकानन्दः कुमारानन्दनायकः।
वशिष्ठनन्दनाथश्च हृदयं पातु सर्वदा॥ १९॥
क्रोधानन्दः कटिं पातु सुखानन्दः पदं मम।
ध्यानानन्दश्च सर्वाङ्गं बोधानन्दश्च कानने॥ २०॥

सर्वत्र गुरवः पान्तु सर्वे ईश्वररूपिणः ।
इति ते कथितं भद्रे कवचं परमं शिवे ॥ २१ ॥

भक्तिहीने दुराचारे दद्यान्मृत्युमवाप्नुयात् ।
अस्यैव पठनाद् देवि धारणाच्छ्रवणात् प्रिये ॥ २२ ॥

मन्त्राः सिद्धाश्च जायन्ते किमन्यत् कथयामि ते ।
कण्ठे वा दक्षिणे बाहौ शिखायां वीरवन्दिते ॥ २३ ॥

धारणान्नाशयेत् पापं गङ्गायां कलुषं यथा ।
इदं कवचमज्ञात्वा यदि मन्त्रं जपेत् प्रिये ॥ २४ ॥

तत् सर्वं निष्फलं कृत्वा गुरुर्याति सुनिश्चितम् ।
शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥ २५ ॥

श्रीपार्वती उवाच

लोकेश कथ्यताम् देव गुरुगीता मयि प्रभो ॥ २६ ॥

श्रीशिव उवाच

शृणु तारिणि वक्ष्यामि गीतां ब्रह्ममयीं पराम् ।
गुरुः स्वयं सर्वशास्त्राणामहमेव प्रकाशकः ॥ २७ ॥

त्वमेव गुरुरूपेण लोकानां प्राणकारिणी ।
गया गङ्गा काशिका च त्वमेव सकलं जगत् ॥ २८ ॥

कावेरी यमुना रेवा करतोया सरस्वती ।
चन्द्रभागा गौतमी च त्वमेव कुलपालिका ॥ २९ ॥

ब्रह्माण्डं सकलं देवि कोटिब्रह्माण्डमेव च ।
नहि ते वक्तुमर्हामि क्रियाजालं महेश्वरि ॥ ३० ॥

उक्त्वा उक्त्वा भावयित्वा भिक्षुकोऽयं नगात्मजे ।
कथं त्वं जननी भूत्वा बधूस्त्वं मम देहिनाम् ॥ ३१ ॥

तव चक्रं महेशानि अतीतं परमात्मनः।
इति ते कथिता गीता गुरुदेवस्य ब्रह्मणः ॥ ३२ ॥

संक्षेपेण महेशानि प्रभुरेव गुरुः स्वयम्।
जगत् समस्तमस्थेयं गुरुस्थेयो हि केवलम् ॥ ३३ ॥

तं तोषयित्वा देवेशि नतिभिस्तत्त्रिभिस्तथा।
नानाविधद्रव्यदानैः सिद्धिः स्यात् साधकोत्तमः ॥ ३४ ॥

इति श्रीदक्षिणाम्नाये सार्धलक्षग्रन्थे कङ्कालमालिनीतन्त्रे
श्री गुरुपूजनकवचगुरुगीता नाम तृतीयः पटलः।



# अथ चतुर्थः पटलः

श्रीपार्वती उवाच

कथयस्व विरूपाक्ष महाकालीमनुं प्रभो ॥

श्रीईश्वर उवाच

अथातः संप्रवक्ष्यामि महाकालीमनुं प्रिये ।
यस्य विज्ञानमात्रेण सर्वसिद्धीश्वरो भवेत् ॥ २ ॥

श्रिया विष्णुं मम कान्त्या सम्मुखेन समः सुखी ।
शौचेन शुचिना तुल्यो बलेन पवनोपमः ॥ ३ ॥

वागीश्वरः समो वाचि धनेन धनपः स्वयम् ।
सार्वज्ञे शम्भुना तुल्यो दाने दाधीचिना समः ॥ ४ ॥

आज्ञया देवराजोऽसौ ब्राह्मण्येन प्रजापतिः ।
भृगोरिव तपस्वी च चन्द्रवत् प्रीतिवर्धनः ॥ ५ ॥

तेजसाग्निसमो भक्त्या नारदः शिवकृष्णयोः ।
रूपेण मदनः साक्षात् प्रतापे भानुसन्निभः ॥ ६ ॥

शास्त्रचर्चास्वाङ्गिरसो जामदग्न्यः प्रतिज्ञया ।
सिद्धानां भैरवः साक्षात् गङ्गेव मलनाशकः ॥ ७ ॥

अथवा बहुनोक्तेन किं वा तेन वरानने ।
न तस्य दूरितं किञ्चित् महाकालीं स्मरेद्धिया ॥ ८ ॥

शब्दब्रह्ममयीं स्वाहां भोगमोक्षैकदायिकाम् ।
भोगेन मोक्षमाप्नोति श्रुत्वा गुरुमुखात् पराम् ॥ ९ ॥

तां विद्यां शृणु वक्ष्यामि यया भैरवतां व्रजेत् ।
क्रोधीशं क्षतजारूढं धूम्रभैरव्यलक्षितम् ॥ १० ॥

नादबिन्दुसमायुक्तं मन्त्रं स्वर्गेऽपि दुर्लभम् ।
एकाक्षरीसमा नास्ति विद्या त्रिभुवने प्रिये ॥ ११ ॥
महाकाली गुह्यविद्या कलिकाले च सिद्धिदा ।
अथान्यत् संप्रवक्ष्यामि दक्षिणां कालिकां पराम् ॥ १२ ॥
वाग्भवं बीजमुच्चार्य्य कामराजं ततः परम् ।
मायाबीजं ततो भद्रे त्र्यक्षरं मन्त्रमीरितम् ॥ १३ ॥
कामराजं ततो कूर्चं मायाबीजमतः परम् ।
अपरं त्र्यक्षरं प्रोक्तं पूर्वोक्तं फलदं प्रिये ॥ १४ ॥
हालाहलं समुच्चार्य मायाद्वयमतः परम् ।
एतत्तु त्र्यक्षरं देवि सर्वकामफलप्रदम् ॥ १५ ॥
एतेषाञ्चैव मन्त्राणां फलमन्यत् शृणु प्रिये ।
न कालनियमोऽत्रास्ति नारिमित्रादिदूषणम् ॥ १६ ॥
कायक्लेशकरं नैव प्रयासो नास्य साधने ।
दिवा वा यदि वा रात्रौ जपः सर्वत्र शोभनः ॥ १७ ॥
भोगमोक्षविरोधोऽत्र साधने नास्ति निश्चितम् ।
भोगेन लभते मोक्षं नरोऽपि विद्ययानया ॥ १८ ॥
अस्या जपात्तथा ध्यानात् लभेन्मुक्तिं चतुर्विधाम् ।
नानया सदृशी विद्या नानया सदृशो जपः ॥ १९ ॥
नानया सदृशं ध्यानं नानया सदृशं तपः ।
सत्यं सत्यं पुनः सत्यं सत्यपूर्वं वदाम्यहम् ॥ २० ॥
अनया सदृशी विद्या नास्ति सिद्धिः सुगोचरे ।
अथ संक्षेपतो वक्ष्ये पूजाविधिमनुत्तमम् ॥ २१ ॥
विस्तारे कस्य वा शक्तिः को वा जानाति तत्त्वतः ।
पूजा च त्रिविधा प्रोक्ता नित्यनैमित्तिकाम्यतः ॥ २२ ॥

तत्रैव नित्यपूजाञ्च वक्ष्ये ताञ्च निशामय ।
भैरवोऽस्य ऋषिः प्रोक्त उष्णिक् छन्द उदाहृतम् ॥ २३ ॥

देवता मुनिभिः प्रोक्ता महाकाली पुरातनी ।
विनियोगस्तु विद्यायाः पुरुषार्थचतुष्टये ॥ २४ ॥

पञ्चशुद्धिविहीनेन यत्कृतं न च तत्कृतम् ।
पञ्चशुद्धिं विना पूजा अभिचाराय कल्प्यते ॥ २५ ॥

आत्मशुद्धिः स्थानशुद्धिर्द्रव्यस्य शोधनस्तथा ।
मन्त्रशुद्धिर्देवशुद्धिः पञ्चशुद्धिरितीरिता ॥ २६ ॥

भूप्रदेशे समे शुद्धिः पुष्पः प्रकरसंकुले ।
आसनं कल्पयेदादौ कोमलं कम्बलन्तु वा ॥ २७ ॥

वामे गुरून् पुनर्नत्वा दक्षिणे गणपतिं विभुम् ।
भूतशुद्धिं तथा कुर्यात् पूजायोग्या यथा भवेत् ॥ २८ ॥

प्राणायामादि विधिवत् ऋण्यादिन्यासमाचरेत् ।
आदौ शुद्धिभैरवाय ऋषये नम इत्यथ ॥ २९ ॥

उष्णिक् छन्दसे नमसा मुखे छन्दो विनिर्दिशेत् ।
मम प्रिये महाकाली देवतायै नमो हृदि ॥ ३० ॥

ह्रीं बीजाय नमः पूर्वं हुं शक्तये नमोऽप्यथ ।
कवित्वार्थे विनियोग इति विन्यस्य वाञ्छया ॥ ३१ ॥

केवलां मातृकां न्यस्य बीजन्यास समाचरेत् ।
ॐ क्रां अङ्गुष्ठयोर्न्यस्य ॐ क्रीं तर्जन्योर्नमः ॥ ३२ ॥

ॐ क्रूं मध्यमयोर्न्यस्य ॐ क्रैं अनामिकाद्वयोः ।
ॐ क्रौं कनिष्ठायुगले ॐ क्रः करतले तथा ॥ ३३ ॥

पुनर्हृदयादिष्वेतैर्जातियुक्तैः षडङ्गकम् ।
षडदीर्घभावं स्वबीजैः प्रणवाद्यैस्तु विन्यसेत् ॥ ३४ ॥

वर्णन्यासं तथा कुर्याद् येन देवीमयो भवेत् ।
अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ च हृदये न्यसेत् ॥ ३५ ॥
ए ऐ ओ औ अं अः क ख ग घ वै दक्षिणे भुजे ।
ङ च छ ज झ ञ ट ठ ड ढ वै वामके भुजे ॥ ३६ ॥
ण त थ द ध न प फ ब भ दक्षजङ्घके न्यसेत् ।
म य र ल व श ष स ह ल क्ष वामजङ्घके ॥ ३७ ॥
पञ्चधा सप्तधा वापि मूलविद्यां समुच्चरन् ।
शिरआदि च पादान्तं न्यसेद् व्यापकमुत्तमम् ॥ ३८ ॥
नित्यन्यास इति प्रोक्तः सर्व एव सुखावहः ।
अथ ध्यानं प्रवक्ष्यामि भैरवाकारदायकम् ॥ ३९ ॥
हिमालयगिरेर्मध्ये नगरे भैरवस्य च ।
दिव्यस्थाने महापीठे मणिमण्डपराजिते ॥ ४० ॥
नारदाद्यैर्मुनिश्रेष्ठैः संसेवितपदाम्बुजाम् ।
तत्र ध्यायेन्महाकालीमाद्यां भैरववन्दिताम् ॥ ४१ ॥
नीलेन्दीवरवर्णिनीं युग्मापीनतुङ्गस्तनीम्
सुप्तश्रीहरिपीठराजितवर्तीं भीमां त्रिनेत्रां शिवाम् ।
मुद्राखड्गकरां वराभययुतां चित्राम्बरोद्दीपनीं
वन्दे चञ्चलचन्द्रकान्तमणिभिर्मालां दधानां पराम् ॥४२॥
ध्यानान्तरं प्रवक्ष्यामि शृण गौरि गिरेः सुते ।
तत्र पीठे महादेवीं कालीं दानवसेविताम् ॥ ४३ ॥
मेघाङ्गीं विगताम्बरां शवशिरारूढां त्रिनेत्रां परां
कर्णालम्बितबाणयुग्मलसितां मुण्डावलीमण्डिताम् ।
वामाधोर्ध्वकराम्बुजे नरशिरःखड्गञ्च सव्येतरे ।
दानाभीतिविमुक्तकेशनिचया ध्येया सदा कालिका ॥ ४४ ॥

अपरञ्च प्रवक्ष्यामि ध्यानं परमदुर्लभम् ।
कालीं करालवदनां घोरदंष्ट्रां त्रिलोचनाम् ॥ ४५ ॥

स्मरेच्छरकरश्रेणिकृतकाञ्चीं दिगम्बराम् ।
वीरासनसमासीनां महाकालोपरि स्थिताम् ॥ ४६ ॥

श्रुतिमूलसमाकीर्णां सृक्कणीं घोरनादिनीम् ।
मुण्डमालागलद्रक्तचर्चितां पीवरस्तनीम् ॥ ४७ ॥

मदिरामोदितास्फालकम्पिताखिलमेदिनीम् ।
वामे खड्गं छिन्नमुण्डं धारिणीं दक्षिणे करे ॥ ४८ ॥

वराभययुतां घोरवदनां लोलजिह्विकाम् ।
शकुन्तपक्षसंयुक्तवाणकर्णविभूषिताम् ॥ ४९ ॥

शिवाभिर्घोररावाभिः सेवितां प्रलयोदिताम् ।
चण्डहासचण्डनादचण्डाख्यानैश्च भैरवैः ॥ ५० ॥

गृहीत्वा नरकङ्कालं जयशब्दपरायणैः ।
सेविताखिलसिद्धौघैर्मुनिभिः सेवितां पराम् ॥ ५१ ॥

एषामन्यतमं ध्यानं कृत्वा च साधकोत्तमः ।
मानसैरुपचारैश्च सोऽहमात्मानमर्चयेत् ॥ ५२ ॥

ततो देवीं समभ्यर्च्य अर्ध्यद्वयं निवेदयेत् ।
दशपञ्चारपद्मेषु पीठपूजां समाचरेत् ॥ ५३ ॥

तत्रावाह्य महादेवीं नियमेन समाहितः ।
ततो ध्यायेन्महादेवीं कालिकां कुलभूषणाम् ॥ ५४ ॥

महाकालं यजेद्यत्नात् पीठशक्तिं ततो यजेत् ।
कालीं कपालिनीं कुल्लां कुरुकुल्लां विरोधिनीम् ॥ ५५ ॥

विप्रचित्तां तथा चैव वहिः षट्कोणके पुनः ।
उग्रामुग्रप्रभां दीप्तां तत्र त्रिकोणके पुनः ॥ ५६ ॥

महाकालं यजेद्यत्नात्पीठशक्तिं ततोयजेत् ।
कालीं कपालिनीं कुल्लां कुरुकुल्लां विरोधिनीम् ॥ ५७ ॥

विप्रचित्तां तथा चैव बहिः षट्कोणके पुनः ।
उग्रामुग्रप्रभां दीप्तां तत्र त्रिकोणके पुनः ॥ ५८ ॥

नीलां घनां बलाकाञ्च तथा परत्रिकोणके ।
मात्रां मुद्रां नित्याञ्चैव तथैवान्तस्त्रिकोणके ॥ ५९ ॥

सर्वा श्यामा असिकरा मुण्डमालाविभूषणा ।
तर्जनीं वामहस्तेन धारयन्ती शुचिस्मिता ॥ ६० ॥

ब्राह्मयाद्यास्तथावाद्य यजेत् पूर्वदलक्रमात् ।
ब्राह्मी नारायणी चैव तथैव च महेश्वरी ॥ ६१ ॥

चामुण्डापि च कौमारी तथा चैवात्र राजिता ।
वाराही च तथा पूज्या नारसिंही तथैव च ॥ ६२ ॥

सर्वासामपि दातव्या बलिः पूजा तथैव च ।
अनुलेपनकं गन्धं धूपदीपौ च पानकम् ॥ ६३ ॥

त्रिस्त्रिः पूजा च कर्तव्या सर्वासामपि साधकैः ।
पुनर्गन्धादिभिः पूज्य जप्त्वा शेषं समर्पयेत् ॥ ६४ ॥

समयं चार्चयेद् देव्या योगिनीयोगिभिः सह ।
मधु मांसं तथा मत्स्यं यत् किञ्च कुलसाधनम् ॥ ६५ ॥

शक्त्यै दत्वा ततः पश्चाद् गुरवे विनिवेदयेत् ।
तदनुज्ञां मूर्ध्नि कृत्वा शेषं चात्मनि योजयेत् ॥ ६६ ॥

मधु मांसं विना यस्तु कुलपूजां समाचरेत् ।
जन्मान्तरसहस्रस्य सुकृतिस्तस्य नश्यति ॥ ६७ ॥

तस्मात् सर्वप्रयत्नेन मकारपञ्चकैर्यजेत् ।
मधुना न विना मन्त्रं न मन्त्रेण विना मधु ॥ ६८ ॥

परस्परविरोधेन कथं सिध्यन्ति साधकाः ।
कुण्डकुम्भकपालादिपदार्थानां निषेवणम् ॥ ६९ ॥

सौरे तन्त्रे विरुद्धं च शैवे शाक्ते महाफलम् ।
ब्रह्माण्डखण्डसम्भूतमशेषरत्नसम्भवम् ॥ ७० ॥

श्वेतं पीतं सुगन्धं च निर्मलं भूरितेजसम् ।
अथवा कुम्भमध्येऽस्मिन् स्रवन्तं परमामृतम् ॥ ७१ ॥

अन्तर्लयो बहिर्मध्ये त्रिकोणोदरवर्तिनि ।
तद् बाह्यं स्फाटिकोदारमणिचन्द्रं च मण्डलम् ॥ ७२ ॥

तेनामृतेन तद्बाह्ये चिन्तयेत् परमामृतम् ।
आरम्भस्तरुणः प्रौढस्तदन्ते तरुणः पुनः ॥ ७३ ॥

एभिरुल्लासवान् योगी स्वयं शिवमयो यतः ।
सर्वशेषे च देवेशि सामान्यार्घ्यं पदेऽर्पयेत् ॥ ७४ ॥

विशेषार्घ्यं शिवे दत्वा देव्याः प्रियतमो भवेत् ।
साङ्गक्रियां पदे दत्वा सामान्यार्घ्यं शिवे भवेत् ॥ ७५ ॥

इत्युक्त्वा स परामर्षी[र्शी] शक्तितोषणकारकः ।
भोगेन लभते मोक्षं बहुना जल्पितेन किम् ॥ ७६ ॥

नियमः पुरुषे ज्ञेयो न योषित्सु कदाचन ।
यद्वा तद्वा येन केन सर्वदा सर्वतोऽपि च ॥ ७७ ॥

योषितां ध्यानयोगेन शुद्धशेषं न संशयः ।
बालां वा यौवनोन्मत्तां वृद्धां वा युवतीं तथा ॥ ७८ ॥

कुत्सितां वा महादुष्टां नमस्कृत्य विसर्जयेत् ।
तासां प्रहारो निन्दा च कौटिल्यमप्रियं तथा ॥ ७९ ॥

सर्वथा न च कर्तव्यमन्यथा सिद्धिरोधकृत् ।
इति ते कथितं शेषमाचरेद् लक्षणं प्रिये ॥
नित्यपूजाक्रमं भक्त्या ज्ञात्वा सिद्धिमवाप्नुयात् ॥ ८० ॥

इति दक्षिणाम्नाये कङ्कालमालिनीतन्त्रे सार्धलक्षग्रन्थे
महाकालीमन्त्रपूजाकथनं नाम चतुर्थः पटलः ॥

# पञ्चमः पटलः

श्रीपार्वती उवाच

कथयस्व महाभाग पुरश्चरणमुत्तमम् ।
कस्मिन् काले च कर्तव्यं कलौ सिद्धिदमद्भुतम् ॥ १ ॥

श्रीईश्वर उवाच

सामान्यतः प्रवक्ष्यामि पुरश्चर्याविधिं शृणु ।
नाशुभो विद्यते कालो नाशुभो विद्यते क्वचित् ॥ २ ॥
न विशेषो दिवारात्रौ न सन्ध्यायां महानिशि ।
कालाकालं महेशानि भ्रान्तिमात्रं न संशयः ॥ ३ ॥
प्रलये महति प्राप्ते सर्वं गच्छति ब्रह्मणि ।
तत्काले च महाभीमे को गच्छति शुभाशुभम् ॥ ४ ॥
कलिकाले महामाये भवन्त्यल्पायुषो जनाः ।
अनिर्दिष्टायुषः सर्वे कालचिन्ता कथं प्रिये ॥ ५ ॥
यत्कालं ब्रह्मचिन्तायां तत्कालं सफलं प्रिये ।
पुरश्चर्याविधौ देवि कालचिन्तां न चाचरेत् ॥ ६ ॥
नात्र शुद्ध्याद्यपेक्षास्ति न निषिद्धादिदूषणम् ।
दिक्कालनियमो नात्र स्थित्यादिनियमो नहि ॥ ७ ॥
न जपे कालनियमो नार्चादिष्वपि सुन्दरि ।
स्वेच्छाचारोऽत्र नियमो महामन्त्रस्य साधने ॥ ८ ॥
नाधर्मो विद्यते सुभ्रु प्रचरेद् हृष्टमानसः ।
जम्बूद्वीपे च वर्षे च कलौ भारतसंज्ञके ॥ ९ ॥

षण्मासादपि गिरिजे जपात् सिद्धिर्न संशयः ।
यन्नोक्तं सर्वतन्त्रेषु तदद्य कथयामि ते ॥ १० ॥
सुभगे शृणु चार्वङ्गि कल्याणि कमलेक्षणे ।
कलौ च भारते वर्षे येन सिद्धिः प्रजायते ॥ ११ ॥
तत्सर्वं कथयाम्यद्य सावधानाऽवधारय ।
कलिकाले वरारोहे जपमात्रं प्रशस्यते ॥ १२ ॥
न तिथिर्न व्रतं होमं स्नानं सन्ध्या प्रशस्यते ।
पुरश्चर्या विना देवि कलौ मन्त्रं न साधयेत् ॥ १३ ॥
सत्यत्रेतायुगं देवि द्वापरं सुखसाधनम् ।
कलिकाले दुराधर्षं सर्वदुःखमयं सदा ॥ १४ ॥
सारं हि सर्वतन्त्राणां महाकालीषु कथ्यते ।
प्रातःकृत्यादिकं कृत्वा ततः स्नानं समाचरेत् ॥ १५ ॥
कृत्वा सन्ध्यां तर्पणं च संक्षेपेण वरानने ।
पूजां चैव वरारोहे यस्य यत् पटलक्रमात् ॥ १६ ॥
पूजाद्वारे च विन्यस्य बलिं दद्याद् यथाक्रमम् ।
प्राणायामत्रयं चैव माषभक्तबलिं तथा ॥ १७ ॥
सङ्कल्प्योपास्य देवेशि बलिदानस्य साधकः ।
आदौ गणपतेर्बीजं गमित्येकाक्षरं विदुः ॥ १८ ॥
भूमौ विलिख्य गुप्तेन बलिं पिण्डोपमं ततः ।
ॐ गं गणपतये स्वाहा इति मन्त्रेण साधकः ॥ १९ ॥
बलिमित्थं च सर्वत्र बीजोपरि प्रदापयेत् ।
ॐ भैरवाय ततः स्वाहा भैरवाय बलिं ततः ॥ २० ॥
ॐ क्षं क्षेत्रपालाय स्वाहा क्षेत्रपालबलिं ततः ।
ॐ यां योगिनीभ्यो नमः स्वाहा च योगिनीबलिम् ॥ २१ ॥

संपूज्य विधिना दद्यात् पूर्ववत् क्रमतो बलिम् ।
कथोपकथनं देवि त्यजेदत्र सुरालये ॥ २२ ॥
पूर्वं गणपतेर्भद्रे उत्तरे भैरवाय च ।
पश्चिमे क्षेत्रपालाय योगिन्यै दक्षिणे ददेत् ॥ २३ ॥
इन्द्रादिभ्यो बलिं दद्यादात्मकल्याणहेतवे ।
तदा सिद्धिमवाप्नोति चान्यथा हास्यकेवलम् ॥ २४ ॥
पलैकं माषकल्कश्च पलमेकश्च तण्डुलम् ।
अर्द्धतोलं घृतश्चैव दधि अर्द्धार्द्धतोलकम् ॥ २५ ॥
शर्करैकतोलकेन बलिं दद्यात् सुसिद्धये ।
एतेषां सहयोगेन बलिर्भवति शाम्भवि ॥ २६ ॥
पूजास्थाने तथा भद्रे कूर्मबीजं लिखेत् ततः ।
चन्द्रबिन्दुमयं बीजं कूर्मबीजं इतीरितम् ॥ २७ ॥
स्थापयेदासनं तत्र पूजयेत् पटलक्रमात् ।
भूतशुद्धिं ततः कृत्वा प्राणायामं ततः परम् ॥ २८ ॥
अङ्गन्यासं करन्यासं मातृकान्यासमेव च ।
यः कुर्यान्मातृकान्यासं स शिवो नात्र संशयः ॥ २९ ॥
ततस्तु भीमतिलकं रुद्राक्षं धारयेत्ततः ।
रुद्राक्षस्य च माहात्म्यं भस्मनश्च शृणु प्रिये ॥ ३० ॥
आग्नेयमुच्यते भस्म दुग्धगोमयसम्भवम् ।
शोधयेन्मूलमन्त्रेण अष्टोत्तरशतं जपन् ॥ ३१ ॥
शिरोदेशे ललाटे च स्कन्धयोर्भ्रूप्रदेशके ।
बाह्वोः पार्श्वद्वये देवि कण्ठदेशे हृदि प्रिये ॥ ३२ ॥
श्रुतियुग्मे पृष्ठदेशे नाभौ तुण्डे महेश्वरि ।
कूर्पराद् बाहुपर्यन्तं कक्षे ग्रीवासु पार्वति ॥ ३३ ॥

सर्वाङ्गे लेपयद् देवि किमन्यत् कथयामि ते ।
मध्यमानामिकाङ्गुल्यङ्गुष्ठेन तिलकं ततः ॥ ३४ ॥
तिलकं तु त्रिरेखं स्याद् रेखाणां नवधा मतम् ।
पृथिव्यग्निस्तथा शक्तिः क्रियाशक्तिर्महेश्वरः ॥ ३५ ॥
देवः प्रथमरेखायां भक्त्या ते परिकीर्तितः ।
न भस्मांश्चैव सुभगे द्वितीया चैव देवता ॥ ३६ ॥
परमात्मा शिवो देवस्तृतीयायाश्च देवता ।
एतान्नित्यं नमस्कृत्य त्रिपुण्ड्रं धारयेद् यदि ॥ ३७ ॥
महेश्वरव्रतमिदं कृत्वा सिद्धीश्वरो भवेत् ।
ब्रह्मचारी गृहस्थो वा वनस्थो वा यतिस्तथा ॥ ३८ ॥
महापातकसंघातैर्मुच्यते सर्वपातकात् ।
तथाऽन्यक्षत्रविट्शूद्रस्त्रीहत्यादिषु पातकैः ॥ ३९ ॥
वीरब्राह्मणहत्याभिर्मुच्यते सुभगेश्वरि ।
अमन्त्रेणापि यः कुर्याद् ज्ञात्वा च महिमोन्नतिम् ॥ ४० ॥
त्रिपुण्ड्रभालतिलको मुच्यते सर्वपातकैः ।
परद्रव्यापहरणं परदाराभिमर्षणम् ॥ ४१ ॥
परनिन्दा परक्षेत्रहरणं परपीडनम् ।
असत्यवाक्यपैशुन्यं पारुष्यं देवविक्रयम् ॥ ४२ ॥
कूटसाक्ष्यं व्रतत्यागं कैतवं नीचसेवनम् ।
गोमृगाणां हिरण्यस्य तिलकम्बलवाससाम् ॥ ४३ ॥
अन्नधान्यकुशादीनां नीचेभ्योऽपि परिग्रहम् ।
दासीवेश्यासु कृष्णासु वृषलीसु नदीषु च ॥ ४४ ॥
रजस्वलासु कन्यासु विधवासु च सङ्गमे ।
मांसचर्मरसादीनां लवणस्य च विक्रयम् ॥ ४५ ॥

एवंरूपाण्यसंख्यानि पापानि विविधानि च ।
सद्य एव विनश्यन्ति त्रिदण्डस्य च धारणात् ॥ ४६ ॥

शिवद्रव्यापहरणात् शिवनिन्दाश्च कुत्रचित् ।
निन्दायाः शिवभक्तानां प्रायश्चित्तैर्न शुध्यति ॥ ४७ ॥

त्रिपुण्ड्रं शिरसा धृत्वा तत्क्षणादेव शुध्यति ।
देवद्रव्यापहरणे ब्रह्मस्वहरणेन च ॥ ४८ ॥

कुलान्यग्रय एवात्र विनश्यन्ति सदाशिवे ।
महादेवि महाभागे ब्राह्मणातिक्रमेण च ॥ ४९ ॥

कुलरक्षा भवत्यस्मात् त्रिपुण्ड्रस्य च सेवनात् ।
रुद्राक्षं यस्य देहेषु ललाटेषु त्रिपुण्ड्रकम् ॥ ५० ॥

यदि स्यात् स च चाण्डालः सर्ववर्णोत्तमोत्तमः ।
यानि तीर्थानि लोकेऽस्मिन् गङ्गाद्याः सरितश्च याः ॥ ५१ ॥

स्नातो भवति सर्वत्र यल्ललाटे त्रिपुण्ड्रकम् ।
सप्तकोटिमहामन्त्रा उपमन्त्रास्तथैव च ॥ ५२ ॥

श्रीविष्णोः कोटिमन्त्राश्च कोटिमन्त्राः शिवस्य च ।
ते सर्वे तेन जप्ता च यो बिभर्ति त्रिपुण्ड्रकम् ॥ ५३ ॥

सहस्रं पूर्वजातानां सहस्रं च जनिष्यताम् ।
स्ववंशजातमर्त्यानामुद्धरेद् यस्त्रिपुण्ड्रकृत् ॥ ५४ ॥

षडैश्वर्यगुणोपेतः प्राप्य दिव्यवपुस्ततः ।
दिव्यं विमानमारुह्य दिव्यास्त्रशतसेवितः ॥ ५५ ॥

विद्याधराणां सिद्धानां गन्धर्वाणां महौजसाम् ।
इन्द्रादिलोकपालानां लोकेषु च यथाक्रमम् ॥ ५६ ॥

भुक्त्वा भोगान् सुविपुलं प्रदेशानां पुरेषु च ।
ब्रह्मणः पदमासाद्य तत्र कल्पायुतं वसेत् ॥ ५७ ॥

विष्णुलोके च रमते आब्रह्मणः शतायुषम् ।
शिवलोकं ततः प्राप्य रमते कालमक्षयम् ॥ ५८ ॥
शिवसायुज्यमाप्नोति न स भूयोऽपि जायते ।
शैवे विष्णौ च सौरे च गाणपत्येषु पार्वति ॥ ५९ ॥
शक्तिरूपा च या गौः स्यात् तस्या गोमयसम्भवम् ।
भस्म तेषु महेशानि विशिष्टं परिकीर्तितम् ॥ ६० ॥
शैवापि च वरारोहे साद्गुण्यं वरवर्णिनि ।
शक्तौ प्रशस्तमोक्षं हि भस्म यौवनजीवने ॥ ६१ ॥
अन्येषां गोकरीषेण भस्म शक्त्यादिकेष्वपि ।
सामान्यमेतत् सुश्रोणि विशेषं शृणु मत्प्रिये ॥ ६२ ॥
करीषभस्मादनघे हौमं भस्म महाफलम् ।
हौमभस्मात् कोटिगुणं विष्णुहोमं महेश्वरि ॥ ६३ ॥
शिवहोमं तद्द्विगुणं भस्मात्तु शृणु सुन्दरि ।
स्वीयेष्टदेवताहोममनन्तं प्रियवादिनि ॥ ६४ ॥
तन्माहात्म्यमहं वक्तुं कल्पकोटिशतैरपि ।
न समर्थो योगमार्गो किमन्यत् कथयामि ते ॥ ६५ ॥
होमः कलियुगे देवि जम्बूद्वीपस्य वर्षके ।
भारताख्ये महाकालि दशांशं क्रमतः शिवे ॥ ६६ ॥
नास्तिकास्ते महामोहे केवलं होममाचरेत् ।
लक्षं वाप्ययुतं वापि सहस्रं वा वरानने ॥ ६७ ॥
अष्टाधिकशतं वापि काम्यहोमं प्रकल्पयेत् ।
नित्यहोमं च कर्तव्यं शक्त्या च परमेश्वरि ॥ ६८ ॥
प्रजपेन्नित्यपूजायामष्टोत्तरसहस्रकम् ।
अष्टोत्तरशतं वापि अष्टपञ्चाशतं चरेत् ॥ ६९ ॥

अष्टात्रिंशत्संख्यकं वा अष्टाविंशतिमेव च ।
अष्टादशं द्वादशं च दशाष्टौ च विधानतः ॥ ७० ॥
होमं चैव महेशानि एतत्संख्याविधानतः ।
एवं सर्वत्र देवेशि नित्यकर्ममहोत्सवः ॥ ७१ ॥
इत्थंप्रकारं यद् भस्म अङ्गे संलिप्य साधकः ।
मालाश्चैव महेशानि नरास्थ्यद्भुतपूजिताम् ॥ ७२ ॥
गले दद्याद् वरारोहे शक्तश्चेद् दिव्यनायिके ।
रुद्राक्षमाल्यं संधार्यं ततः शृणु मम प्रिये ॥ ७३ ॥
एवं कृत्वा त्वया सार्द्धं पितृभूमौ स्थितं मया ।
सुभगे शृणु सुश्रोणि रुद्राक्षं परमं पदम् ॥ ७४ ॥
सर्वपापक्षयकरं रुद्राक्षं ब्रह्मणीश्वरि ।
अभुक्तो वाऽपि भुक्तो वा नीचान्नीचतरोऽपि वा ॥ ७५ ॥
रुद्राक्षं धारयेद् यस्तु मुच्यते सर्वपातकात् ।
रुद्राक्षधारणं पुण्यं कैवल्यसदृशं भवेत् ॥ ७६ ॥
महाव्रतमिदं पुण्यं त्रिकोटितीर्थसंयुतम् ।
सहस्रं धारयेद् यस्तु रुद्राक्षाणां शुचिस्मिते ॥ ७७ ॥
तं नमन्ति सुराः सर्वे यथा रुद्रस्तथैव सः ।
अभावे तु सहस्रस्य बाह्वोः षोडश षोडश ॥ ७८ ॥
एकं शिखायां कवचयोर्द्वादश द्वादश क्रमात् ।
द्वात्रिंशत् कण्ठदेशे तु चत्वारिंशत् शिरे तथा ॥ ७९ ॥
उभयोः कर्णयोः षट् षड् हृदि अष्टोत्तरं शतम् ।
यो धारयति रुद्राक्षान् रुद्रवत् स च पूजितः ॥ ८० ॥
मुक्ताप्रवालस्फटिकैः सूर्येन्दुमणिकाञ्चनैः ।
समेतान् धारयेद् यस्तु रुद्राक्षान् शिव एव सः ॥ ८१ ॥

केवलानपि रुद्राक्षान् यो बिभर्ति वरानने ।
तं न स्पृशन्ति पापानि तिमिरानीव भास्करम् ॥ ८२ ॥
रुद्राक्षमालया जप्तो मन्त्रोऽनन्तफलप्रदः ।
यस्याङ्गे नास्ति रुद्राक्ष एकोऽपि वरवर्णिनि ॥ ८३ ॥
तस्य जन्म निरर्थं स्यात् त्रिपुण्ड्ररहितं यथा ।
रुद्राक्षं मस्तके बध्वा शिरःस्नानं करोति यः ॥ ८४ ॥
गङ्गास्नानफलं तस्य जायते नात्र संशयः ।
रुद्राक्षं पूजयेद् यस्तु विना तोयाभिषेचनैः ॥ ८५ ॥
यत्फलं शिवपूजायां तदेवाप्नोति निश्चितम् ।
एकवक्त्रैः पञ्चवक्त्रैस्त्रयोदशमुखैस्तथा ॥ ८६ ॥
चतुर्दशमुखैर्जप्त्वा सर्वसिद्धिः प्रजायते ।
किं बहूक्त्या वरारोहे कृत्वा गतिकमद्भुतम् ॥ ८७ ॥
रुद्राक्षं यत्नतो धृत्वा शिव एव स साधकः ।
भस्मना तिलकं कृत्वा पश्चाद् रुद्राक्षधारणम् ॥ ८८ ॥
प्राणायामं ततः कृत्वा संकल्प्योपास्य साधकः ।
मूलमन्त्रसिद्धिकामः कुर्याच्च वर्णपूजनम् ॥ ८९ ॥
षट्त्रिंशद्वर्णमालार्चा विस्तारोन्नतिशालिनी ।
विलिप्य चन्दनं शुद्धं सर्ववर्णात्मके घटे ॥ ९० ॥
सर्वावयवसंयुक्तान् विलिख्य मातृकाक्षरान् ।
गुरुं संपूज्य विधिवद् घटस्थापनमाचरेत् ॥ ९१ ॥
पश्चाश्च मातृकावर्णान् पूजयेद् विभवक्रमात् ।
पञ्चोपचारैः संपूज्य ध्यानं कृत्वा प्रसन्नधीः ॥ ९२ ॥
शुक्लविद्युत्प्रतीकाशां द्विभुजां लोललोचनाम् ।
कृष्णाम्बरपरीधानां शुक्लवस्त्रोत्तरीयिणीम् ॥ ९३ ॥

नानाभरणभूषाढ्यां सिन्दूरतिलकोज्ज्वलाम् ।
कटाक्षविशिखोद्दीप्तामञ्जनाञ्चितलोचनाम् ॥ ९४ ॥

मन्त्रसिद्धिप्रदां नित्यां ध्यायेत् सत्त्वस्वरूपिणीम् ।
रक्तविद्युत्प्रतीकाशां द्विभुजां लोललोचनाम् ॥ ९५ ॥

शुक्लाम्बरपरीधानां कृष्णवस्त्रोत्तरीयिणीम् ।
नानाभरणभूषाढ्यां सिन्दूरतिलकोज्ज्वलाम् ॥ ९६ ॥

कटाक्षविशिखोद्दीप्तामञ्जनाञ्चितलोचनाम् ।
मन्त्रसिद्धिप्रदां नित्यां ध्यायेद् रजःस्वरूपिणीम् ॥ ९७ ॥

भ्रमद्भ्रमरसंकाशां द्विभुजां लोललोचनाम् ।
रक्तवस्त्रपरीधानां कृष्णवस्त्रोत्तरीयिणीम् ॥ ९८ ॥

नानाभरणभूषाढ्यां सिन्दूरतिलकोज्ज्वलाम् ।
कटाक्षविशिखोद्दीप्तां भ्रूलतापरिसेविताम् ॥ ९९ ॥

मन्त्रसिद्धिप्रदां नित्यां ध्यायेत् तमःस्वरूपिणीम् ।
ध्यात्वा पाद्यादिकं दत्वा त्रिगुणां पूजयेत् क्रमात् ॥१००॥

ॐ ऊङ्काररूपिण्यै नमः पाद्यैः प्रपूजयेत् ।
आदिध्यानेन सुभगे यजेत् सत्त्वमयीं पराम् ॥१०१॥

ॐ कङ्काररूपिण्यै नमः पाद्यादिभिर्यजेत् ।
क्रमात् सप्तदशार्णं हि द्वितीयं ध्यानमाचरन् ॥१०२॥

ॐ दंकाररूपिण्यै नमः पाद्यादिभिर्यजेत् ।
क्रमात् सप्तदशार्णं हि तृतीयं ध्यानमाचरन् ॥१०३॥

एवं क्रमेण पञ्चाशद्वर्णान् हि परिपूजयेत् ।
इति ते कथितं भद्रे पञ्चाशद्वर्णपूजनम् ॥१०४॥

वर्णानां पूजनाद् भद्रे देवपूजा प्रजायते ।
अणिमाद्यष्टसिद्धीनां पूजा स्याद् वर्णपूजनात् ॥१०५॥

सप्तकोटिमहाविद्या उपविद्या तथैव च ।
श्रीविष्णोः कोटिमन्त्राश्च कोटिमन्त्राः शिवस्य च ॥१०६॥

पूजनात् पूजितं सर्वं वर्णानां सिद्धिदायकम् ।
प्रथमं प्रणवं दत्वा सहस्रं कुण्डलीमुखे ॥१०७॥

मूलविद्यां ततो भद्रे सहस्रयुगलं जपेत् ।
ततस्तु सुभगे मातर्जपेच्च दीपिनीं पराम् ॥१०८॥

आदौ गायत्रीमुच्चार्य मूलमन्त्रं ततः परम् ।
प्रणवं च ततो भीमे भयानां सहयोगतः ॥१०९॥

सदैवैनां महेशानि दीपिनीं परिकीर्तिताम् ।
एतामपि सहस्रं च प्रजपेत् कुण्डलीमुखे ॥११०॥

प्रणवादौ जपेद् विद्यां गायत्र्यां दीपिनीं पराम् ।
गायत्रीं शृणु वक्ष्यामि अँ डँ मँ मँ डँ नँ प्रिये ॥१११॥

षडक्षरमिदं मन्त्रं गायत्री समुदीरितम् ।
अस्याश्च फलमाप्नोति तदैव वरवर्णिनि ॥११२॥

स्मरणं कुण्डलीमध्ये मनसा उन्मनी सह ।
सहस्रारे कर्णिकायां चन्द्रमण्डलमध्यगाम् ॥११३॥
सर्वसंकल्परहिता कला सप्तदशी भवेत् ।
उन्मनीनाम तस्य हि भवपाशनिकृन्तनी ॥११४॥

उन्मन्या सहितो योगी न योगी उन्मनीं विना ।
बुद्धिमङ्कुशसंयुक्तामुन्मनीं कुसुमान्विताम् ॥११५॥

उन्मनीश्च मनोवर्णं स्मरणात् सिद्धिदायिनीम् ।
स्मरेत् कुण्डलीयोगादमृतं रक्तरोचिषम् ।
उन्मनीकुसुमं तत्तु ज्ञेयं परमदुर्लभम् ॥११६॥

हंसं नित्यमनन्तमध्यमगुणं स्वाधारतो निर्गतां
शक्तिः कुण्डलिनी समस्तजननी हस्ते गृहीत्वा च ताम् ।
कान्ता स्वाश्रममर्ककोटिरुचिरा नामामृतोल्लासिनी
देवीं तां गमनागमैः स्थिरमतिर्ध्यायेद् जगन्मोहिनीम् ॥११७॥

इति ते कथितं ध्यानं मृत्युञ्जयमनामयम् ।
विना मनोन्मनीमन्त्रं विना ध्यानं जपं वृथा ॥११८॥

ततः संकल्प्य ध्यात्वैव मूलमन्त्रस्य सिद्धये ।
गायत्रीमयुतं जप्त्वा तदर्धं प्रणवं जपेत् ॥११९॥

दीपनं प्रणवस्यार्धं जपेत् पञ्चदिनावधि ।
शूद्राणां प्रणवं देवि चतुर्दशस्वरं प्रिये ॥१२०॥

नादबिन्दुसमायुक्तं स्त्रीणां चैव वरानने ।
मनौ स्वाहा च या देवी शूद्रोच्चार्या न संशयः ॥१२१॥

होमकार्ये महेशानि शूद्रः स्वाहां न चोच्चरेत् ।
मन्त्रोऽप्यूहो नास्ति शूद्रे विषबीजं विना प्रिये ॥१२२॥

गणपत्याद्यौ यद् दत्तं बलिदानं दिने दिने ।
तेनैव बलिना भद्रे हविष्यं सम्मतं सदा ॥१२३॥

शेष इष्टं प्रपूज्याथ हविष्याशी स्त्रिया सह ।
जापकस्य च यन्मन्त्रमेकवर्णं ततः प्रिये ॥१२४॥

तस्य पत्नी साभिरूपा प्रयतं प्रजपेत् यदि ।
तदा फलमवाप्नोति साधकः शक्तिसङ्गतः ॥१२५॥

शक्तिहीने भवेद् दुःखं कोटिपुरश्चरणेन किम् ।
साधकश्च हविष्याशी साधिका तद्विवर्जिता ॥१२६॥

यथेच्छाभोजनं तस्यास्ताम्बूलपूरितानना ।
नानाभरणवेषाढ्या धूपामोदनमोदिता ॥१२७॥
शिवहीना तु या नारी दूरे तां परिवर्जयेत् ।

श्रीदेवी उवाच

गायत्रीजपकाले तु साधिका किं जपेत् प्रभो ॥१२८॥

श्रीशिव उवाच

गायत्रीमजपाविद्यां प्रजपेद् यदि साधिका ।
पूर्वोक्तेन विधानेन ध्यात्वा कृत्वा च पूजनम् ॥१३१॥
मानसं परमेशानि जपेत् तद्गतमानसा ।
ततः षष्ठदिनं प्राप्य प्रातः स्नानं समाचरेत् ॥१३२॥
कुङ्कुमागुरुपङ्केन कस्तूरीचन्दनेन च ।
कूर्मबीजं लिखेद् भद्रे अथवा श्वेतचन्दनैः ॥१३३॥
तत्रासनं समास्थाय विशेत् साधकसन्निधौ ।
एवं विधाय सा साध्वी साधकोऽपि प्रसन्नधीः ॥१३४॥
संकल्प्य विधिना भक्त्या मूलमन्त्रस्य सिद्धये ।
लक्षं जपेत् पुरश्चर्याविधौ विधिविधानतः ॥१३५॥
तद्विधानं वदामीशे श्रुत्वा त्वमवधारय ।
ॐ ॐ कँ हुँ भँ सँ देवि प्रातः स्नानोत्तरं परम् ॥१३६॥
दशधा प्रजपेन्मन्त्रं जिह्वाशोधनकारकम् ।
ततश्च प्रजपेन्मन्त्रं मौनी मध्यन्दिनावधि ॥१३७॥
तस्य वामे तस्य पत्नी तस्य एकाक्षरं जपेत् ।
साधकः शिवरूपश्च साधिका शिवरूपिणी ॥१३८॥

अन्योन्यचिन्तनाच्चैव देवत्वं जायते ध्रुवम् ।
आदावन्ते च प्रणवं दत्वा मन्त्रं जपेत् सुधीः ॥१३९॥
दशधा वा सप्तदशं जप्त्वा मन्त्रं जपेत्तु सः ।
प्रातःकालं समारभ्य जपेन्मध्यन्दिनावधि ॥१४०॥
एवं हि प्रत्यहं कुर्याद् यावल्लक्षं समाप्यते ।
द्वितीयप्रहरादूर्ध्वं नित्यपूजादिकं चरेत् ॥१४१॥
स्नानं कृत्वा ततो धीमान् हविष्यं बुभुजेत् ततः ।
तत्पत्नी शक्तिरूपा च पातिव्रत्यपरायणा ॥१४२॥
तस्याश्चेच्छा भवेद् येषु बुभुजेत् पानभूषिता ।
दशदण्डगते रात्रौ शय्यायां प्रजपेन्मनुम् ॥१४३॥
ताम्बूलपूरितमुखो धूपामोदेन मोदितः ।
वामे श्रीशक्तिरूपा च जपेच्च साधकाक्षरम् ॥१४४॥
दक्षिणे साधकः सिद्धो दिवामाने जपेन्मनुम् ।
आद्यन्तगोपनं कृत्वा प्रत्यहं प्रजपेद् यदि ॥१४५॥
ततः सिद्धिमवाप्नोति प्रकाशाद्धानिरेव च ।
मातृकापुटितं कृत्वा चन्द्रबिन्दुसमन्वितम् ॥१४६॥
प्रत्यहं प्रजपेन्मन्त्रमनुलोमविलोमतः ।
जपादौ सुभगे प्रौढे प्रत्यहं प्रजपेन्मनुम् ॥१४७॥
तेन हे सुभगे मातः पुरश्चरणमीरितम् ।
समाप्ते पुरश्चरणे गुरुदेवं प्रपूजयेत् ॥१४८॥
तदा सिद्धो भवेन्मन्त्रो गुरुदेवस्य पूजनात् ।
जम्बूद्वीपस्य वर्षे च कलिकाले च भारते ॥१४९॥
दशांशं वर्जयेद् भद्रे नास्ति होमः कदाचन ।
दशांशं क्रमतो देवि पञ्चाङ्गविधिना कलौ ॥१५०॥

नाचरेत् कुत्रचिन्मन्त्री पुरश्चर्याविधिं शुभे ।
प्रमाद् यदि महेशानि कारयेत् साधकोत्तमः ॥१५१॥
सिद्धिहानिर्महानिष्टं जायते भारतेऽनघ ।
दशांशं जायते पूर्णं गुरुदेवस्य पूजनात् ॥१५२॥
अत एव महेशानि भक्त्या गुरुपदं यजेत् ।
दक्षिणां गुरवे दद्यात् सुवर्णं वाससान्वितम् ॥१५३॥
धान्यं तिलं तथा दद्याद् धेनुं वापि पयस्विनीम् ।
अन्यथा विफलं सर्वं कोटिपुरश्चरेण किम् ॥१५४॥
कुमारीभोजनं सान्तं सर्वसिद्धिप्रदायकम् ।
कुमारी भोजिता येन त्रैलोक्यं तेन भोजितम् ॥१५५॥
पूजनाद् दर्शनात् तस्या रमणात् स्पर्शनात् प्रिये ।
सर्वं सम्पूर्णमायाति साधको भक्तिमानसः ॥१५६॥
पुरश्चरणसम्पन्नो वीरसाधनमाचरेत् ।
यस्यानुष्ठानमात्रेण मन्दभाग्योऽपि सिध्यति ॥१५७॥
पुत्रदारधनस्नेहलोभमोहविवर्जितः ।
मन्त्रं वा साधयिष्यामि देहं वा पातयाम्यहम् ॥१५८॥
एवं प्रतिज्ञामासाद्य गुरुमाराध्य यत्नतः ।
बलिदानादिना सर्वं मानसैः परिपूज्य च ॥१५९॥
शरत्काले महापूजा क्रियते या च वार्षिकी ।
तस्मिन् पक्षे विशेषेण पुरश्चरणमाचरेत् ॥१६०॥
देव्या विधिं समारभ्य यावत् स्यान्नवमी तिथिः ।
प्रत्यहं प्रजपेन्मन्त्रं सहस्रं भक्तिभावतः ॥१६१॥
होमपूजादिकं चैव यथाशक्त्या विधिं चरेत् ।
सप्तम्यादौ विशेषेण पूजयेदिष्टदेवताम् ॥१६२॥

अष्टम्यादि नवम्यान्तमुपवासपरो भवेत् ।
अष्टमी-नवमीरात्रौ पूजां कुर्यात् महोत्सवम् ॥१६३॥

इत्थं जपादिकं कुर्यात् साधकः स्थिरमानसः ।
शक्त्या सह वरारोहे कुमारीपूजनं चरेत् ॥१६४॥

दशम्यां पारणं कुर्यान्मत्स्यमांसादिभिः प्रिये ।
एवं पुरस्क्रियां कृत्वा साधकः शिवतां व्रजेत् ॥१६५॥

अथवान्यप्रकारेण पुरश्चरणमुच्यते ।
शरत्काले महादेव्या बोधने च महोत्सवे ॥१६६॥

प्रतिपत्तिथिमारभ्य नवमान्तं मम प्रिये ।
पूर्वोक्तविधिना मन्त्री कुर्यात् पुरस्क्रियां धिया ॥१६७॥

अथवान्य प्रकारेण पुरश्चरणमुच्यते ।
शरत्काले चतुर्थ्यादि नवम्यन्तं सहस्रकम् ॥१६८॥

जपित्वा प्रत्यहं भद्रे सप्तम्यादौ प्रपूजयेत् ।
तथा सर्वोपचारैस्तु वस्त्रालङ्कारभूषणैः ॥१६९॥

महिषैश्छागलैर्मेषैश्चतुर्वर्गं लभेन्नरः ।
अष्टमीसन्धिवेलायां तेनैन विधिना पशुम् ॥१७०॥

छित्वा तस्योपरि स्थित्वा मध्यनक्तं जपेत् सुधीः ।
विभीर्ध्यानपरो भूत्वा वांछितां सिद्धिमाप्नुयात् ॥१७१॥

नवम्यां नियतं जप्त्वा पूजयित्वा यथाविधि ।
गुरवे दक्षिणां दद्याद् दशम्यां पारयेत्ततः ॥१७२॥

एवं कृत्वा पुरश्चर्यां किं न साधयति साधकः ।
अथवान्यप्रकारेण पुरश्चरणमुच्यते ॥१७३॥

अष्टमीसन्धिवेलायामष्टोत्तरलतागृहे ।
प्रविश्य मन्त्री विधिवत् तासामभ्यर्च्य यत्नतः ॥१७४॥

पूर्वोक्तकल्पमासाद्य पूजादिकमथाचरन् ।
केवलं कामदेवोऽसौ जपेदष्टोत्तरं शतम् ॥१७५॥

महासिद्धो भवेत् सद्यो लतादर्शनपूजनात् ।
लतागृहं शृणु प्रौढे कामकौतुकलालसे ॥१७६॥

अष्टौ संख्या अतिक्रम्य नवसंख्यादिसांखिकाम् ।
यौवनादिगुणैर्युक्ताः साधिकाः कामगर्विताः ॥१७७॥

स्त्रियो यत्र गृहे सन्ति तद्गृहं हि लतागृहम् ।
अथवान्यप्रकारेण पुरश्चरणमुच्यते ॥१७८॥

पूर्वोक्तानि महेशानि हेमन्तादिऋतौ चरेत् ।
साधकः पूर्णतां प्राप्य सर्वभोगेश्वरो भवेत् ॥१७९॥

अथवान्यप्रकारेण पुरश्चरणमुच्यते ।
चतुर्दशीं समारभ्य यावदन्या चतुर्दशी ॥१८०॥

तावज्जप्ते महेशानि मन्त्री वांछितमाप्नुयात् ।
अथवान्यप्रकारेण पुरश्चरणमुच्यते ॥१८१॥

कृष्णाष्टम्यां समारभ्य यावत् कृष्णाष्टमी भवेत् ।
सहस्रसंख्याजप्ते तु पुरश्चरणमिष्यते ॥१८२॥

यत् कृत्वा परमेशानि सिद्धिः स्यान्नात्र संशयः ।
अथवान्यप्रकारेण पुरश्चरणमुच्यते ॥१८३॥

कृष्णां चतुर्दशीं प्राप्य नवम्यन्तं महोत्सवे ।
अष्टमी-नवमीरात्रौ पूजां कुर्याद् विशेषतः ॥१८४॥

दशम्यां पारणं कुर्यान्मत्स्यमांसादिभिः प्रिये ।
षट्सहस्रंजपेन्नित्यं भक्तिभावपरायणः ॥१८५॥

अथवान्यप्रकारेण पुरश्चरणमुच्यते ।
अष्टम्याश्च चतुर्दश्यां नवम्यां वीरवन्दिते ॥१८६॥

सूर्योदयं समारभ्य यावत् सूर्योदयो भवेत् ।
तावज्जप्ते निरातङ्कः सर्वसिद्धीश्वरो भवेत् ॥१८७॥
अथवान्यप्रकारेण पुरश्चरणमुच्यते ।
अष्टम्याञ्च चतुर्दश्यां पक्षयोरुभयोरपि ॥१८८॥
अस्तमारभ्य सूर्यस्य यावत् सूर्यास्तमं भवेत् ।
तावज्जप्तो निरातंकः सर्वसिद्धीश्वरो भवेत् ॥१८९॥
अथवा निर्जनस्थस्य अस्थिशय्यासनेन च ।
उदयास्तं दिवा जप्त्वा सर्वसिद्धीश्वरो भवेत् ॥१९०॥
तेनासनेन वा देवी अस्तमारभ्य भास्वतः ।
जपित्वा चास्तपर्यन्तं साधकः सिद्धिमाप्नुयात् ॥१९१॥
जपान्ते पूजयित्वा च गुरवे दक्षिणां ददेत् ।
अथवान्यप्रकारेण पुरश्चरणमुच्यते ॥१९२॥
सूर्योदयं समारभ्य घटिका च दशक्रमात् ।
ऋतवः स्युर्वसन्ताद्या अहोरात्रं दिने दिने ॥१९३॥
वसन्तो ग्रीष्म वर्षा च शरद्हेमन्तशिशिराः ।
वसन्तश्चैव पूर्वाह्णे ग्रीष्मो मध्यन्दिनं तथा ॥१९४॥
अपराह्णे प्रावृषः स्युः प्रदोषे शरदः स्मृताः ।
अर्द्धरात्रौ तु हेमन्तः शेषे च शिशिरः स्मृतः ॥१९५॥
सूर्योदयं समारभ्य वसन्तान्तं समाहितः ।
तावज्जप्ते महेशानि पुरश्चर्या हि सिध्यति ॥१९६॥
ततः पूजादिकं कृत्वा शक्तियुक्तश्च साधकः ।
गुरवे दक्षिणां दत्वा सर्वसिद्धीश्वरो भवेत् ॥१९७॥
अथवान्यप्रकारेण पुरश्चरणमुच्यते ।
ग्रीष्मादिषु महेशानि पञ्चस्वर्त्तुषु साधकः ॥१९८॥

पृथग्जप्त्वा वरारोहे पुरश्चर्या हि सिध्यति ।
पूर्वोक्तविधिना सर्वं कर्तव्यं वीरवन्दिते ॥१९९॥
ऋतौ जप्त्वा समस्ते तु शक्तितः पूजयेत् पराम् ।
एवमाचर्यकृत्यं वै धनानामीश्वरो भवेत् ॥२००॥
अथवान्यप्रकारेण पुरश्चरणमुच्यते ।
कुमारीपूजनादेव पुरश्चर्याविधिः स्मृतः ॥२०१॥
अथवान्यप्रकारेण पुरश्चरणमुच्यते ।
गुरुमानीय संस्थाप्य देववत् पूजयेद् विभुम् ॥२०२॥
वस्त्रालंकारभूषाद्यैः स्वयं सन्तोषयेद् गुरुम् ।
तत्सुतं तत्सुतं वापि तत्पत्नीञ्च विशेषतः ॥२०३॥
पूजयित्वा मनुं जप्त्वा सर्वसिद्धीश्वरो भवेत् ।
गुरुसन्तोषमात्रेण दुष्टमन्त्रोऽपि सिध्यति ॥२०४॥
मासि मासि च मन्त्रस्य संस्कारान् दशधा चरेत् ।
एवं क्रमविधानेन कृत्वा नित्यं हि साधकः ॥२०५॥
षण्मासाभ्यन्तरे वापि एकवर्षान्तरेऽपि वा ।
साधनैः सुभगे भद्रे यदि सिद्धिर्न जायते ॥२०६॥
उपायास्तत्र कर्तव्याः सत्यमेतं मतं शृणु ।
ख्यातिर्वाहनभूषादिलाभः सुचिरजीविता ॥२०७॥
नृपाणां तत्कुलानाञ्च वात्सल्यं लोकवश्यता ।
महदैश्वर्यनित्यञ्च पुत्रपौत्रादिसम्पदः ॥२०८॥
अधमा सिद्धयो भद्रे षण्मासाभ्यन्तरे यदि ।
एकवर्षान्तरे वापि सन्ति शङ्करवन्दिते ॥२०९॥
साधकाश्च तदा सिद्धा नात्र कार्या विचारणा ।
अत्रोपायान् प्रवक्ष्यामि यदि सिद्धिविलम्बनम् ॥२१०॥

भ्रामणं बोधनं वश्यं पाडनञ्च तथा प्रिये।
पोषणं तोषणञ्चैव दहनञ्च ततः परम् ॥२११॥
उपायाः सन्ति सप्तैते कृत्वा त्रेतायुगेषु च।
द्वापरे च तथा भद्रे उपायं सप्तमं स्मृतम् ॥२१२॥
न प्रशस्तं कलौ भद्रे सप्तशंकरभाषितम्।
डाकिन्यादियुतं कृत्वा लक्षञ्च प्रजपेन्मनुम् ॥२१३॥
डाकिनीपुटितं कृत्वा यदि सिद्धिर्न जायते।
राकिणीपुटितं कृत्वा लक्षञ्च प्रजपेन्मनुम् ॥२१४॥
राकिणीपुटितं कृत्वा यदि सिद्धिर्न जायते।
लाकिनीपुटितं कृत्वा लक्षञ्च प्रजपेन्मनुम् ॥२१५॥
लाकिनीपुटितं कृत्वा यदि सिद्धिर्न जायते।
काकिनीपुटितं कृत्वा लक्षञ्च प्रजपेन्मनुम् ॥२१६॥
काकिनीपुटितं कृत्वा यदि सिद्धिर्न जायते।
शाकिनीपुटितं कृत्वा लक्षञ्च प्रजपेन्मनुम् ॥२१७॥
शाकिनीपुटितं कृत्वा जपेल्लक्षं समाहितः।
तदा सिद्धो भवेन्मन्त्रो नात्र कार्या विचारणा ॥२१८॥
लाकिनीपुटितं कृत्वा यदि सिद्धिर्न जायते।
पुटितं सत्त्वरूपिण्या लक्षञ्च प्रजपेन्मनुम् ॥२१९॥
पुटितं सत्त्वरूपिण्या यदि सिद्धिर्न जायते।
ककारादिक्षकारान्ता मातृका वर्णरूपिणी ॥२२०॥
तया संपुटितं कृत्वा लक्षञ्च प्रजपेन्मनुम्।
छिन्नविद्यादयो मन्त्रास्तन्त्रे तन्त्रे निरूपिताः ॥२२१॥
एते ते सिद्धिमायान्ति मातृकावर्णभावतः।
निश्चितं मन्त्रसिद्धिः स्यान्नात्र कार्या विचारणा ॥२२२॥

वर्णमयी पुटीकृत्य यदि सिद्धिर्न जायते ।
ततो गुरुपुटीकृत्य लक्षञ्च संजपेन्मनुम् ॥२२३॥
गुरुदेवप्रसादेन अतुलां सिद्धिमाप्नुयात् ।

श्रीपार्वती उवाच—

आदिदेव महादेव आद्यन्तगोपनं वद ।
यदि नो कथ्यते देव विमुश्चामि तदा तनुम् ॥२२४॥

श्रीईश्वर उवाच—

आद्यन्तगोपनं सूक्ष्मं कथं तत् कथयाम्यहम् ।
जम्बूद्वीपस्य वर्षेषु कलौ लोकाधमाः स्मृताः ॥२२५॥
गुरुभक्तिविहीनाश्च भविष्यन्ति गृहे गृहे ।
दुष्क्रियायां रताः सर्वे परमज्ञानवर्जिताः ॥२२६॥
लौकिकाचारिणः सर्वे भविष्यन्ति गृहे गृहे ।
विना शब्दपरिज्ञानं मन्त्रदाता द्विजो भवेत् ॥२२७॥
मम सः श्रीमतीमन्त्रः संसारोद्भवबन्धनात् ।
कथ्यते देवदेवेशि मन्त्रः सर्वत्र सिद्धिदः ॥
जायते तेन मे शङ्का कथं मे प्राणवल्लभे ॥२२८॥

श्रीभैरवी उवाच—

भूतनाथ महाभाग हृदये मे कृपां कुरु ।
कथ्यतां कथ्यतां देव यतस्ते सेविका वयम् ॥२२९॥

श्रीईश्वर उवाच—

सुभगे शृणु मे मातः कृपया कथयामि ते ।
प्रथमे डाकिनीबीजं युवती षोडशाक्षरम् ॥२३०॥
अँ आँ इँ ईँ उँ ऊँ ऋँ ॠँ लृँ ॡँ एँ ऐँ ओँ औँ अँ अँः
डाकिनी देवदेवस्य ईरितं बीजमुत्तमम् ।
आद्यन्तपुटितं कृत्वा मन्त्रं लक्षं जपेद् यदि ॥२३१॥

तदा सिद्धो वरारोहे नान्यथा वचनं मम।
अधुना संप्रवक्ष्यामि डाकिनीबीजमद्भुतम् ॥
एकोच्चारणमात्रेण सत्यत्रेतायुगे भवेत् ॥२३३॥
कँ खँ गँ घँ ङँ चँ छँ जँ झँ ञँ दश तथा महेश्वरि।
इति ते कथितं भक्त्या राकिनीबीजमद्भुतम् ॥२३४॥
टँ ठँ डँ ढँ णँ तँ थँ दँ धँ नँ दशकं परमेश्वरि।
इति ते कथितं भक्त्या लाकिनीबीजनिर्णयम् ॥२३५॥
अधुना संप्रवक्ष्यामि काकिनीं सिद्धिदायिनीम्।
पँ फँ बँ भँ मँ यँ रँ लँ आर्णः श्रीवीरवन्दिते ॥२३६॥
कथितं काकिनीबीजं चतुर्वर्गफलप्रदम्।
अधुना संप्रवक्ष्यामि सुभगे शृणु शाकिनीम् ॥२३७॥
वँ शँ षँ सँ चतुवर्णं वाञ्छितार्थप्रदं प्रिये।
इदं तु शाकिनीबीजं चतुर्वर्गप्रदायकम् ॥२३८॥
अधुना संप्रवक्ष्यामि सुभगे शृणु हाकिनोम्।
हँ लँ क्षँ हाकिनीबीजं क्षिप्रं सिद्धिप्रदायकम् ॥२३९॥
सत्त्वस्वरूपिणीबीजं शृणु सिद्धिप्रदायकम्।
अँ आँ इँ ईँ उँ ऊँ ऋँ ॠँ लँ लॄँ एँ ऐँ ओँ औँ अँ अँः ॥२४०॥
षोडशार्णमहाबीजं सत्त्वमध्ये प्रकीर्त्तितम्।
रजःस्वरूपिणीबीजं शीघ्रसिद्धिप्रदायकम् ॥२४१॥
कँ खँ गँ घँ ङँ चँ छँ जँ झँ ञँ टँ ठँ डँ ढँ णँ तँ थँ।
इदं सप्तदशार्णं हि रजोमध्ये प्रकीर्त्तितम् ॥२४२॥
रम्यं तमोमयीबीजमधुना ते वदाम्यहम्।
दँ धँ नँ पँ फँ बँ भँ मँ यँ रँ लँ वँ शँ षँ सँ हँ क्षँ ॥२४३॥

इदं सप्तदशार्णं हि तमोमध्ये उदाहृतम् ।
अधुना संप्रवक्ष्यामि मातृकाबीजमद्भुतम् ॥२४४॥

अँ आँ इँ ईँ उँ ऊँ ऋँ ॠँ लृँ ॡँ एँ ऐँ ओँ औँ अँ अँः
कँ खँ गँ घँ ङँ चँ छँ जँ झँ ञँ टँ ठँ डँ ढँ णँ तँ थँ दँ धँ नँ
पँ फँ बँ भँ मँ यँ रँ लँ वँ शँ षँ सँ हँ क्षँ

इदं पञ्चाशदर्णं हि मातृकायाः प्रकीर्तितम् ।
अनुलोमविलोमेन पुटीकृत्य जपं चरेत् ॥२४५॥
लक्षं यावन्महेशानि ततः सिद्धो न संशयः ।
गुरुबीजं समुद्दिष्टं गुरुरित्यक्षरद्वयम् ॥२४६॥
डाकिनी राकिनी देवि लाकिनी काकिनी ततः ।
शाकिनी हाकिनी संज्ञा सत्त्वरूपा ततः प्रिये ॥२४७॥
रजोरूपा तमोरूपा मातृकारूपिणी गुरुः ।
एतास्तु परमेशानि मूर्त्तिः पञ्चाशदक्षरम् ॥२४८॥
डाकिनी च महादेवि अणिमासिद्धिदायिनी ।
राकिणी लघिमासिद्धिदायिनी लाकिनी तथा ॥२४९॥
प्राप्तिसिद्धिदायिनी च काकिनी काम्यदायिनी ।
शाकिनी महिमासिद्धिदायिनी हाकिनी ततः ॥२५०॥
कामावशायितासिद्धिं जपादेव प्रयच्छति ।
सत्त्वरूपा तमोरूपा रजोरूपा तथैव च ॥२५१॥
एताश्चैव महादेवि चतुवर्गं ददन्ति हि ।
पञ्चाशद्वर्णरूपा या निर्वाणं सा ददाति हि ॥२५२॥
गुरुर्ददाति सकलं ब्रह्माण्डज्ञानमव्ययम् ।
इति ते कथितं भक्त्या डाकिन्यादिविनिर्णयम् ॥२५३॥

डाकिनी राकिणी चैव लाकिनी काकेनी तथा ।
शाकिनी लाकिनी देवि वर्णानामत्र देवताः ॥२५४॥
गुणानां सिद्धिवर्णानां षडेता अधिदेवताः ।
डाकिन्यादेर्विना ज्ञानं वर्णे वर्णे पृथक् पृथक् ॥२५५॥
अज्ञानात् प्रजपेन्मन्त्रं डाकिन्यादेश्च भक्षणम् ।
विना वर्णपरिज्ञानं कोटिपुरश्चरणेन किम् ॥२५६॥
तस्य सर्वं भवेद् दुःखमरण्ये रोदनं यथा ।
शृणु ध्यानं प्रवक्ष्यामि डाकिनीनां शुचिस्मिते ॥२५७॥

ध्यानानि यथा—

शरच्चन्द्रप्रतीकाशां द्विभुजां लोललोचनाम् ।
सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम् ॥२५८॥
कृष्णाम्बरपरीधानां नानालङ्कारभूषिताम् ।
ध्यायेच्छशिमुखीं नित्यां डाकिनीमन्त्रसिद्धये ॥२५९॥
अरुणादित्यसंकाशां द्विभुजां मृगलोचनाम् ।
सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम् ॥२६०॥
शुक्लाम्बरपरीधानां नानाभरणभूषिताम् ।
ध्यायेच्छशिमुखीं नित्यां राकिनीमन्त्रसिद्धये ॥२६१॥
सिन्दूरवर्णसंकाशां द्विभुजां खञ्जनेक्षणाम् ।
सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम् ॥२६२॥
शुक्लाम्बरपरीधानां नानालङ्कारभूषिताम् ।
ध्यायेच्छशिमुखीं नित्यां लाकिनीमन्त्रसिद्धये ॥२६३॥
यवयावकसंकाशां द्विभुजां खञ्जनेक्षणाम् ।
सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम् ॥२६४॥
शुक्लाम्बरपरीधानां नानाभरणभूषिताम् ।
ध्यायेच्छशिमुखीं नित्यां काकिनीमन्त्रसिद्धये ॥२६५॥

शुक्लज्योतिप्रतीकाशां द्विभुजां मृगलोचनाम् ।
सिन्दूरतिलकोद्दीप्ताम् अञ्जनाञ्चितलोचनाम् ॥२६६॥
कृष्णाम्बरपरीधानां नीनालङ्कारभूषिताम् ।
ध्यायेच्छशिमुखीं नित्यां शाकिनीमन्त्रसिद्धये ॥२६७॥
शुक्लकृष्णारुणाभासां द्विभुजां लोललोचनाम् ।
भ्रमद्भ्रमरसंकाशां कुटिलालककुन्तलाम् ॥२६८॥
सिन्दूरतिलकोद्दीप्ताम् अञ्जनाञ्चितलोचनाम् ।
रक्तवस्त्रपरीधानां शुक्लवस्त्रोत्तरीयिणीम् ॥
ध्यायेच्छशिमुखीं नित्यां हाकिनीमन्त्रसिद्धये ॥२६९॥
त्रिगुणायाश्च देवेशि ध्यानं पूर्वमुदाहृतम् ।
अधुना संप्रवक्ष्यामि मातृकाध्यानमुत्तमम् ॥२७०॥
पञ्चाशल्लिपिभिर्विभक्तमुखदोःपन्मध्यवक्षस्थलीं
भास्वन्मौलिनिबद्धचन्द्रशकलामापीनतुङ्गस्तनीम् ।
मुद्रामक्षगुणं सुधाढ्यकलशं विद्याञ्च हस्ताम्बुजै-
र्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये ॥२७१॥
गुरोरपि महेशानि पूर्वोक्तध्यानमाचरन् ॥
पाद्यादिभिर्वरारोहे संपूज्य प्रजपेन्मनुम् ।
पूर्वोक्तो यस्य यद्बीजं यन्मन्त्रस्तस्य निर्णयम् ॥२७२॥
अं डाकिन्यै नमः स्वाहा कं काकिन्यै नमस्ततः ।
टं लाकिन्यै नमः स्वाहा पं काकिन्यै नमस्ततः ॥२७३॥
वं शाकिन्यै नमः स्वाहा हं हाकिन्यै नमस्ततः ।
तत्तद्ध्यानेन इत्युक्त्वा पूजयेदुपचारतः ॥२७४॥
उक्तबीजेन पुटितं कृत्वा मन्त्रं जपेद् यदि ।
तदा सिद्धो भवेन्मन्त्रो शापादिदोषदूषितः ॥२७५॥

इति ते कथितं दिव्यं कलिकालस्य सम्मतम् ।
कलौ भारतवर्षे च नान्यद्वर्षे कदाचन ॥२७६॥
शमादिषोडशभाण्डारं डाकिनीसिद्धिसंयुतम् ।
चण्डिकादिदशभाण्डारं काकिनीसिद्धिसंयुतम् ॥२७७॥
शमादिदशभाण्डारं लाकिनीसिद्धिनिर्णयम् ।
गदादिदशभाण्डारं काकिनीसिद्धिनिर्णयम् ॥२७८॥
कल्याणीत्यादिकीर्त्यन्तं शाकिनीसिद्धिनिर्णयम् ।
बद्धादिविलक्षणान्तं हाकिनीसिद्धिनिर्णयम् ॥२७९॥
गुरुदेवं विना भद्रे निष्फलं श्रमकेवलम् ।
कलिकाले वरारोहे कलहं गुरुशिष्ययोः ॥२८०॥
भविष्यति न सन्देहः प्रहारं गुरुशिष्ययोः ।
इति ते कथितं सर्वं कालिकायाः सुदुर्लभम् ॥२८१॥
कालिका भैरवो देवो जागर्ति हि सदा कलौ ।
तारा चैव महाविद्या तथा त्रिपुरसुन्दरी ॥२८२॥
धनदा छिन्नमस्ता च मातङ्गी बगलामुखी ।
त्वरिता अन्नपूर्णा च तथा वाग्वादिनी प्रिये ॥२८३॥
महिषघ्नी विशालाक्षी तारिणी भुवनेशिका ।
धूमावती भैरवी च तथा प्रत्यङ्गिरादिकाः ॥२८४॥
दुर्गा शाकम्भरी चैव कलिकाले हि निद्रिता ।
एतासां जपमन्त्रेण निद्राभङ्गोऽभिजायते ॥२८५॥
निद्राभङ्गे कृते देवि सिद्धिहानिश्च जायते ।
किं तासां जपपूजायां हानिः स्यादुत्तरोत्तरम् ॥२८६॥
ब्राह्मणे क्षत्रिये वैश्ये शूद्रे विद्या प्रशस्यते ।
सत्यादि च चतुर्युगे सर्वजातिषु कालिका ॥२८७॥

प्रशस्ता कालिका विद्या अस्याश्च फलबोधिका ।
उपायांस्तत्र वक्ष्यामि येन सिद्धिः प्रजायते ॥२८८॥
सहस्रं डाकिनीमन्त्रं निशायां प्रजपेद् यदि ।
बहुकाले तदा सिद्धिर्जायते नात्र संशयः ॥२८९॥
स्त्रीशूद्राणां पुरश्चर्या नास्ति भद्रे कदाचन ।
जपपूजा सदैवासां प्रशस्ता वीरवन्दिते ॥२९०॥
चन्द्रसूर्योपरागे च शूद्राणां सिद्धिरुत्तमा ।
जायते सुभगे मातर्गुरुभक्तिर्भवेत् यदि ॥२९१॥
तदा सिद्धिमवाप्नोति गुरुभक्त्या विशेषतः ।

इति दक्षिणाम्नाये श्रीकङ्कालमालिनीतन्त्रे पञ्चमः पटलः समाप्तः ॥

ग्रन्थश्च समाप्तः

॥ श्रीः ॥

## तन्त्रसङ्ग्रहस्य तृतीयो भागः

# गन्धर्वतन्त्रम्

## श्लोकार्धसूची

आ

ई

जा

पा

मां



मि

---

# मुण्डमालातन्त्रं प्रथमम्

# द्वितीयं मुण्डमालातन्त्रम्

# कामाख्यातन्त्रम्

# सनत्कुमारतन्त्रम्

# भूतशुद्धितन्त्रम्

# कङ्कालमालिनीतन्त्रम्

# सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्याभिनवप्रकाशनानि



---


प्रकाशकः—निदेशकः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी–२२१००२.

मुद्रकः—मुद्रणालय–व्यवस्थापकः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी-२२१००२.